ग्न्यस्त्युपायी[1] । न दर्शमौमतिप्रवसति । न[2] पर्वणि । व्रतकाले व्रतं चरति । विहारमभिमुखो ऽग्नीनुपतिष्ठत इहैव सन्तस्त्र सतो वो अग्नय इति च । यद्यनुपस्थाय प्रवसेदेतामेव विहारमभिमुखो जपेत्प्रोष्य[3] समिधो धारयञ्छदिर्दर्शे कंचिदप्यनादृत्याग्नीन्प्रतीयादिश्वदानीमाभरन्त[4] इति विहारमभ्येत्याग्नीनामसकाशे[5] वाचं यच्छति सकाशे विसृजते । ऽग्नीन्समाधेहीति संप्रेष्यति । मम नाम तव च जातवेद इत्याहवनीयमुपतिष्ठते । नमो ऽग्नये ऽप्रतिविद्धायेति गार्हपत्यं । त्वमग्ने व्रतपा असीत्यन्वाहार्यपचनमयमग्निः श्रेष्ठतम इति पुनराहवनीयं च । व्रतभ्रेषे मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात्प्रवत्स्यन्प्रोष्यागतश्च[6] विराड्मैरेवोपतिष्ठत इत्येके । प्रवत्स्यतो[7] ऽध्वर्युरग्नीन्स समिन्द्ध इत्याहुः । कः श्रेयांसं विष्णुं बोधयिष्यतीत्यसमिन्धानो ऽभयंकराभयं[8] मे कुरु स्वस्ति मे ऽस्तु प्रवत्स्यामीति प्रवत्स्यन्नुपतिष्ठते ऽभयंकराभयं मे ऽकार्षीः स्वस्ति मे ऽस्तु प्रावात्समिति[9] प्रोष्यागतस्तूष्णीमेवाग्नीन्प्रणम्य

---

१ विसृजतेऽध्यग्न्य० BMLG ; विसृजेय: ग्न० H वाचंयमः प्रवसेदसकाशे विसृजतेऽध्यग्न्य० ATV.

२ स M.

३ प्रेष्य MHB प्रोष्य L.

४ कचिदप्यनादृत्या० MVTL ; ०दर्शेकश्चि(द)प्यनादृत्या० GB ; दिशोन्नकचिदप्यनडुत्यो H ; स्वनादृत्य A and the Vyākhyā.

५ ०भ्येत्यग्नी० RHBA (read perhaps भ्येत्याग्नी०,.

६ Thus G ; प्रवत्स्यन्प्रोष्यमागतश्च H, प्रवत्स्यन्प्रोष्यन्नागतश्च AB प्रवत्स्यन्नागतश्च MLV ; प्रवत्स्य प्रवासोपस्थानं नागतश्च T and second hand of V.

७ Thus AHGB and the Vyākhyā ; ०त्स्यते MLTV.

८ ०मिंधानोवाभय० AHGB.

९ Thus L ; प्रवात्सीदिति H ; प्रवत्स्यामीति L ; M is incomplete here ; प्रवत्स्यमिति the Vyākhyā (one copy) ; प्रावात्स्यमिति another copy. प्रवात्स्यमिति AB. प्रवात्सीमिति G, प्रावात्स्यमिति TV

प्रवसेदित्येके । गृहा मा बिभीतेति पञ्चभिर्गृहानभ्येति । पूर्वसंजातमपराधमस्य तदहर्निवेदयेयुः[1] स चैतान्नापवदेत[2] । गृहानहमिति संविशति । विश्वा उत त्वया वयमिति पत्नीं समीक्षते । ॥ १० ॥

अथ सगृहः प्रवत्स्यन्यत्र पञ्च नव दश रात्रीः[3] संहिता वसति[4] यत्र वा नवरात्रं वास्तु कुतश्चित्कारणात्पुनरभ्येत्येकामुषित्वा[5] प्रवत्स्यन्वास्तोष्पतीयं[6] जुहुयाद्यदनोवाह्यं[7] भाण्डं स्यात्सर्वमनस्यादधाति यद्वोढुमशक्यं स्यात्तदहुत एवोपोद्धरन्त्यग्निष्ठस्य दक्षिणो युक्तो भवति सव्यो ऽयुक्तो ऽथ वास्तोष्पत इत्यनुद्रुत्योत्तरया गार्हपत्ये जुहोति । न हुते ऽभ्यादधाति । न हीनमन्वाहरन्ति । नावक्षाणान्यसंप्रक्षाप्य[8] प्रयान्त्ययं ते योनिर्ऋत्विय इति पृथगरणीष्वग्नीन्समारोपयते ऽपि वा या ते अग्ने यज्ञिया तनूरित्यात्मनि[9] हस्तं प्रताप्य वा मुखाया-

---

१ तदहर्ननिवे० GBVT.

२ चैतांतापव० H, चैतान्नापचदेत G, चैतान्नावपदेत T, चैतान्नापवदेत BV.

३ Thus G, रात्रिभिः the other Mss.

४ वसतिः ML and the Vyākhyā, cp. Hir. III. 20.

५ पुनरभ्यवेत्ये० GH, पुनरभ्येति L, पुनरभ्यवैति A, पुनरभ्येत्ये० VT; पुनरभ्यवत्येकामुषि० B.

६ ०ष्पति MLATV, ०ष्पतिर्जु० B.

७ जुहोति AHGB, जुहुयाद् MLTV and the Vyākhyā.

८ Original reading uncertain; नापक्षाणान्यग्नीश्वनुप्रक्षाप्य ML, नापक्षाणान्यग्नावनुप्रक्षाप्य TV, नावक्षाणान्यग्नौ संप्रक्षाप्य A; नावक्षाणानन्यसंप्राप्य G; नावक्षाणानन्यस्य प्राप्य B; नावक्षाणानलेग्नौ संत्राप्य H.—cp. Hir. III. 20, Āp. VI. 28. 8.

९ वा ins. ML

हरत[1] उपावरोह जातवेद इत्यात्मन्याहृढमरण्योरुपावरोह्य[2] प्रागस्तमयान्मन्थेदपि वा लौकिके ऽग्नावुपावरोहेत्युपावरोहयत[3] इदं श्रेय इत्यवसिते जुहोति जुहोति ॥ ११ ॥

इति श्रौतसूत्रे द्वितीयः प्रश्नः ॥

---

१ प्रताप्यावाङ्मुखा०. HG, प्रताप्य वा मुखा ०MLATB.—०हरति M, ०हरत LHAGTBV; read perhaps अवहरत instead of आहरत।

२ ०रोह्य GMLTV; ०रोप्य HAB.

३ ०रोहयति। ML ०रोहयतीदं TV (B useless).

सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ । तान्युगपत्कामयेतापि वा पृथक्कामः पृथगाहरे।द्दर्शपूर्णमासाभ्यां यावज्जीवं यजेत[1] त्रिंशतं वा वर्षाणि जीर्णो वा विरमेदित्येके । ताभ्यां परमामेव काष्ठां गच्छतीति विज्ञायते । तौ समानोपदेशौ । वचनाद्व्यवतिष्ठेते । यजमानस्यैव समस्ते क्रतौ श्रूयमाणं[2] कामानां कामनं ब्रह्मचर्यं द्रव्योपस्थापनं[3] दक्षिणादानमकर्मकरणं मन्त्राः प्रत्यगाशिष।श्चन्द्र-मसमूनं[4] पूर्णं वा विज्ञाय पूर्वस्मिन्पर्वणि पौर्णमासेन[5] यक्ष्य इत्युक्त्वा केशश्मश्रूणि[6] वापयित्वोपवसति । चन्द्रमसं दृष्टमदृष्टं वा विज्ञाय चैव[7] दर्शेन यक्ष्य इत्युक्त्वोपवसत्यध्वर्युः प्रातरग्निहोत्रं हुत्वानुगमयित्वापोद्धृत्य वोदित आदित्ये ध्यायन्नारायणं विष्णोर्नु कमिति जपित्वा गार्हपत्यादाहवनीयमुद्धृत्याहवनीयायतनेऽग्निं प्रतिष्ठाप्य[8] देवा गातुविद इति जपित्वा ममाग्ने वर्च इति समिधमन्वादधाति[9] । ॥ १ ॥

---

१ Thus GB; यजते MHLATRV.

२ Thus A; श्रूयमाणोपि M; श्रूयमाणः H; श्रूयमाणाः का० RB: श्रूयमाणासि L; ०माणानि TV; श्रूयमाणाः कामाः ब्रह्मचर्यं G.; cp. Hir. VI. 1 (page 494).

३ Thus AG and the Vyākhya, one copy; (and cp. Hir. l.c. द्रव्यप्रकल्पन), द्रव्योपस्थानं the other Mss. and the Vyākhya, another copy.

४ Thus AGRT: चंद्रमून पूर्णं वा BML; चन्द्रमससमानं पूर्णं वा H.

५ पौर्णमास्यां पूर्णमासेन MLTV; पूर्णमासेन A (without the preceding पौ०); पौर्णमास्येन G; पौर्णमास्या H; पौर्णमासेन the Vyākhya.

६ श्मश्रुरोमाणि M only.

७ ०वं LGMTV.

८ The words आहवनीयायतनेऽग्निं प्रतिष्ठाप्य are given by BHG after गातुविद इति जपित्वा; they are not found in LATV.

९ Thus AMLBVG; आदधाति H; अन्वादध्यात् T.

यजमानो ऽग्निं गृह्णामि सुरथं वसून्रुद्रानिमामूर्जमिति चीनाहवनीये ऽन्वाधीयमाने जपति पौर्णमासं हविरिति पौर्णमास्याममावास्यं हविरित्यमावास्यायामन्तराग्नी पशव इत्यन्तराग्नी तिष्ठञ्जपत्यध्वर्युर्मम देवा इति गार्हपत्यमन्वादधातीह प्रजा इह पशव इति द्वौ यजमानो जपत्यध्वर्युर्मयि देवा इत्यन्वाहार्यपचनमन्वादधात्ययं पितृणामिति यजमानो जपति । व्याहृतीभिरन्वादधातीत्येके । ऽजस्रं त्वाऽ सभापाला इत्यध्वर्युः सभ्यमन्वादधाति । तमेव यजमानो जपत्ययमावसथीयमित्यध्वर्युरावसथ्यमन्वादधाति तमेव यजमानो जपत्यध्वर्युणान्वाहितेष्विदमहमग्निज्येष्ठेभ्य इत्युत्तरत उपविश्य जपति । पयस्वतीरोषधय इति प्राग्बर्हिषः पौर्णमास्यां दम्पती माषमांसवर्जं सर्पिषा दध्ना पयसा वा मिश्रमश्नीतः प्राग्वत्सेभ्यो ऽमावास्यायां । कामं सुहितौ स्यातां । विद्युदसीत्यप उपस्पृश्यापरेणाहवनीयं दक्षिणातिक्रम्य पयस्वतीरोषधय इत्यप आचामति । देवा देवेषु पराक्रमध्वमिति देवता उपतिष्ठते । ऽग्ने व्रतपत इति पञ्चभिराहवनीये समिधो ऽभ्यादधाति । समुद्रं मनसा ध्यायन्नग्ने व्रतपते व्रतं चरिष्यामीति पञ्चभिर्यथालिङ्गं देवता उपतिष्ठमानो व्रतमुपैति । सम्राडसीत्यादित्यमुपतिष्ठते । यद्यस्तमिते व्रतमुपेयादाहवनीयमेवैतेनोपतिष्ठते । पर्वणि यजमानः स्वयमग्निहोत्रं जुहोति यवाग्वामावास्यायां संनयन्नग्निहोत्रोच्छेषणमातञ्चनाय निदधाति । सत्यवाद्यस्त्युपायी सायमाशे ग्राम्यानुपवसत्यारण्यस्याश्नात्यपो वाश्नाति न वा किंचन । येन प्रातर्यक्ष्यमाणः स्यात्तन्नाश्नीयात् । ॥ २ ॥

उपेतव्रतस्य संनयतो ऽध्वर्युः संगव इषे त्वेति बहुपर्णां बहुशाखामशुष्काग्रां प्राचीमुदीचीं वा पलाशशाखां शमीशाखां वाच्छिनत्त्यूर्जे त्वेत्यनुमार्ष्टि संनमयति वेमां प्राचीमित्याहरति वायवः स्थेति तया त्र्यवरान्वत्सानपाकरोति। सदर्भया तयेत्येके दर्भैर्वा। देवो व इति त्र्यवरा वत्समातृगोचरमभि[1] प्रेरयति। शुद्धा अप इति प्रेरिता अनुमन्त्रयते। ध्रुवा अस्मिन्निति यजमानमीक्षते। ऽग्रेणाहवनीयं प्रदक्षिणं शाखामाहृत्यापरेण गार्हपत्यं यजमानस्य पशून्पाहीत्यग्निष्ठे ऽनसि मेखलायां वा निदधाति। देवस्य त्वेत्यश्वपर्शुमसिदं वादाय यज्ञस्य घोषदसीत्यभिमन्त्रयते गार्हपत्यं वोपतिष्ठते। प्रत्युष्टमिति तस्मिन्निष्टपति। प्रेयमगादित्युर्वन्तरिक्षं प्रेहीति[2] चाहवनीयमभिप्रैति। ॥ ३ ॥

इह बर्हिरासद इति वेदिं प्रत्यवेक्षते। यत्र बर्हिर्दास्यन्भवति तां दिशमेत्य[3] विष्णोः स्तूपो ऽसीत्येकं स्तम्बमुत्सृज्य[4] देवानां परिषूतमसीत्यन्यं परिषौति। पशूनां त्वा भागमुत्सृजामीति परिषूतस्यैकां दर्भनाडीमुत्सृज्येदं देवानामिति परिषूतमभिमृश्येदं पशूनामित्युत्सृष्टमभिमृश्य देवस्य त्वेति परिषूतमभिगृह्य देवेभ्यस्त्वेत्यूर्ध्वमुन्मृज्य देवबर्हिरित्यसिदं निधाय या

---

१ ०वरान्वत्सान्मातुर्गो० M; ०वरान्वत्समातृगो० H and R (but with ०गो०); ०वरावसमात्यगो च० L; वरान् वत्समातृगो० A; ०वरान् समातृन्दो० (?) G; वरा वत्समाचागोगच० TV.

२ प्रेहीति च MLVGT; प्रेहीति HRB.

३ ०मेत्य THABG; ०मवेत्य MLV.

४ स्तम्ब० GHABR; स्तम्भ० MLTV.

जाता इत्यभिमन्त्र्याच्छेत्ता त इत्याच्छिन्दन्संनखं मुष्टिं दाति[१] । स प्रस्तर । एतयैवावृता परिषवणोत्सर्जनवर्जमितरांस्त्रीन्पञ्च सप्त वा मुष्टीन्निधनानि वा दाति यावदाप्तं भवति[२] । देवबर्हिरित्याव्रश्चनान्यभिमृशति । सहस्रवल्शा इत्यात्मानं प्रत्यभिमृश्यादित्यै रास्नासीति प्रदक्षिणं शुल्बमावेष्ट्यायुपिता योनिरिति त्रिधातु पञ्चधातु वा प्रतिदधाति । धातौ धातौ मन्त्रमावर्तयति । पृथिव्याः संपृचः पाहीति शुल्बं प्रागग्रमुदगग्रं वास्तीर्यापरिमितानामित्यभिमन्त्र्य सुसंभृता त्वेति यथालूनं[३] शुल्बे मुष्टीन्निधनानि[४] वा संभरत्यलुभिता योनिरित्युत्तमे प्रस्तरमपां मेध्यं यज्ञियमिति पितृभ्यः समूलमुपमूललूनं[५] वा सकृदाच्छिन्नं बर्हिराच्छिद्य तूष्णीं संभरति परिभोजनीयं[६] चेन्द्राण्यै संनहनमिति सर्वान्संनह्य पूषा त इति प्रदक्षिणं ग्रथ्नाति । स ते मास्थादिति पश्चात्प्राञ्चं ग्रन्थिमुपगूहत्यापस्त्वामश्विनाविति स्पृशतीन्द्रस्य त्वेत्युद्यम्य बृहस्पतेरिति शीर्ष्णा हरत्युर्वन्तरिक्षमन्विहीति प्रत्येत्यादित्याः सद इत्यपरेणाहवनीयमनधः सादयति । देवंगम-

---

१ Thus TV; ददाति AMLBHG.

२ मुष्टीन् निधनानि वा ददाति यावदाकू(क्र)त भवति MB; मुष्टीनिदधाति वा त्वासदेहरणमूर्णाहरण बर्हिराहरण वात यावदासभवति H; ALG as M, but यावदाप्त भवति; वा दाति यावदप्त भवति TV.

३ Thus ALGTV and a citation in the Vaijayantī; यथाभागं M; यथालभवन H.

४ मुष्टिं निध० MHLG; VTB मुष्टिन्निध० A.

५ Thus AG; ०पमूललूनं H; समूललूनं MLBTV.

६ Thus G only (and cp. V. 9); परिभोजनी ATVH and the Vyākhyā; परिभोजनं MLB. (Baudh. uses परिभोजनीयानि). The Vyākhyā explains परिभोजनिग्रहणं परिस्तरणानामुत्तपराज्यस्य प्रदर्शनं ।

मसीत्यभिमन्त्र्यादित्यास्त्वा पृष्ठे सादयामीति गार्हपत्यदेश उपरीव[1] निदधाति । ॥ ४ ॥

तूष्णीं त्रिधातु शुल्बं कृत्वा यत्कृष्णो रूपमिति पालाशेन खादिरेण याज्ञिकैर्वा वृक्षैरेकविंशतिदारुमिध्मं संभृत्य कृष्णो ऽस्याखरेष्ठ इति संनह्य पूषा त इति प्रदक्षिणं ग्रन्थिं कृत्वा बर्हिःकल्पेन[2] बर्हिषा सह निदधाति । वेदो ऽसीति वत्सज्ञुं[3] त्रिवृच्छिरसं[4] दार्भं वेदं कृत्वाग्रात्प्रादेशे परिवासयति । परिवासितानि वेदाग्राणीध्मप्रव्रश्चनैः सह निदधात्यत्रामावास्यायां वेदिं[5] कृत्वेध्माबर्हिराहरेदित्येके[6] । ऽन्तर्वेदि शाखायाः पर्णानि प्रच्छिद्य मूलतः शाखां परिवास्योपवेषो ऽसि यज्ञायेत्यपरेण गार्हपत्यं मूलमुपवेषाय निदधाति । तृतीयस्यै दिव इति परिवासनशकलमादाय सुरक्षितं निधाय वसूनां पवित्रमसि शतधारमिति शाखायां[7] त्रिवृद्दर्भमयं पवित्रं कृत्वा त्रिवृत्पलाशे दर्भ इति शाखायां शिथिलं मूले मूलान्यग्रे ऽग्राण्यवसजति । न ग्रन्थिं करोत्यग्न्यगारे ऽग्न्यायतनानामुपलेपनादि[8] देवार्हाण्यलंकरणानि[9] दम्पती चालंकुर्वाते । ॥ ५ ॥

---

१ Thus AGBH; उपरिव TV and Vyākhyā (one copy); उपरि ML and Vyākhyā (another copy).

२ Thus GTV and Vyākhyā; ०शकलेन AMBH.

३ Thus B; वत्सज्ञं LTV; वसज्ञू A; वत्सं MGH.

४ वा ins. A only (rightly ?).

५ वेदं GA only.

६ इत्येके om. AGHB.

७ शाखया G only.

८ ०दीनि LMTV; Vyākhyā points to ०नादि.

९ Thus BAGLV; ०देवार्चण० T; देवाकाण० M; देवकान्य० H; देवार्हैरलंकारैः the Vyākhyā.

अत्रोपवसथे ऽमावास्यायामपराह्णे ऽधिवृक्षसूर्ये वा पिण्डपितृयज्ञेन यजते । हुते सायमग्निहोत्रे वैकङ्कतीमग्निहोत्रहवणीं कुम्भीमुपवेषं शाखापवित्रमभिधानीं निदाने दोहनं दारुपात्रमयस्पात्रं वैतानि[1] सांनाय्यपात्राणि प्रक्षाल्योत्तरेण गार्हपत्यं दर्भैरन्तर्धायावाचीनानि प्रयुनक्ति । समावग्रवन्तौ दर्भौ प्रादेशमात्रौ पवित्रे कृत्वा पवित्रे स्थ इति छिनत्ति न नखेनेमौ प्राणापानावित्यभिमन्त्र्य विष्णोर्मनसा पूते स्थ इत्यद्भिरनुमृज्य गां दोहपवित्रे इति संप्रेष्यत्यग्निहोत्रहवण्यां पवित्रान्तर्हितायामप आनीय देवो व इति पच्छो गायत्र्योदगग्राभ्यां पवित्राभ्यां त्रिरुत्पूयापो देवीरित्यभिमन्त्रयत[2] उत्तानीकृत्य[3] पात्राणि शुन्धध्वमिति[4] प्रोक्षति । सुरक्षिते पवित्रे निधायैता आचरन्तीति गा आयतीः प्रतीक्ष्य निष्टप्तमिति[5] सांनाय्यपात्राणि प्रतितप्य धृष्टिरसीत्युपवेषमादाय भूतकृतः स्थेति गार्हपत्यादुदीचो ऽङ्गारान्व्यूह्य मातरिश्वन इति तेषु कुम्भीमधिश्रित्य भृगूणामङ्गिरसामिति प्रदक्षिणमङ्गारैः पर्यूहति । ॥ ६ ॥

वसूनां पवित्रमसि शतधारमिति कुम्भ्यां शाखापवित्रं

---

१ Thus supplied and emended; निदाने दोहनमयस्पात्र वै॰ GA; निदाने दोहने दोहनमयस्पात्रं वै॰ MLTV. AH and B are incomplete. It is impossible that two dohanapātras are meant, whilst the word वा seems to prove that a word has fallen out. Cp. Āp. I. 11. 5 and below, III. 8. 39 5.

२ GBH ॰मन्त्रयते शुल्व उत्ता॰. Incomprehensible.

३ Thus MAGB; ॰कृत्वा H; उत्तानानिकृत्य LTV

४ त्रिः ins. G only.

५ गार्हपत्ये ins. G only; cp. Āp. I. 12. 1. As the Vyākhyā mentions the word, it may belong to the text.

प्रागग्रं सायमधिनिदधाति वसूनां पवित्रमसि सहस्रधारमित्युदीचीनाग्रं प्रातः । कुम्भीमन्वारभ्य वाचंयमः पवित्रं[1] धारयन्नास्ते । उपसृष्टां मे प्रब्रूतादिति संप्रेष्यत्युपसृजामीत्यामन्त्र्यादित्यै रास्नासीत्यभिधानीमादत्ते । पूषासीति वत्समुपसृजति । विहारं गां चोपसृष्टामन्तरेण मा संचारिष्टेति संप्रेष्यति । यद्यन्तरेण[2] संचरेत्सांनाय्यं मा विलोपीति जपेदयक्ष्मा वः प्रजया संसृजामीत्यभिमन्त्रयत । ऊर्जं पय इति दोग्धोपसीदति । द्यौश्चेममिति दुह्यमानामनुमन्त्रयत उत्सं दुहन्ति कलशमिति धाराघोषं हुतः स्तोको हुतो द्रप्स इति विप्रुषः स्वाहा द्यावापृथिवीभ्यामिति स्कन्नान् । कामधुक्ष इति पयः प्रत्याहरन्तं दोग्धारं पृच्छत्यमूं यस्यामिति दोग्धा प्रत्याह । सा विश्वायुरिति गामध्वर्युरुपस्तौति । देवस्त्वा सवितेति पयः कुम्भ्यामानयति । कामधुक्ष इत्याह तृतीयस्या इत्युक्ते । सा विश्वव्यचा इति द्वितीयां सा विश्वकर्मेति तृतीयामुपस्तौत्येवं तिस्रो दोहयित्वा बहु दुग्धीन्द्राय देवेभ्य इति त्रिः संप्रेष्यतीन्द्रयाजिन इन्द्रमुपलक्षयेन्महेन्द्रयाजिनो महेन्द्रं । विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति । ॥ ७ ॥

सर्वासु दुग्धासु दोहने ऽप आनीय द्यौश्चेमं यज्ञमिति संक्षाल्य संपृच्यध्वमिति कुम्भ्यामानीय श्रपयित्वा तूष्णीकेन घृतेनाभिघार्य दृंहस्व गा इति कर्षन्निवोदगुदासयति । शीतीकृत्य[3]

१ पवित्रं वा AMLT ; पवित्रमपान्वारभ्य० G. Cp. Āp. I. 12. 6.

२ स यद्यन्तरेण G only.

३ शीतीकृत्या MLTV ; शीतीकृत्वातनक्ति A, and equally G with इति after it ; शीतिकृत्यातनवमीति H points to the same.

यत्पूर्वेद्युर्दुग्धं दध्येकस्या द्वयोस्तिसृणां वा गवां द्व्यहे त्र्यहे वा संततमभिदुग्धमौपवसथाद्धविरातञ्चनमुपकॢप्तं[1] तेन दध्ना सोमेन त्वातनच्मीत्यातनक्ति। यज्ञस्य संततिरसीत्यग्निहोत्रोच्छेषणमन्वातच्यायं पय इति पर्णवल्कमन्वातनक्ति तण्डुलैः पूतिकैरोषधीभिः कलैर्बदरैर्वापो हविष्ष्वित्ययस्पात्रे दारुपात्रे वाप आनीयादस्तमसि विष्णवे त्वेत्यपिदधाति। यदि मृन्मयं तृणं काष्ठं वानुप्रविध्येदिमौ पर्णं च दर्भं चेति विमुच्य शाखापवित्रं सुरक्षितं निधाय विष्णो हव्यꣳ रक्षस्वेति सांनाय्यं गार्हपत्यदेश उपरीव गुप्तं निदधाति। ॥ ८ ॥

पूर्वया शाखयान्यामाहृत्य वा प्रातर्दोहाय वत्सानपाकरोत्युपधाय कपालानि प्रातर्दोग्धि यथा सायं। नातनक्ति। नासोमयाजी[2] संनयेदसोमयाज्यपीत्येक। ऐन्द्रं सांनाय्यं। सोमेनेष्ट्वा महेन्द्रं यजेतापि वा संवत्सरमेवेन्द्रमिष्ट्वाग्नये[3] व्रतपतयेऽष्टाकपालं निरुप्य कामं महेन्द्रं यजेतौर्वो भारद्वाजो गौतमः शुश्रुवान् ग्रामणी राजन्य इति सर्वत्र कामं महेन्द्रं यजेरन्परिस्तृणीतेति दर्भैरग्नीन्परिस्तृणात्यारण्यानश्रित्वा[4] यजमान उभावग्नी इति परिस्तीर्यमाणेषु जपत्याहवनीयागारे गार्हपत्यागारे वाधः शयीतामावास्यां[5] रात्रिं जागर्त्यपि वा यथाशक्ति जागरणं।

---

१ ०मौपवस० all the Mss., as Hir., whilst Āp. I 13. 12 has ओपव

२ Thus H; एवं सोमयाजी MLAGTV.

३ संवत्सर द्वौ वेन्द्रमिष्ट्वा० G; सवत्सरचिद्वे वेन्द्रमिष्ट्वा० B.

४ Original reading uncertain: आरण्यानश्रित्वा ABTVH; आरण्येनश्रित्वा ML; अरण्यानश्नीतापो वाश्नाति वा G.

५ ०वास्यायां G, as Āp; the other Mss. agree with Hir.

व्रतचारी त्वेव स्यान्न विहारादपपर्यावर्तेत तत्सर्वममावास्यायां[१] । पौर्णमास्यां तु पूर्वेद्युरग्न्यन्वाधानमिध्माबर्हिर्वेदं[२] च करोतीत्यग्नि-परिस्तरणं च । सद्यो वा सर्वं भवति भवति । ॥ ९ ॥

इति श्रौतसूत्रे तृतीयः प्रश्नः ॥

---

१ Emended (cp. Āp. XXIV. 2. 11, 12); अभिपर्यावर्तेत AGBLTV; अपिपर्या० M; अतिपर्या० H.

२ Thus AGHLTV; वेदिं MB.

श्वो भूते प्रातरग्निहोत्रं हुत्वोदित आदित्ये पौर्णमास्यास्तन्त्रमारभते प्रागुदयादमावास्यायां । दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजो ब्रह्मा होताध्वर्युरग्नीदिति[1] । कर्मणे वामिति पाणिं प्रक्षाल्य यज्ञस्य संततिरसीति गार्हपत्यात्संततमाहवनीयादुलपराजिं स्तृणाति तूष्णीं दक्षिणामुत्तरां च[2] । दक्षिणेनाहवनीयं ब्रह्मयजमानयोरासने करोति पूर्वं ब्रह्मणेऽपरं यजमानयोत्तरेण गार्हपत्यं दर्भान्संस्तीर्य यज्ञायुधानि द्वन्द्वं न्यञ्चि सादयति[3] स्फ्यं च कपालानि चाग्निहोत्रहवणीं च शूर्पं च कृष्णाजिनं च शम्यां चोलूखलं च मुसलं च दृषच्चोपलां[4] चेति[4] पञ्च द्वन्द्वानि खादिरं स्रुवं पालाशीं जुहूमाश्वत्थीमुपभृतं वैकङ्कतीं ध्रुवां वेदं पात्रीं मेक्षणं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पञ्च द्वन्द्वान्याज्यस्थालीमन्वाहार्यस्थालीमश्मानं[5] सांनाय्यपात्राणि संनयतः कुम्भीं शाखापवित्रमुपवेषमभिधानीं निदाने दोहनं च[6] पूर्वेद्युः कृते पवित्रे चाष्टौ दारुपात्राणि यान्यहोमार्थानि[7] तानि वारणानि येन चार्थोऽत्र यजमानो भूपते भुवनपत इति ब्रह्मिष्ठं ब्रह्माणं वृत्वापरेणाहवनीयं दक्षिणातिक्रम्य दक्षिणत उदङ्मुख उपविशति । ॥ १ ॥

---

१ ०ग्नीध्र इति GL.

२ Thus LTV and Vyākhya, दक्षिणां तूष्णीमुत्तरां AGBH, and M, but the last ०त्तरां च.

३ संसादयति AB.

४ To this (ungrammatical) reading (cp. TS. I. 6. 8. 3) point AGB: दृषच्चोपलाश्चेति; दृषच्चोपलाश्चेति TV; दृषच्चोपलश्चेति LM.

५ After आज्यस्थालीम् G ins. निर्वपणस्थालीम्

६ दोहनमयस्पात्रं च HG, similarly B.

७ दारुमयानि ins. AMGTBV

वृतो ब्रह्मा सुप्रक्षालितपाणिपाद आचान्तो ऽपरेणाहवनीयं दक्षिणातिक्रम्य दक्षिणतस्तिष्ठन्नमो ब्रह्मण इति ब्रह्मसदनमुपस्थायाहे दैधिषव्येति सदनात्तृणं निरस्योन्निवत उदुद्वतश्च गेषमित्युपविश्य पातं मा द्यावापृथिवी इति द्यावापृथिवी समीक्ष्य भूर्भुवः सुवः क इदं ब्रह्मेत्यहं भूपतिरित्येतौ जपित्वा संस्थानादास्ते[1] । मन्त्रवत्सु कर्मसु वाचं यच्छति । यदि व्याहरेद्वैष्णवीमृचं व्याहृतीश्च जपित्वा वाचं यच्छत्यध्वर्युरक्षासंनयतः पवित्रे कृत्वा दक्षाय त्वेति प्रणीताप्रणयनं चमसमादाय वानस्पत्यो ऽसीत्यद्भिस्त्रिः[2] प्रक्षालयति । गोदोहनेन पशुकामस्य प्रणयेन्मृन्मयेनान्नाद्यकामस्य कंसेन[3] ब्रह्मवर्चसकामस्यापरेण गार्हपत्यं पवित्रान्तर्हिते चमसे को वो गृह्णाति स वो गृह्णात्वित्यप आनयत्यनया वो[4] गृहीष्यामीति[5] पृथिवीं ध्यायन्नद्भिः पूरयित्वा देवो व इति पूर्ववदुत्पूयाभिमन्त्रयते । ॥ २ ॥

ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यति । प्रणय यज्ञमिति ब्रह्मणा प्रसूतः प्रणयन्वाचं यच्छत्या हविष्कृतो यजमानस्य । को[6] वः प्रणयति स वः प्रणयत्विति[6] स्फ्येनोपयम्य

१ Thus GB; जप्त्वा सं० H; जपत्या सस्था० AMLTV.

२ Thus G; ०सीतितिस्रभिः B; ०सीतितिस्रः H; ०सीतिस्रभिः M; ०सीतित्रिः प्रक्षालयति A; ०सीति प्र० T; सीति प्रक्षाल्य TV.

३ कांस्येन MLTB.

४ Thus GH; पो MBLATV; cp., however, the Gṛhyasūtra I. 11: 12. 12.

५ Thus, in accordance with the Mantrasaṃhitā, MLT; गृह्णामीति AHGBV.

६ को वः प्रणयत्विति all the Mss., but see the Mantrasaṃhitā and the Vyākhyā: को वः।प्रणयति × न्यक्षतीरिति ।

प्राणैः समं धारयमाणो ऽविषिञ्चन्प्रणयति । याः पुरस्ताद्भूश्च कश्चेति द्वाभ्यां यजमानः प्रणीयमाना अनुमन्त्रयते ब्रह्मपूता स्थेति चानेनाध्वर्युरुत्तरेणाहवनीयं दर्भेषु सादयित्वा दर्भैरपिदधाति । ताः प्रणीता नेङ्गयन्त्या संस्थानात्पवित्रे आदाय संविशन्तामिति सपवित्रेण पाणिना पात्राणि सम्मृशति । दक्षाय त्वा वानस्पत्यो ऽसीत्यग्निहोत्रहवणीमादाय वेषाय त्वेति सव्येन शूर्पं च प्रत्युष्टमिति गार्हपत्ये निष्टप्य यजमान हविर्निर्वप्स्यामीति यजमानमामन्त्रयते । ओं निर्वपेति यजमानेन प्रसूतः प्रवसत्यग्ने हविर्निर्वप्स्यामीत्युक्त्वोर्वन्तरिक्षमन्विहीति गच्छति । ॥ ३ ॥

अपरेण गार्हपत्यं प्रागीषमुदगीषं वाग्निष्ठं शकटमवस्थितं व्रीहिमत्परीणटसहितं[1] भवति यवमद्वा । धूरसीति तस्य दक्षिणां धुरमभिमृश्य सव्यां च त्वं देवानामिति शकटमभिमन्त्र्य विष्णुस्त्वाक्रंस्तेति विष्णुमात्मानं[2] ध्यायन्सव्ये चक्रे दक्षिणं पादमादधाति विष्णोः क्रमो ऽसीति वाह्रुतमित्यारोहति । मित्रस्य त्वेति परीणाहादिकं[3] प्रेक्ष्योरु वातायेति तस्य द्वारमपच्छिद्य[4] मित्रस्य त्वेति पुरोडाश्यांश्च[5] प्रेक्ष्योर्जं धत्स्वेत्यभिमृश्यापहतं रक्ष इति तृणं किंशारु वा निरस्याप उपस्पृश्य

---

१ परिणत्सहित G; परीणवत्सहित AMHB; परीणवत् L; परिणवद्भवति TV.

२ विष्णुमात्मान GAMLTB. विष्णुं मनसा H.

३ परिणाहं BHG; परिणाहादिक MVLT (the last with ०री०); परिणाहक A (शकटादिकं the Vyākhyā).

४ अपच्छिद्य GHMLAVTB; read अपच्छाद्य.

५ Thus GAH; पुरोडाशीयांश्च MLTBV, and the Vyākhyā.

हविर्निर्वप्स्यन्दशहोतारं व्याचक्षीत । पवित्रान्तर्हिते शूर्पे हवनीं निधाय यच्छन्तामिति मुष्टिं पूरयित्वा हवन्यामोप्य देवस्य त्वेति पवित्रान्तर्हिते शूर्पे यथादेवतं[1] चतुरो मुष्टीन्निर्वपति त्रिर्मन्त्रेण तूष्णीं चतुर्थं । निरुप्यान्वावपत्येवमुत्तरं पुरोडाशं निर्वपत्यग्निꣳ होतारमिह तꣳ हुव इति यजमानो हविर्निरुप्यमाणमभिमन्त्रयते निरुप्तं वा । कस्त्वा युनक्ति स त्वा युनक्त्विति सर्वमनुवीक्षते । ॥ ४ ॥

यदि शकटं न स्यादपरेण गार्हपत्यं स्फ्यं निधाय तस्मिन्पात्रीं तस्यां पुरोडाश्यानोप्य[2] तस्याः पूर्वार्धे धूरसीत्यभिमृश्य सर्वाञ्छकटमन्त्रानुक्त्वेदं देवानामिति निरुप्तानभिमृशती।दमु नः सहेत्यपादानस्थानम्[3] । स्फात्यै त्वेति निरुप्तानेवेदमहं निर्वरुणस्य पाशादिति पुरोडाश्यानादाय[4] निर्गच्छति । सुवरभि विख्येषमिति सर्वं यज्ञमनुवीक्षत । आग्नेयो ऽष्टाकपाल उपांशुयाजस्याज्यं हविः प्राजापत्यो वैष्णवो ऽग्नीषोमीयो वाग्नीषोमीयश्चैकादशकपालः पौर्णमास्यां प्रधानानि । नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यत इत्येके । आग्नेयो ऽष्टाकपाल ऐन्द्रं सांनाय्यममावास्यायां संनयतो । ऽसंनयत आग्नेयो ऽष्टाकपाल ऐन्द्राग्न एकादशकपालो द्वादशकपालो वा । तदङ्गमितरे होमाः । पौर्णमास्यामिन्द्राय वैमृधाय

---

१ यथादेवतं all the Mss.
२ ०डाशीया० AMLTV; ०डाश्या० GH.
३ ०स्थानं G and Vyākhyā, ०स्थान् AMLHTBV.
४ ०डाशीया० MLTV; ०डाश्या० AGH.

पुरोडाशमेकादशकपालमनुनिर्वपेद्यदि[1] समानतन्त्रो[2] वैमृधो ऽग्नीषोमाभ्यां[3] निरुप्येन्द्राय वैमृधाय निर्वपति । संस्थितायां पौर्णमास्यां वैमृधमनुनिर्वपतीत्येके । ॥ ५ ॥

वैश्वानरं ज्योतिरित्याहवनीयं प्रतीक्षते । दृꣳहन्तां दुर्या इति प्रत्यवरोहति । स्वाहा द्यावापृथिवीभ्यामिति स्कन्नानभिमन्त्र्योर्वन्तरिक्षमन्विहीति[4] हृत्वादित्यास्त्वोपस्थे सादयामीत्यपरेण गार्हपत्यं यथादेवतमुपसादयत्युत्तरेण[5] वाग्ने हव्यꣳ रक्षस्वेति गार्हपत्यं वोपतिष्ठते । सशूकायां तिरः पवित्रं हवन्यां प्रोक्षणीः[6] संस्कृत्य ब्रह्मन्प्रोक्षिष्यामीत्यामन्त्र्य प्रोक्ष यज्ञमिति तेन प्रसूतो देवस्य त्वेति यथादेवतं[7] त्रिः प्रोक्षेन्नाग्निमभिप्रोक्षेत्पूर्ववत्पात्राणि[8] प्रोक्षति[9] । वातस्य ध्राजिरसीति कृष्णाजिनमादायावधूतꣳ रक्ष इत्यूर्ध्वग्रीवं बहिर्विशसनमुत्करे त्रिरवधूनोत्यदित्यास्त्वगसीति पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणात्यधिषवणमसीत्यनुत्सृजन्[10] तस्मिन्नुलूखलमधिवर्तयत्यग्नेस्तनूरसीत्यनुत्सृजन्नुलूखले हविरावपति त्रिर्मन्त्रेण तूष्णीं चतुर्थमद्रिरसीति मुसलमादायाव रक्षो दिवः सपत्नं वध्यास-

१ Thus MLGTV, निर्वपेत् समान० A; ०निर्वपति समान० H.

२ Thus AMLGVT; तन्त्रौ BH.

३ Thus BTV; वैमृधाग्नीषो० the other Mss.

४ Thus MLATV and the Vyākhyā; अनुमन्त्रयते BHG.

५ दैवत the Mss.

६ Thus A only; प्रोक्षणीं BMHG; प्रोक्षणी LTV.

७ G ins. हविस्.

८ Thus G; प्रोक्ष्यन्नाग्निमभि० A; प्रोक्ष्यनाग्निमभि० MLTHV; प्रोक्ष्यान्नमग्निमभि० B.

९ Thus ATV; प्रोक्षते ML; प्रोक्षयति GBH.

१० Thus (without स्) the Mss.

मिति त्रिरवहन्ति। हविष्कृदेहीति त्रिर्हविष्कृतमाह्वयति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदाधावेति रथकारस्य। हविष्कृता वाचं विसृज्य कस्त्वा युनक्ति स त्वा युनक्त्विति यजमानो यज्ञयोगेन यज्ञं युनक्ति। ॥ ६ ॥

प्रादुर्भूतेषु तण्डुलेषूच्चैः समाहन्तवा इति संप्रेष्यत्यद्रिरसि श्लोककृदित्याग्नीध्रो ऽश्मानमादायेषमावदोर्जमावदेति वृषारवेण दृषदुपले समाहन्ति शम्यया वा द्विर्दृषदि सकृदुपलायां त्रिः संचारयन्नेव कृत्वः संपादयत्युक्तुषान्कृत्वा[1] वर्षवृद्धमसीति पुरस्तादुत्तरतो वा शूर्पमुपयच्छति। वर्षवृद्धाः स्थेति पुरोडाश्यानभिमृश्य प्रति त्वा वर्षवृद्धं वेत्त्वित्युद्वपति। परापूतꣳ रक्ष इत्युत्करे निष्पुनाति। प्रविद्धꣳ रक्षः पराध्माता अमित्रा इति शूर्पात्तुषान्कपाले ध्वंसयति रक्षसां भागो ऽसीति तेन तुषापूरितेनोत्तरमपरमवान्तरदेशमधस्तात्कृष्णाजिनस्य[2] सव्येन पाणिना तुषानुपवपति नान्वीक्षते। ऽवबाढꣳ रक्ष इत्यवबाधते[3]। रौद्रराक्षसनैर्ऋतपैतृकच्छेदनभेदनखननिरसनावघ्राणात्माभिमर्शनानि च[4] कृत्वा सर्वत्राप उपस्पृशेदभ्युक्ष्य कपालं निदधाति। वायुर्व इति विविनक्ति। देवो व इति पात्र्यां तण्डुलान्प्रस्कन्दयत्यदब्धेन वश्चक्षुषावपश्यामीत्यवेक्ष्य विविक्तानव-

---

१ Thus GA; ०यत्युतुषान् the other Mss. and the Vyākhyā.

२ तषापूरिते AH; तुषपूरिते the other Mss.—०त्तरापरमवान्तर० MLGTBV.

३ ०वबाधते AGHTV and the Vyākhyā (one copy); ०वबाढते ML and the Vyākhyā (another copy).

४ च om. G only.

हस्ते प्रयच्छंस्त्रिष्फलीकर्तवा[1] इति संप्रेष्यति । देवेभ्यः शुन्धध्वं देवेभ्यः शुम्भध्वं देवेभ्यः शुध्यध्वमिति त्रिभिस्त्रिष्फलीकरोति । ॥ ७ ॥

सुफलीकृतान्प्रक्षाल्य त्रिष्फलीक्रियमाणानामित्यन्तर्वेदि त्रिः प्रक्षालनं[2] निनयति । कृष्णाजिनकल्पो व्याख्यातो । दिवः स्कम्भनिरसीति कृष्णाजिन उदीचीनकुम्बां शम्यां निधाय धिषणासि पर्वत्येति तस्यां प्राचीं दृषदं पश्चार्धेनाधिवर्तयति धिषणासि पार्वतेयीति दृषद्युपलां पूर्ववदनुत्सृजन्ꣳग्रावः स्थ मधुमन्त इति तण्डुलानवेक्ष्य देवस्य त्वेति दृषदि यथादेवतं[3] तण्डुलानधिवपति त्रिर्मन्त्रेण तूष्णीं चतुर्थं । प्राणाय त्वेति प्राचीं प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्यदेशे दीर्घामन्विति प्राचीमन्ततो । ऽत[4] ऊर्ध्वं यथासुखं पिनष्टि । देवो व इति कृष्णाजिने पिष्टानि प्रस्कन्दयेददब्धेन त्वा चक्षुषावेक्ष इत्यवेक्ष्यासंवपन्ती पिंषाणूनि कुरुतादिति हविःपेषीं संप्रेष्यति । सा पिनष्ट्यच मदन्तीरधिश्रयति । गार्हपत्ये हवींषि श्रपयति । ध्रुष्टिरसीत्युपवेषमादायापहतꣳ[5] रक्ष इत्यभिमन्त्र्य तेनापरेणाग्नेः प्रत्यञ्चावङ्गारौ व्यस्यापाग्ने[6] ऽग्निमिति दक्षिणमङ्गारं निरस्याप उपस्पृश्य देवयजं वहेत्यवग्निष्टमवस्थाप्य ध्रुवमसीति तस्मिन् कपालमुपदधाति । ॥ ८ ॥

---

१ ०यच्छस्त्रिः GMBVT; ०यच्छत्रिः L; ०यच्छमसत्रिः A.

२ प्रक्षाल्य ML. ३ ०दैवत the Mss.

४ Thus G; प्राचीनमन्तत ऊर्ध्वं the other Mss.

५ अभिहतꣳ instead of अपहतꣳ H; but Vyākhyā and Mantrasamhitā have equally अप.

६ व्युदस्या० H.

निर्दग्धमिति तस्मिन्नङ्गारमधिवर्तयति[1] धर्त्रमसीति तस्मात्पूर्वं धरुणमसीति तस्मात्पूर्वमष्टाकपालस्य[2] द्वे मध्यमाद्दक्षिणे त्रीण्युत्तराणि दक्षिणयोर्धर्मासीति[3] पूर्वं मरुताꣳ शर्ध इत्यपरं । यन्त्रमसीत्युत्तरेषामपरं विश्वाभ्य इति पूर्वं चिदसीति मध्यमं । तत[4] उत्तर[4] एकादशकपालस्याष्टाकपालवत् त्रीण्युपदधाति चिदसीति तत्पूर्वं चतुर्थं यथोक्तमवान्तरदेशेषु[5] । चितः स्थेत्यवशिष्टानि । भृगूणामङ्गिरसामिति वेदेन कपालेष्वङ्गारानध्यूहति । यानि घर्म इत्यनुद्रुत्येन्द्रवायू[6] युञ्जामिति कपालानि युनक्ति । पात्र्यां[7] निष्टप्योपवातायां पवित्रान्तर्हितायां देवस्य त्वेति कृष्णाजिनात्पिष्टानि यथादेवतं[8] संवपति त्रिर्मन्त्रेण तूष्णीं चतुर्थं । संवपन्वाचं यच्छत्यभिवासयन्विसृजते । देवो व इति प्रोक्षणीवत्पिष्टान्युत्पूय स्रुवेण प्रणीताभ्य आदाय वेदेनोपयत्य समाप इति पिष्टेषु निनयति । यदि प्रणीता न विद्येरन्याः[9] काश्चापो मन्त्रेणोत्पूय ताभिः संनयेदित्यापत्कल्पो[10] । ऽद्भ्यः परि प्रजाताः स्थेति मदन्तीर्निनयति । समद्भिः प्रच्यध्वमिति प्रदक्षिणं परिप्लावयति । ॥ ९ ॥

---

१ ०धिवर्त० GHATBV; ०तिवर्त० ML.

२ तस्मात्पूर्वमष्टा० GH; तस्मादष्टा० MLATBV.

३ दक्षिणयोर्ध० GHAB; दक्षिणोत्तरयोर्ध० MLTV.

४ तत उत्तर MLTV; उत्तर HAGB.

५ यथोक्तम० BHAG; यथायोगम० MLTV. Which is right?

६ Thus AG; ०त्यनुद्रत्येन्द्र० VLT; ०नुद्दत्येन्द्र० M; त्यद्गुद्रूत्येन्द्र० HB.

७ पात्रीं H (as Hir.); पात्र्यां (as Āp.) VGMLT; पात्र्यं A; पात्रां B.

८ यथादैवत the Mss.

९ Thus conjecturally; न विन्देरन् H; न विन्द्यात् MLATV; न वद्याप्याः काश्चा० G.

१० ताभिः संनये० GHB; ताभिर्निनये० MLTV; ताभिः संयवे० A.

जनयत्यै त्वा संयौमीति संयुत्य मखस्य शिरो ऽसीति पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभजति। समौ पिण्डौ कृत्वेदमग्नय[१] इत्याग्नेयमभिमृशतीदममुष्मा इति यथादेवतमिदमहं[२] सेनाया इति वेदेन दक्षिणकपालयोगादङ्गारानपोह्यत्युत्तरस्माच्च। मखस्य शिरो ऽसीति दक्षिणं पिण्डमादाय घर्मो ऽसि विश्वायुरिति दक्षिणस्मिन्नधिश्रयत्येवमुत्तरमनुच्चमनतिनीचं[३] कूर्मस्येव प्रतिकृतिं करोत्युरु प्रथस्वेति यावत्कपालं प्रथयति। पात्र्यामप आनीय त्वचं गृह्णीष्वेति प्रदक्षिणं सलेपाद्भिः श्लक्ष्णीकुर्वन्ननतिचारयन्ननुपरिमार्ष्टि[४]। दध्युपनिधायान्तरितꣳ रक्ष इत्युल्मुकेन त्रिः सर्वाणि हवींषि पर्यग्निकरोति। देवस्त्वा सविता श्रपयत्विति दक्षिणं[५] पुरोडाशं दर्भैरभिज्वलयञ्छ्रपयत्यग्ने[६] हव्यꣳ रक्षस्वेति गार्हपत्याग्निमभिमन्त्रयते। सं ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्माभिवासयत्यविदहन्तः श्रपयतेति वाचं विसृजते। ऽङ्गुलिप्रक्षालनं पात्रनिर्णेजनं[७] चोल्मुकेनाभितप्य हुत्वान्तर्वेदि[८] स्फ्येनोदीचीस्तिस्रो लेखाः कृत्वैकताय स्वाहेति त्रिभिः पश्चात्तिसृषु लेखास्वसंसृष्टं निनयति॥१०॥

---

१ Conjecturally; कृत्वाग्नय इत्याग्नेयमभि॰ GBMA; कृत्वा अभि॰ L; कृत्वाभि॰ TV; कृत्वाग्नमेधाराग्नेयमित्यभि॰ H.

२ ॰दैवतं MLHATVB; ॰दै॰ G.

३ Thus TBV; ॰मानूच्यम॰ H, ॰मनुच्छम॰ MLA; ॰त्तरस्मिन्नत्युच्चमनति॰ G.

४ श्लक्ष्णं कु॰ VMLT; श्लक्ष्णीकु ॰AHGB and the Vyākhyā.

५ Thus BHGA; प्रदक्षिणं VMLT.

६ Thus AG and Vyākhyā; ॰ज्वलयं च HB; ॰ज्वलयंश्च VMLT.

७ पात्री॰ GHA, पात्र॰ MLTBV; and the Vyākhyā.

८ हुत्वा॰ GHAB, कृत्वा VMLT, Vyākhyā; see Baudh.

अपरेणाहवनीयं यजमानायतामपरिमितां वा वेदिं करोति यावदर्धविस्तारां। यजमान इदं तस्मै हर्म्यं करोमीति वेदिदेशमभिमृशत्यध्वर्युरयं वेद इति वेदमादाय वेदेन वेदिं विविदुरिति वेदिं पुरस्तात्त्रिः संमार्ष्टि। चतुःशिखण्डेति यजमानः संमृज्यमानामनुमन्त्रयते। ऽध्वर्युः पूर्वार्धाद्वेदेर्वितृतीयदेशात्स्तम्बयजुर्हरति। देवस्य त्वेति स्फ्यमादायेन्द्रस्य बाहुरसीत्यभिमन्त्र्य वायुरसीति तस्य[1] दर्भेणाग्रं तीक्ष्णीकृत्य[2] पृथिव्यै वर्मासीति प्रागग्रमुदगग्रं वा दर्भं निधाय पृथिवि देवयजनीति तस्मिन्स्फ्येन[3] प्रहृत्यापहतो ऽररुरिति स्फ्येन सदर्भमूलान्पांसूनपादाय व्रजं गच्छेति हरति। यो मा हृदेति यजमानो ह्रियमाणमभिमन्त्रयते। वर्षतु ते द्यौरित्यध्वर्युर्वेदिमवेक्षते वर्षतु ते पर्जन्य इति यजमानं च। नमो दिव इत्याग्नीध्र उत्तरतः प्रक्रमे ऽपरिमिते वोत्तानौ हस्तौ कृत्वोपविशति। तस्याञ्जलावध्वर्युर्बधान देव सवितरिति सदर्भमूलान्पांसून्निवपत्यपहतो ऽररुः पृथिव्या इत्याग्नीध्रो न्युप्तं[4] स्थण्डिले[4] निक्षिप्याभिगृह्णाति। स उत्करो भवत्येवं द्वितीयमिदमापः शिवा इति द्वितीयं प्रहृत्यापहतो ऽररुः पृथिव्यै देवयजन्या इत्यादायापहता[5] यातुधाना इत्याभिगृह्णाति[6] द्वितीयम्। ॥ ११ ॥

---

१ तस्य om. MLTV.

२ तीक्ष्णीकृत्य GMBTVA; ॰कृत्या L; ॰कृत्वा Vyākhyā; तीक्ष्णं कृत्य H.

३ तस्मिन् given by AHBGTV, om. ML.

४ न्युप्तस्थण्डिले H only.

५ Between आदाय and अपहता VMLT ins. व्रजं गच्छेत्याद्यभिग्रहणं.

६ गृह्णात्येवं द्विती॰ HBG; गृह्णाति द्वि॰ MLTV; गृह्णात्येवं तृतीयम् A.

द्रप्सस्ते दिवं मा स्कानिति तृतीयं प्रहृत्यापहतो ऽररुः पृथिव्या अदेवयजन इत्यादायापहतो[1] ऽघशंस इत्यभिगृह्णाति तृतीयं[2] । तूष्णीं चतुर्थं सर्वं तृणं हरत्यररुस्ते दिवं मा स्कानिति चतुर्थमभिगृह्णाति । वेदेः पूर्वं परिग्राहं परिगृह्णाति वसवस्त्वेति स्फ्येन दक्षिणतः प्राचीं लेखां लिखति । यज्ञस्य त्वेति परिगृह्यमाणां यजमानो ऽनुमन्त्रयते । रुद्रास्त्वेत्यध्वर्युः पश्चादुदीचीं लेखां लिखत्यादित्यास्त्वेत्युत्तरतः प्राचीं । ते ऽग्निना प्राञ्चो ऽजयन्नित्युक्तं[3] । प्राञ्चौ वेद्यंसावुन्नयत्यभित आहवनीयं प्रतीची श्रोणी अभितो गार्हपत्यं मध्ये संनता वेदिर्वेदिः । ॥ १२ ॥

## ॥ इति श्रौतसूत्रे चतुर्थः प्रश्नः ॥

१ After आदाय MLT ins. as formerly.
२ तृतीय om. HAGB.
३ See T.Br. III. 2. 9. 7.

इमां नराः कृणुतेति संप्रेष्य देवस्य सवितुः सव इति वेदेः स्फ्येनोत्तमां त्वचमुद्धन्ति। यदुद्घ्नन्त इति यजमान उद्धन्यमानामनुमन्त्रयते[1]। द्व्यङ्गुलां चतुरङ्गुलां रथवर्त्ममात्रीं प्रादेशमात्रीं वैता इयतीर्नातिखनेत्पित्र्यदेवत्यातिखातेत्युक्तं[2]। दक्षिणतो वर्षीयसीं पुरीषवतीं प्राचीनप्रवणामुदीचीनप्रवणां[3] प्रागुदक्प्रवणां वा वेदिं करोति। यन्मूलमतिरिक्तं स्फ्येन तच्छिनत्ति न नखेन। यत्पुरीषमतिरिक्तमुत्करं[4] तद्गमयत्याहार्यपुरीषां पशुकामस्य वेदिं करोति। यत्प्राक् खननात्तत्कृत्वा यदाहरेत्तन्मन्त्रेण खनेद्भूमिर्भूत्वेति यजमानः कृतां वेदिमनुमन्त्रयते। ऽध्वर्युर्ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीत्यामन्त्र्य बृहस्पते परिगृहाण वेदिमिति तेन[5] प्रसूत ऋतमसीति त्रिभिः पूर्ववद्वेदिं परिगृह्णाति। ॥ १ ॥

विपरीतौ परिग्राहावेके[6]। धा असीति वेदिं[7] स्फ्येन

---

१ अभिमन्त्रयते HAGRB: अनु० the other Mss. and the Vyākhyā.

२ Thus in accordance with the Vyākhyā; प्रादेशमात्रीं सीतामात्रीं [वा] वैता इयतीर्नातिखनेत् G; प्रादेशमात्रीं वा एतौ इतिर्नातिख० TV; प्रादेशमात्रीं वैतामियतिं नातिख० R and nearly the same H; प्रादेशमात्रीं वैतामियतीन्नातःख० A; प्रादेशमात्रीं वापतो इतीतिख० M. ०मात्रीं वापतो इतिर्नातिख० L; रथमात्रीं वैता इयति नातिख० B.—Although सीतामात्रीं is mentioned only by G, it might belong to the text; cp. Āp. and Hir.—For इत्युक्तम् see Taitt. Br. III. 2. 9. 10.

३ Thus G, in acc. with the Vyākhyā; all the other Mss. omit उदीचीनप्रवणां.

४ ०त्करे MLTV.

५ All the Mss. exc. G, omit तेन, but cp. for example V. 4.

६ Thus ABTV; ०वेका ML; ०वेतौ G; ०वेते H; understand: समामनन्ति

७ वेदिं om. GAHBR.

प्रतीचीं[१] योयुप्येत । पुरा क्रूरस्येत्यभिमन्त्र्य पश्चार्धे वेदेः पूर्वेण विहृतीयदेशे[२] स्फ्यं तिर्यञ्चं स्तब्ध्वा प्रोक्षणीरासादयेत्याग्नीध्रं संप्रेष्यत्याग्नीध्रो हवन्यां तिरः पवित्रमप आनीयोदञ्चं स्फ्यमपकृष्यान्तर्वेदि[३] हवनीं धारयन्स्फ्यस्य वर्त्मन्युपनिनीयर्तसधः स्थेति स्फ्यपदे सादयति । यं द्विष्यात्तं ध्यायेच्छतभृष्टिरसीत्युत्करे स्फ्यमुदस्यति । यं द्विष्यात्तं ध्यायेद्दौडेन्यक्रतूरिति यजमानः प्रोक्षणीरासाद्यमाना अनुमन्त्रयत । आग्नीध्रो हस्ताववनेनेक्ति । नानवनिज्य पात्राणि संमृशति न च वेदिमा स्तरणात् स्फ्यं प्रक्षालयति नाग्रं परिमृशत्याहवनीयमुत्तरेण[४] प्रणीता दृब्धाबर्हिरुपसादयति प्रागग्रं दक्षिणमिध्ममुत्तरं बर्हिर्वेदाग्रैः स्रुवं स्रुचश्च सह संमार्ष्टि । निशिताः[५] स्थ सपत्नक्षयणीरित्यभिमन्त्र्य घृताचीरेतेति दक्षिणेन पाणिना स्रुवं जुहूपभृतौ सव्येन ध्रुवां प्राशित्रहरणं वेदाग्राणि चादाय[६] प्रत्युष्टमिति गार्हपत्ये निष्टप्य गोष्ठं मा निर्मृक्षमिति स्रुवमग्रैरन्तरतो ऽभ्याकारं सर्वतो बिलमभि समाहारं निर्लेपं त्रिरभितः संमार्ष्टि बाह्यतो मूलैर्दण्डं । वाचं प्राणमिति जुहूं चक्षुः श्रोत्रमित्युपभृतं प्रजां योनिमिति ध्रुवां तूष्णीं प्राशित्रहरणं । पूर्ववत्स्रुचः प्राशित्रहरणं च निष्टप्योत्तरतो वेदिश्रोण्यां निदधाति । ॥ २ ॥

---

१ प्राचीं G only.

२ विहृतीयदेशं AG ; विहृतीयदेशे MLTV ; विहृतीय देशं H, the word पूर्वेण is the difficulty.

३ अपकृष्य AHGTV ; उप० ML ; अनु० B.

४ Thus ML ; प्रमृशत्य० the other Mss.

५ Thus HGB ; संमृश्य instead of समार्ष्टि the other Mss.

६ GHBA om. च.

दिवः शिल्पमिति प्रोक्षितानि स्रुक्संमार्जनान्यग्नौ प्रहरत्यपरेण गार्हपत्यं दक्षिणतः पत्नीमुदङ्मुखीमुपवेश्याशासाना सौमनसमिति मौञ्जेन योक्त्रेणान्यतरतःपाशेनोर्ध्वज्ञुमासीनां प्राङ्मुखीं तिष्ठन्तीं वा संनह्येत्पूषा ते ग्रन्थिं ग्रथ्नात्वित्युत्तरतो नाभेर्निष्टर्क्यं ग्रन्थिं कृत्वा दक्षिणतो नाभेः परिकर्षति। पत्न्याचम्याग्ने गृहपत इति तिष्ठन्ती गार्हपत्यमुपस्थाय देवानां पत्नीरिति देवपत्नीश्चेन्द्राणीवेत्युदङ्मुख्यन्वास्ते। सुप्रजसस्त्वा वयमिति जपति मम पुत्रा इति च। पूषा ते बिलं विष्यत्वित्याग्नीध्रः सर्पिर्धानस्य बिलमपावृत्येदं विष्णुर्विचक्रम इत्यन्वाहार्यपचने ऽधिश्रित्यादितिरस्यच्छिद्रपत्रेत्याज्यस्थालीमादाय महीनां पय इति तस्यां पवित्रवत्यां प्रभूतमाज्यं निर्वपती। षे त्वेति दक्षिणार्धे गार्हपत्यस्याधिश्रित्योर्जे त्वेत्यपादाय[1] वेदेनोपयम्य महीनां पयो ऽसीति पत्नीं प्रदर्शयति[2]। तत्सा निमील्य वीक्ष्यानुच्छ्वसन्त्यवेक्षते। तेजो ऽसीत्युत्तरार्धे ऽधिश्रित्य तेजसे त्वेत्यपादाय[3] तेजो ऽनुप्रेहीत्याहवनीयमभ्युद्द्रुत्याग्निस्ते[4] तेजो मा विनैदित्याहवनीये ऽधिश्रित्याग्नेर्जिह्वासीत्युत्तरेण प्रोक्षणीः स्फ्यस्य वर्त्मन्सादयती। डेन्यक्रतूरिति यजमान आसाद्यमाना अनुमन्त्रयते[5]। ॥ ३ ॥

---

१ Emended; त्वेत्युप्रादय H, त्वेत्यादाय the other Mss. and the Vyākhyā.

२ दर्शयति H only.

३ Thus TV (the Vyākhyā, with अपादत्ते, points to the same reading); त्वेत्यादाय the other Mss.

४ अभ्युद्द्रुत्या० MLG; अभिद्रुत्या० HA; अभ्युद्धृत्य Y.

५ Thus HR; ०मानामनुम० MLTV; ०मानानु० A; ०मानमनु० G.

यदि सांनाय्यस्याज्यस्य वान्यत्र बर्हिषः पुरोत्तमात्प्रयाजात्स्कन्देत्तं[१] त्वा सिञ्चामीति तस्य स्वयं संभृत्य भूपतये स्वाहेति त्रिभिः स्कन्नमनुमन्त्रयते । ऽध्वर्युयजमानावाज्यमसीति[२] निमील्य वीक्ष्यानुच्छ्वसन्तावाज्यमवेक्षेते[३] । शुक्रमसीति त्रिभिरुदगग्राभ्यां पवित्राभ्यामध्वर्युः पुनराहारमाज्यं त्रिरुत्पुनाति । देवो व इति त्रिः प्रोक्षणीरद्भिराज्यमिति यजमान आज्यमपश्योत्पूयमाना अनुमन्त्रयते । ऽध्वर्युरन्तर्वेदि समंबिलं जुहूं धारयमाण आज्यस्थाल्या वेदेनोपयम्य स्रुवेण शुक्रं त्वा शुक्रायामिति चतुः पञ्चकृत्वो वा जुह्वां प्रभुतमाज्यं गृह्णाति । पञ्चानां त्वा वातानामिति चतुः पञ्चकृत्वो वा यजमानो जपत्यध्वर्युर्ज्योतिस्त्वा ज्योतिषि धाम्ने धाम्न[४] इति[४] मध्यदेशे धारयमाण उपभृत्यष्टौ दशकृत्वो वाल्पिष्ठं गृह्णाति । पञ्चानां त्वर्तूणामिति त्रीन्यजमानो जपति पञ्चानां त्वा सलिलानां पञ्चानां त्वा पृष्ठानामिति[५] च[५] द्वौ[५] चरोस्त्वा पञ्चबिलस्येति पञ्चाध्वर्युरर्चिस्त्वार्चिषीति चतुः पञ्चकृत्वो वा भूमौ प्रतिष्ठितायां ध्रुवायां भूयिष्ठं गृह्णाति । सुप्रजास्त्वाय त्वा गृह्णामीति चतुः पञ्च[६] वा यजमानो जपति । ॥ ४ ॥

---

१ Thus AHBGR and Vyākhyā . पूर्वोत्तमादनूयाजा॰ MLTV.

२ Thus HG; ॰ध्वर्युर्यजमानस्याज्य॰ TMLV: ध्वर्युर्यजमानो वाज्य॰ AB.

३ Thus MLH; ॰च्छ्वसन्नाज्यमवेक्षेत AB; च्छ्वसन्ताज्यमवेक्षेत G. ॰वेक्षते V.

४ ज्योतिषि धाम्ने धाम्न इति मध्यं॰ HA; धाम्नेरिति B; the other Mss. omit धाम्ने धाम्न ।

५ इति द्वौ HA (omitting च).

६ पञ्चकृत्वो G only.

बर्हिर्वेद्यन्यत्रोत्करादाज्यानि सादयत्याज्यस्थलीं[१] च[२] प्रतिचीनं हरति[३]। तथा प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य तेन प्रसूतो मुक्तग्रन्थीनिध्मान् कृष्णो ऽसीति त्रिः प्रोक्षति तथा वेदिरसीति वेदिं बर्हिरसीति बर्हिरन्तर्वेदि पुरोग्रन्थि तदासादयति[४]। सुमनसो यजमानाय सन्त्विति यजमानो बर्हिरभिमन्त्रयते। ऽध्वर्युर्दिवे त्वेति बर्हिरग्रं प्रोक्षत्यन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलं। यजमानो ऽग्निश्रेम बर्हिरिति प्रोक्ष्यमाणं बर्हिरभिमन्त्रयते। ऽध्वर्युर्बर्हिरग्राणि हवन्यां प्रसिच्य मूलानि प्रसेचयति। पोषाय त्वेति[५] सह हवन्या पुरस्तात्प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति। स्वधा पितृभ्य इति वेदेर्दक्षिणायाः श्रोणेः संततमोक्षत्तरस्या अपां शेषं निनयति। पूषा ते ग्रन्थिं विष्यत्विति बर्हिषो ग्रन्थिं विष्यति। विष्णोः स्तूपो ऽसीति कर्षन्निवाहवनीयं प्रति प्रस्तरमादत्ते। यजमाने[६] प्राणापानौ दधामीति प्रस्तरे[७] पवित्रे अपिसृज्य प्राणापानाभ्यां त्वा सतनुं करोमीति ब्रह्मणे प्रयच्छति ॥ ५ ॥

ब्रह्मा यजमानाय। तृणैरन्तर्धायाक्ष्णया शुल्बं च निधायोर्णाम्रदसं त्वा स्तृणामीति बहुलमनतिदृश्नं प्रागपवर्गं प्रत्यगपवर्गं

१ सादयन्त्य० AGHB.

२ च om. H; the Vyākhya: चो ऽवधारणे। आज्यस्थालीमेवेत्यर्थः।

३ हरन्ति Mss. exc. ML.

४ तथासादयति L only.

५ पोषाय व इति G only.

६ Thus HTV and Vyākhyā; ०मानो AB; ०मानः ML; यजमा G.

७ प्रस्तरे om. ML.

वा बर्हिषा वेदिं[1] स्तृणात्यूर्णाम्रदु प्रथमानं चतुः शिखण्डेति[2] द्वाभ्यां स्तीर्यमाणां यजमानो ऽनुमन्त्रयते । ऽध्वर्युरग्रैर्मूलान्यभिच्छादयन्[3] त्रिधातु पाञ्चधातु वा कृत्वा धातौ धातौ मन्त्रमावर्तयति । शिवा च म इति[4] स्तीर्णां वेदिं[5] यजमानो ऽनुमन्त्रयते । ऽध्वर्युरनूयाजार्थे प्राञ्चावङ्गारौ निरूह्याहवनीयं कल्पयित्वा प्रस्तरं धारयन् गन्धर्वो ऽसीत्युदगग्रं मध्यमं परिधिं परिदधात्यस्मिन्यज्ञ उप भूय[6] इति ध्रुवो ऽसि ध्रुवो ऽहमिति द्वाभ्यां[7] यजमानो मध्यमं परिधिमनुमन्त्रयते । ऽध्वर्युरिन्द्रस्य बाहुरसीति[8] मित्रावरुणौ त्वेति दक्षिणोत्तरौ प्रागग्रौ संस्पृष्टौ मध्यमेन दक्षिणमाहवनीयमभ्यग्रमुत्तरमवाग्रमस्मिन्यज्ञ[9] उग्रो ऽस्यस्मिन्यज्ञे ऽभिभूरसीति[10] यजमानो ऽनुमन्त्रयते[11] यथा मध्यममध्वर्युः सूर्यस्त्वा पुरस्तात्पात्विति सूर्येण पुरस्तात्परिदधाति । युनज्मि त्वा यन्मे अग्न इति द्वाभ्यां यजमानो ऽग्निं युनक्ति ॥ ६ ॥

वीतिहोत्रमिति दक्षिणामूर्ध्वामाधारसमिधमादधाति समि-

---

१ वेदिं om. H.

२ Thus AG; शिखण्डा इति MLHTRV; ०ण्डो इति B.

३ ०र्यंस्त्रि ०G only.

४ Thus AGHR; शिवा च मे शग्मा चैधीषमूर्जं म इति द्वाभ्यां MLTV.

५ वेदिं om. MLTV.

६ उपह्वय AG.

७ द्वाभ्यां om. AGHRB.

८ इति not in AG.

९ Thus G, the other Mss. are more or less corrupt TRV as G, only ०माहवनीयाभ्यग्र०.

१० उग्रो ऽस्यभिभूरिति AGB.

११ Thus MH; अभिमन्त्रयते the other Mss.

इत्यायुषे त्वेत्युत्तरां तूष्णीं वा । तेजिष्ठा त इति परिहितमग्निं यजमानोऽनुमन्त्रयते । ऽध्वर्युर्विशो यन्त्रे स्थ इति समावनन्तर्गर्भौ दर्भौ[1] विधृती उदगग्रे निदधाति । विच्छिन्नद्भि विशो यन्त्रे नुदमाने इति द्वाभ्यां यजमानोऽभिमन्त्रयते । वसूनाꣳ रुद्राणामित्यध्वर्युस्तयोः प्रस्तरं सादयत्ययं प्रस्तर इति साद्यमानं यजमानो । जुहूरसीत्यध्वर्युः प्रस्तरे जुहूं सादयत्यारोह पथो जुहूरसि घृताची गायत्रियाप्नीति द्वाभ्यां साद्यमानां जुहूं यजमान । उपभृदसि घृताचीत्यध्वर्युरुपभृतमधस्ताद्विधृत्योः प्रतिकृष्टतरामिव सादयत्युपरिष्टात्प्रस्तर इत्येके । ऽवाहं बाधे सुभृदस्युपभृदिति द्वाभ्यां साद्यमानां यजमानो । ध्रुवासि घृताचीत्यध्वर्युर्ध्रुवां सादयति । यो मा वाचा मनसा ध्रुवासि धरणी धनस्येति द्वाभ्यां साद्यमानां यजमान । ऋषभोऽसि शाक्वर इत्यध्वर्युः स्रुवं सादयति । ॥ ७ ॥

स्योनो मे सीदायꣳ स्रुव इति द्वाभ्यां स्रुवं यजमान । इयꣳ स्थालीत्यध्वर्युराज्यस्थालीं सादयति । तयैव[2] तां यजमान । एता असदन्नित्यध्वर्युः सन्नाः स्रुचोऽभिमन्त्रयते विष्णूनि स्थेत्याज्यानि चाथ[3] सस्रुवामाज्यस्थालीमादाय[3] सव्येन वेदमपरेण गार्हपत्यमुपविश्य कपालवद्वेदेन दक्षिणस्मात्पुरोडाशादङ्गारानपोह्योत्तरस्मादपोहति । सूर्यं ज्योतिरिति पुरोडाशमभिमन्त्र्याप्यायतां घृतयोनिरित्याग्नेयं पुरोडाशमभिघारयति

---

१ दर्भौ missing in HAB.

२ तयैव AGHB.

३ Thus AGBTV; ०ज्यानिचाथस्स्रुवामाज्य०M: ०ज्यानि ह्याथसन्दवामाज्य० L; ०ज्यानि चवमाज्य० H.

तूष्णीमुत्तरं यस्त आत्मेति शृतं । स्योनं ते सदनं करोमीति पात्र्यामुपस्तीर्याद्रिः प्रथस्वेति पुरोडाशमभिन्दन्नपर्यावर्तयन्नुद्वासयति । वेदेन भस्म प्रमृज्य तस्मिन्सीदेति पात्र्यामुपस्तीर्णे पुरोडाशं निदधाति । तूष्णीं यवमयं पुरोडाशमिरा भूतिः पृथिव्यै रसो मोत्क्रमीदिति कपालान्येकैकशो ऽभिघार्यैकं[1] द्वे त्रीणीत्यादिभिः संख्यायोद्वासयति शृतं च दधि च[1] । देवस्त्वा सविता मध्वानक्त्विति स्रुवेण पुरोडाशं सर्वतो ऽनक्ति । स्रुवेण हस्त आज्यमवदाय[2] पुरोडाशमधस्तादभ्यज्यालंकरोत्याज्येन[3] शृतं च दधि च । ॥ ८ ॥

आज्येन स्रुवं पूरयित्वान्तरेण पुरोडाशावासाद्य सर्वाणि हवींषि पात्र्यां संगृह्य भूर्भुवः सुवरिति व्याहृतीभिर्हवींष्यपरेण स्रुचो ऽन्तर्वेद्यासादयेत्प्रथमतस्तथा[4] संवत्सर[5] । इतरकालेषु[5] चतुर्होत्रा पौर्णमास्यां पञ्चहोत्रामावास्यायां प्रियेण नाम्ना प्रियं सद आसीदेत्येतेभ्यो[6] ऽन्यद्धविरपरेण स्रुचः पुरोडाशौ दक्षिणस्यां

---

१ The passage एकं द्वे .... दधि च is only found in GHBV and cp. the Vyākhyā on Hir. śrs. page 175. The words are not commented upon in the Vaikh. Vyākhyā.

२ Thus G; स्रुवाद्धस्तेनाज्यमादाय VMLT, स्रुवेणहस्तादाज्यं वादाय H; स्रुवेण हस्तादाज्य वादाय AB.

३ Thus GB; ०भ्यज्य पुनराज्येनालंकरोति शृतं च दधि च MLTV; ०धस्तादाज्यालंकरोत्याज्येन स्रुचं दधि च H, ०यस्तादभ्यज्यास्थालीं करोत्याज्येन श्रितं च दधि च A.

४ प्रथमतस्तथा AMLVTB, प्रथमस्तु तथा H; प्रथमन्तस्तथा G.

५ संवत्सरे इतर० MLHATV, सवत्सरेन्तर० G; संवत्सरेतर० B. The meaning is not clear.

६ देत्येतेभ्यो AMGTBV; ०देत्येनेन्यभ्यो L; देत्येभ्यो H.

श्रोण्यां[१] घृतमुत्तरस्यां दध्ययं वेद इत्यग्रेण ध्रुवां वेदं निधाय वेद्यन्तान्परिस्तीर्य परिभोजनीयान् दर्भानादाय होतृषदनं कल्पयति । यज्ञो ऽसीत्याग्नेयमासन्नं यजमानो ऽभिमृशति प्रजापतिरसीत्यग्नीषोमीयमिदमिन्द्रियममृतमिति प्रातर्दोहं यत्-पृथिवीमचरदिति दधि यो नः कनीय इत्यैन्द्राग्नमयं यज्ञ इति सर्वाणि ममाग्न इति विहव्येन[२] च[२] पौर्णमास्या-मभिमृशति चतुर्होत्रा पञ्चहोत्रामावास्यायां[३] । होतरेहीत्य-ध्वर्युर्होतारमामन्त्र्याग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति संप्रेष्यति । ॥ ९ ॥

॥ इति श्रौतसूत्रे पञ्चमः प्रश्नः ॥

---

१ श्रोण्यां HAGB ; श्रोण्यामन्तर्वेद्यां MLTV.

२ Thus AGRB ; विहव्येन H ; विहव्यैश्च TMLV.

३ पौर्णमास्यां चतुर्होत्रा चाभिमृशति पञ्चहोत्रामावास्यायां MLTV : पौर्णमास्यामभिमृशति चतुर्होत्रा पञ्चहोत्रामा० H. ; BRGA agree with H, only चतुर्होत्रा च ।

अथासीनो ऽध्वर्युरिध्मादेकैकां समिधमादाय प्रणवे प्रणवे प्रतिसामिधेन्यादधाति[1] यावत्पञ्चदशानूयाजेभ्य एकां समिधमवशिनष्टि । पुरस्तादुपरिष्टाद्वा सामिधेनीनां यजमानो दशहोतारं व्याचक्षीताङ्गिरसो मास्य यज्ञस्येति मध्य उच्छ्वासो अग्न इति समिध्यमानमग्निमनुमन्त्रयते[2] समिद्धो अग्निराहुत इति समिद्धमाजुहोतेत्युच्यमाने ऽध्वर्युरिध्मशेषं प्रक्षिप्य[3] वेदेनाहवनीयं त्रिरुपवाज्यानूक्तासु सामिधेनीषु स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्योत्तरं परिधिसन्धिं स्पृष्ट्वा प्रजापतये स्वाहेति मनसा संततमृजुं ज्योतिषि प्राजापत्यमाघारमाघारयति । ॥ १ ॥

मनो ऽसि प्राजापत्यमिति स्रुवाघारं यजमानो ऽनुमन्त्रयत । आप्यायतां ध्रुवा घृतेनेत्यध्वर्युः स्रुवेणाज्यस्थाल्या आज्यमादाय ध्रुवामाप्याययति । सर्वत्रैवमग्नीन्परिधींश्चाग्निं[4] च त्रिस्त्रिः संमृड्ढीति[5] संप्रेष्यती ।ध्मसंनहनानि स्फ्य उपसंगृह्याग्नीध्रः प्रदक्षिणमनुपरिक्रामन्परिधीन्संमार्ष्टि मध्यममुदञ्चं प्राञ्चावितरावग्ने वाजजिदित्यग्निं त्रिः संमार्ष्टि । सर्वेषु होमेषूपभृता जुहूमुपयच्छत्यसंशब्दयन् मुखतो ऽभिनिनीयोपभृति जुहूमवधाय । होष्यंस्तेनैव प्रतिनिनीय नाभिं प्रति स्रुचौ धारयते । समं प्राणैरित्येके । ॥ २ ॥

स्रुवाघारमाघारयिष्यन् भुवनमसीति जुहूपभृतावग्रेण देवेभ्यः

---

१ Thus TVML; प्रणवे सामिधेन्य आद० H; प्रणवे प्रणवे सामिधेन्या आद० ARB प्रणवेत् प्रणवति सामिधेन्यादधाति G.

२ अनुम० TMLGV and the Vyākhyā; अभिम० HARB.

३ The words इध्मशेषं प्रक्षिप्य are not given by HAGB.

४ Thus AHGB; सार्वत्र(or त्रि)कम् MLTV.

५ GARB ins. आग्नीध्रं before संप्रेष्यति but cp. VII. 3.

प्राचीनमञ्जलिं करोति स्वधा पितृभ्य इति पितृभ्यो दक्षिणमपरेणाहवनीयं[१] दक्षिणेन पदा दक्षिणातिक्रामति सव्येनोदङ् । जुह्वे होति जुह्वमादत्त उपभृद्देहीत्युपभृतं । सुयमे मे अद्येत्युपभृति जुह्वमवधायाग्नाविष्णू इत्यनवक्रामन्प्रस्तरं[२] दक्षिणातिक्रम्य विष्णोः स्थानमसीत्यवस्थायान्तर्वेदि दक्षिणं पादं तत्स्पृष्टप्रपदं सव्यं कृत्वोर्ध्वस्तिष्ठन्नन्वारब्धे यजमाने दक्षिणं परिधिसंधिं[३] स्पृष्ट्वेशानान्तं[४] समारभ्योर्ध्व इति पूर्ववदैन्द्रमाघारयति । हुत्वाभिप्राणिति[५] । बृहद्भा इति स्रुचमुद्गृह्णाति । वागस्यैन्द्रीति यजमानोऽनुमन्त्रयते । ऽध्वर्युः स्रुचावसंस्पर्शयन्पाहि माग्न इत्युदङ्मुखः[६] प्रत्याक्रामत्येते[६] एवाक्रमणप्रत्याक्रमणे[७] मन्त्रवती । मखस्य शिरोऽसीति जुह्वा ध्रुवां त्रिः समनक्ति । ॥ ३ ॥

स्रुवेण ध्रुवाया उन्नीतं राय इत्याज्यमादाय सुवीराय स्वाहेति जुह्वं प्रत्यभिघारयति यज्ञेन यज्ञः संतत इति जुह्वा द्विस्त्रिर्वा ध्रुवां । यथास्थानं स्रुचौ सादयति । स्फ्योपसंनद्धानीध्मसंनहनानि वेदेश्च तृणमव्यन्तमादायोत्तरतोऽध्वर्युः प्रवरायावस्थाय क इदमध्वर्युर्भविष्यतीति जपति । तान्यन्वारभ्याध्वर्योः

---

१ Thus HABG; दक्षिणापरे॰ ML; दक्षिणा अपरे॰ TV.

२ ॰नवक्रामन् M; ॰नसोमं L; ॰नवक्रांतन् H; ॰नवक्राम AT: ॰नवक्लिन्नन् GB (cp Hir. !).

३ परिधिं ML.

४ Thus the Mss. exc. B. which has स्पृष्ट्वैशा॰; cp. XV. 14.

५ हुत्वाग्निमभिप्रा॰ ML.

६ उदङ्मुखः प्रत्याक्रा॰ MLHATBV.; उदङ् प्रत्याक्रा॰ G and so also the Vyākhyā. Perhaps this last reading is preferable.

७ Thus MLTV; एवातिक्रमण॰; HAGB.

पश्चाद्वस्थायाग्नीध्रः क इदमग्नीदित्य।ध्वर्युर्ब्रह्मन्[१] प्रवरायाश्रावयिष्यामीत्यामन्त्र्य वाचस्पते वाचमाश्रावयेति तेन प्रसूत आश्रावयोश्रावय श्रावयेति[२] वाश्रावयत्य।स्तु[२] श्रौषडित्यग्नीदुत्करे दक्षिणामुखस्तिष्ठन् स्फ्यं धारयन्प्रत्याश्रावयति । सर्वत्रैवमाश्रुतप्रत्याश्रुते भवत । ऊर्ध्वज्ञुमासीनं होतारमध्वर्युरग्निर्देवो होतेति वृणीते ऽमुवदमुवदिति यथा यजमानस्यार्षेयं सह प्रवरेण[३] त्रीननन्तरानित[४] ऊर्ध्वान्मन्त्रकृतो ऽध्वर्युर्वृणीते ऽमुतो ऽर्वाचो होतेति विज्ञायते । ऽपि वैकं द्वौ त्रीन्पञ्च । न चतुरो वृणीते न पञ्चातिप्रवृणीते[५] । ॥ ४ ॥

पुरोहितस्य प्रवरेण प्रवृणीते[६] । ऽनाज्ञातबन्धोराचार्यप्रवरेणापि वा[७] मनुवदिति प्रवृणीते । द्विगोत्रस्य त्रींस्त्रीनेकैकस्माद्गोत्रादुपलक्षयेत् । ब्रह्मण्वदा च वक्षदिति प्रवरशेषो । ऽसाविति होतुरुपांशु नाम गृह्णाति मानुष इत्युच्चैरास्ते होता[८] । वेद्यां तृणमपिसृजति । देवाः पितर इति होत्रध्वर्युप्रवरयोर्यजमानो जपति मां देवेष्वाश्रावयायुषे वर्चस इति

---

१ G ins जपति after अग्नीदिति .

२ Thus AGRB; आश्रावयोश्रावयेति वोश्रावयत्यस्तु ML, आश्रावयोश्रावयेति श्रावयत्यस्तु H; आश्रावयोश्रावयश्रावयोमाश्रावयेति वोश्रावयति अस्तु TV.

३ Thus all the Mss.; Hır.: सह परेण.

४ Thus AGHRTV; त्रीननन्तराणीतीत M, त्रीननन्तराणीतिनित B, त्रीननंतर्यात L.

५ न पञ्चाद्दृणीते H; न पचाचिदृणीते TV.

६ पुरोहितस्य प्रवरो राजा वृणीतो G only; the word राजा seems to belong to the text.

७ ०पिवा सर्वे HARB; ०पिवा सर्वेषां मनुवदिति प्रवृणीते G; TMLV om. सर्वेषां—प्रवृ० AGTV, वृणी० MLH.

८ These two words only in HAGRB.

चाध्वर्युप्रवर । आज्यभागप्रधानस्विष्टकृत्पत्नीसंयाजेषु याज्यापुरोऽनुवाक्ये याज्यैव प्रयाजानूयाजेषु सर्वेष्वेतेष्वाश्रुतप्रत्याश्रुते याज्यासंप्रैषश्च[1] । ये प्रस्तुतास्ते[2] स्वकर्मणो ऽन्यत्र तदनपव्याहरन्तः[3] प्रचरेयुः । ॥ ५ ॥

अवदानवत्ते ऽवदायान्वोत्तरतो ऽमुष्मा अनुब्रूहीति यथादेवतं[4] पुरोऽनुवाक्यां संप्रेष्यत्याक्रम्य दक्षिणत आश्राव्य प्रत्याश्राविते ऽमुं यजेति यथादेवतं[4] याज्यां संप्रेष्यति । वषट्कृते वषट्क्रियमाणे वा जुहोति चतुरवत्तं पञ्चावत्तं वा । पञ्चावत्तं जमदग्नीनां चतुरवत्तमितरेषामङ्गुष्ठपर्वमात्राणि दैवतान्यवदानानि तेभ्यः स्थवीयांसि सौविष्टकृतानि तथैवैडानि तथा चातुर्धाकरणिकानि[5] । घृतवतीमध्वर्यो स्रुचमिति यत्र होतुरभिजानाति जुहूपभृतावादाय सकृद्दक्षिणातिक्रान्तः पञ्च प्रयाजान्प्राचः प्रतिदिशं वा यजति । ॥ ६ ॥

आश्राव्य प्रत्याश्राविते समिधो यजेति प्रथमं प्रयाजं संप्रेष्यति यज यजेत्युत्तरान् । यजमानश्चतुर्होतारं व्याख्याय वसन्तमृतूनां प्रीणामीत्येतैः प्रयाजानां कृतं कृतमनुमन्त्रयते ऽध्वर्युः समिधः पुरस्ताज्जुहुयात्तनूनपातं दक्षिणत इडः पश्चा-

---

१ ०संप्रैषस्व AGBTV · ०संप्रैषैस्व HMLR; cp. Hir. II. 4.

२ ये प्रस्तुतास्ते MLTV; प्रास्त HB, यै प्राप्ता A, ये प्राप्त G; read ये प्रस्तुतास्ते?

३ स्वकर्मणोन्नतदनपव्याहरन्तः H; स्वकर्मणोन्यत्र तद० MA; स्वकर्मणोन्यत्रनवद्यव्याहरन्तः L; स्वकर्मणोत्र तदन्यदनपव्याहरन्तः G.; स्वकर्मणाप्यन्यत्रनपद्याहरंतः T; स्वकर्मणोत्रतदनप० B; स्वकर्मणोन्यत्रनपद्याहरंतः V.

४ यथादै० the Mss.

५ चतुर्धा० MLBHG, चातु० ATV, and the Vyākhya.

दर्धमौपभृताज्यं[१] जुह्वामानीय बर्हिरुत्तरतो मध्ये स्वाहाकारमुद्रुत्याक्रम्य प्रयाजशेषेण हवींष्यभिघारयति यदनुपूर्वाणि प्रदीयन्ते ध्रुवामभिघार्याग्नेयमभिघारयत्युपभृतमन्तत आज्यभागावाज्यहविष्कौ[२] प्रबाहुग्ज्योतिष्युत्तरार्धे ऽग्नये दक्षिणार्धे सोमाय तावन्तरेणेतरा आहुतीर्जुहोति ॥ ७ ॥

अग्नीषोमयोरिति यजमानस्तावनुमन्त्रयते[३] । ऽध्वर्युः प्रत्याक्रम्य[४] जुह्वामुपस्तीर्य मा भेर्मा संविक्था इत्यवदास्यन्पुरोडाशमभिमृशति । पञ्चहोतारं यजमानो व्याचक्षीताध्वर्युर्मांससंहिताभ्यां दक्षिणानामिकामध्यमाभ्यामङ्गुष्ठेन चाङ्गुष्ठपर्वमात्रं मध्यात्पुरोडाशस्य तिरश्चीनमवद्यति । पूर्वार्धाद्द्वितीयं चतुरवत्तिनो ऽनूचीनं । तद्वत्पश्चार्धात्पञ्चावत्तिनस्तृतीयमवदानान्यभिघार्य ध्रुवामाप्याय्य यदवदानानीति हविः प्रत्यभिघार्याग्नये ऽनुब्रूहीति दक्षिणातिक्रम्य वषट्कार आज्यं हुत्वा स्रुवेण प्रस्तरबर्हिः समज्यापिदधदिवाप्रच्छिन्पुरोडाशावदानं[५] जुहोत्याज्येनान्ततो ऽन्ववस्रावयति । मुखेन पुरोडाशादितरा आहुतीः स्रावयति । पूर्वां पूर्वां संहितामाहुतिं[६] जुहोति ।

---

१ ०ताज्य TMLRHG, ०तादाज्यं ABV cp VII. 4.

२ Thus AHRGB and Vyākhyā; ०हविषौ MLTV.

३ अनुम० AH, अभिम० MLTBV. ४ ध्वर्युरत्याक्रम्य MGT.

५ This passage is given as handed down by AMTV; the words स्रुवेण प्रस्तरबर्हिः समज्य occur only in A (and also in RHBG): the other Mss differ materially. RHB . अवदाय पूर्वार्धे स्रुचो निधाय प्रथमं पश्चार्धे जघन्यमाज्येनाभिघार्य यदवदानानीति etc., as the text accepted by me. G is shorter, but probably not complete: तद्वत्पश्चार्धात्तृतीय पञ्चावत्तिनमाज्येनाभिघार्य यदवदानानीति हविः प्रत्यभिघार्याज्यं हुत्वा स्रुवेण प्रस्तरबर्हिषी समज्या० etc.

६ आहुति or आहुतीर् the Mss., which partly are incomplete here

स्रुच्यमाघारमभिजुहोत्यग्नेरहमिति[1] हुतमाग्नेयं यजमानो ऽनुमन्त्रयते । ॥ ८ ॥

आज्यहविष्केणोपांशुयाजेन यजते । तस्योच्चैराश्रुतप्रत्याश्रुते याज्यापुरोऽनुवाक्या संप्रैषौ[2] प्रणव आगूर्वषट्कारश्चातो ऽन्यदुपांश्वाज्यसांनाय्ययोः स्रुवेणावद्यति मेक्षणेन चरूणां । दब्धिरसीत्युपांशुयाजस्य हुतं यजमानो । यथादेवतमुत्तरेण पुरोडाशेनाध्वर्युः प्रचरत्यग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्यग्नीषोमीयस्य हुतं यजमान इन्द्राग्न्योरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासमित्यैन्द्राग्नस्य हुतमनुमन्त्रयते । ऽध्वर्युः समवदाय सांनाय्याभ्यां प्रचरति । द्विः शृतस्यावद्यति द्विर्दध्नस्त्रिस्त्रिः पञ्चावत्तिन । इन्द्रस्याहमित्यैन्द्रस्य सांनाय्यस्य हुतं यजमानो ऽनुमन्त्रयते महेन्द्रस्याहमिति माहेन्द्रस्येन्द्रस्य[3] वैमृधस्येति वैमृधस्य हुतमध्वर्युर्ऋषभं वाजिनं वयममावास्या सुभगेति यथालिङ्गं विभज्य स्रुवेण पार्वणौ होमौ जुहोति । ॥ ९ ॥

दश ते तनुवो यज्ञेति षड्भिः प्रतिमन्त्रं नारिष्टहोमाञ्जुहोति पुरस्तात्समिष्टयजुष इत्येके । जुह्वामुपस्तीर्य सर्वेभ्यो हविर्भ्य उत्तरार्धात्सकृत्सकृत्स्विष्टकृते ऽवद्यति द्विः पञ्चावत्तिनो यदनुपूर्वाणि प्रदीयन्ते । द्विरभिघारयति हविःशेषान्न प्रत्यभिघारयत्यसंसृष्टामितराभिराहुतिभिरुत्तरार्धपूर्वार्धे ज्योतिषि जुहोत्यग्नेः स्विष्टकृतो ऽहमिति यजमानः स्विष्टकृतो हुतमनुमन्त्रयते ऽग्निर्मा दुरिष्टात्पात्विति चाध्वर्युरुदङ्ङत्याक्रम्य जुह्वामप आनीय वैश्वानरे

१ स्रुच्यं वाघार० G; स्रुच्यमाघार० BATVH; स्रुच्याघार० ML.
२ Thus all the Mss.; संप्रैषः Hir.
३ महेन्द्र० the Mss.

हविरिदं जुहोमीति मध्यमं परिधिं प्रदक्षिणमनुपरिषिञ्चत्यन्तःपरिधि निनयतीत्येके । स्रुचौ निधाय स्रुवेण तिर्यञ्चं प्राञ्चं वाग्नेयं विरुज्याङ्गुष्ठेनानामिकया च व्यूह्य मध्यात्पिप्पलमात्रं यवमात्रं वाज्यायो यवमात्रादिति प्राशित्रं प्राशित्रहरणे ऽवद्यत्येवमविरुज्योत्तरस्मात्पुरोडाशादवदायाभिघारयत्याग्नेयादेवावद्यतीत्येके । मित्रस्य त्वेति ब्रह्मावदीयमानं प्रेक्षते । ॥ १० ॥

तदपरेण प्रणीता निधायेडापात्र उपस्तीर्य[1] मनुना दृष्टामिति चतुरवत्तां पञ्चावत्तां वा सर्वेभ्यो हविर्भ्यः स्विष्टकृद्वत्प्रभूतामिडां समवद्यति[2] दक्षिणार्धात्पुरोडाशस्य पूर्वमवदाय संभेदाद्द्वितीयं । पूर्वार्धाद्यजमानभागमणुमिव दीर्घमाज्येन तमभ्यज्य[3] ध्रुवाया अग्रेण निधायाभिघारयति[4] । पश्चार्धात्तृतीयं[5] पञ्चावत्तिन । एवं सर्वस्य हविषो । यो मे ऽन्ति दूर इति यजमानभागे ऽवदीयमाने यजमानो जपतीडां सकृदभिघार्य होत्रे ऽध्वर्युराहरति । सुरूपवर्षवर्ण एहीति यजमान इडामाह्रियमाणां प्रतीक्षते । ऽध्वर्युर्दक्षिणेन होतारमतिक्रामत्यनुत्सृजन् । होताध्वर्युमिडया परिगृह्णाति । पश्चात्प्राङासीनः स्रुवेण होतुर्द्विः प्रदेशिन्यङ्गुलावनक्ति पर्वणोः । स तदवघ्रायाप उपस्पृशति । ॥ ११ ॥

---

१ ०पात्र उप० GHABTV and to this reading points the Vyākhyā ; ०पात्रमुप० ML and a citation in the Vaijayantī (page 207).

२ समवद्यति ABG : अवद्यति MLTV ; H incomplete.

३ आज्येनाभ्यज्य MLTV ; आज्येन तमभ्य० H : आज्येन ध्रुवाया A · आज्येन समभ्यज्य G.

४ Thus HG ; निदधाति VMLT , निधायात्तृतीयं वक्राद्दत्तिनम एव A.

५ पश्चार्धात्तृतीय HG ; दक्षिणार्धादेव तृतीयं MLTV.

यथेतं प्रत्येत्य प्रत्यगग्रेणासीनो[१] दक्षिणे होतुः पाणाविडाया अवान्तरेडामवद्यतीडालेपादुपस्तीर्य[२] प्रथममध्वर्युरवद्यत्यङ्गुष्ठप्रसृताङ्गुलीरन्तरेण[३] स्वयं होता द्वितीयं गृह्णाति लेपेन चाध्वर्युरभिघारयति । द्विः पञ्चावत्तिनो ऽङ्गुष्ठेनोपसंकुच्यामुष्टिं[४] कृत्वा मुखसंमितमिडापात्रं धारयमाणमिडोपहूता[५] सह दिवेतीडामुपह्वयमानं[६] होतारमध्वर्युराग्नीध्रयजमानश्चान्वारभन्त । इड एह्यदित एहीत्युपांशूपह्वये यजमानः सप्त देवगवीर्जपति । चिदसि मनासीत्युच्चैरुपह्वये सप्त मनुष्यगवीर्विश्वा त्वं भूत्वेतीडामुपह्वयमानामनुमन्त्रयते[७] । वायविडा ते मातेति होतारमीक्षमाणो वायुं मनसा ध्यायेत् । दैव्या अध्वर्यव उपहूतो ऽयं यजमान इत्युच्यमाने ऽध्वर्युयजमानावुपहूतः पशुमानसानीति क्रमेण जपतः सा मे सत्याशीरित्याशीःषु यजमान इडाया अहं देवयज्ययेत्युपहूतामिडां भक्षायाह्रियमाणामभिमन्त्रयत । उपहूतायामिडायामग्रेणाहवनीयमध्वर्युर्ब्रह्मणे प्राशित्रं परिहरति परिहरति ॥ १२ ॥

इति श्रौतसूत्रे षष्ठः प्रश्नः ॥

---

१ प्रत्यङ्ङग्रेणा० AGR.

२ With ०वद्यतीडालेपादु the Ms G ends.

३ उत्कृष्ट प्रसृताङ्गुलीरन्तरेण H, अङ्गुष्ठप्रसृताङ्गुलिरन्त० MLTV अङ्गुष्ठं प्रसृताङ्गुली अन्त० A; cp. Āśv. I. 7. 4.

४ उपसकृच्य अमुष्टिं L; उपसंकुच्य मुष्टिं MARBH; उपसंकुच्य अमुष्टिं TV; cp. Āśv. I. 7. 6.

५ धारयमाणमिडो० MLATVRB; धारयमाणेमिडो० H.

६ उपह्वयमान MLTRVBA; उपह्वयमानां H and the Vyākhyā. The only possible reading would be: उपह्वयमानस्.

७ भूत्वेती० MLHATBV and the Vyākhyā; भूवेती० R.

ऋतस्य पथा पर्येहीति ब्रह्मा परिह्रियमाणमभिमन्त्र्य सूर्यस्य त्वा चक्षुषेत्याह्रियमाणं प्रतीक्ष्य देवस्य त्वेति प्रतिगृह्य पृथिव्यास्त्वा नाभाविति पृथिव्यामासाद्य सुपर्णस्य त्वा गरुत्मत इत्यवेक्ष्याङ्गुष्ठेनानामिकया चोपसंगृह्यातिहाय दतो ऽग्नेस्त्वास्येन प्राश्नामीति जिह्वाग्रे निधायापश्च ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामीति सहाद्भिरसंखेत्याभिगिरति । या अप्स्वन्तर्देवता इत्यपः प्राश्याचम्य घसीना[1] मे मेति नाभिमभिमृश्य वाङ्म आसन्निति यथालिङ्गमिन्द्रियाणि संमृश्यारिष्टा विश्वानीति सर्वाण्यङ्गानि मयि प्राणापानाविति वा प्राशित्रहरणं प्रक्षाल्य पूरयित्वा दिशो जिन्वेति पराञ्चं निनयति । पुनरद्भिः पूरयित्वा मां जिन्वेत्यभ्यात्मं निनयति तस्मिन्प्राशिते वाचस्पतये त्वा हुतं प्राश्नामि सदसस्पतये त्वा हुतं प्राश्नामीति होतावान्तरेडां प्राश्नाति । जुष्टिरसीति प्राश्यमानां[2] यजमानो ऽनुमन्त्रयते । ॥ १ ॥

इडे भागमिति यजमानपञ्चमा वाग्यता इडां भक्षयन्त्या मार्जनान्मनो ज्योतिरित्यन्तर्वेदि पवित्रवति देशे मार्जयन्त । आग्नेयं चतुर्धा कृत्वा बर्हिषदं करोति ब्रध्न पिन्वस्वेति बर्हिषदं यजमानो ऽनुमन्त्र्य दिशां कॢप्तिरसीति प्रतिदिशं चतुर्धा कृतान्व्यूह्येदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इति क्रमेण व्यादिशतीदं यजमानस्येत्यध्वर्युर्यजमानभागं निर्दिश्य व्यादिष्ट-

---

१ Thus H and the Mantrasamhitā; खसीना the Vyākhyā; खसिना the other Mss.

२ Thus AB; ०मानं the other Mss.

स्यैकं[1] स्विष्टमग्नीधे षडवत्तं करोति । सकृदुपस्तीर्य सकृदवद्यति । पुनरुपस्तीर्य सकृदवदाय तयोर्द्विरभिघारयति । दिवो भागो ऽसीत्याग्नीध्रः प्राश्नात्युपहूतो द्यौः पितेति द्वाभ्यामाग्नीध्रभागं यजमानो ऽनुमन्त्रयते । ब्रह्मयजमानभागावध्वर्युः पृथग्दारुपात्राभ्यामादाय वेदेन परिहरत्यन्येन दारुपात्रेण होत्रे ॥ २ ॥

अन्येनाध्वर्यवे । पृथिव्यै भागो ऽसीति होताभ्यवहरत्यन्तरिक्षस्य भागो ऽसीत्यध्वर्युर्दिवो भागो ऽसीति ब्रह्मा संस्थिते ऽभ्यवहरति । दक्षिणाग्नौ पक्वं महान्तमपरिमितमन्वाहार्यमोदनमभिघार्योदगुद्वास्यान्तर्वेद्यासादयति । ब्रह्मन्ब्रह्मासीत्यासन्नं ब्रह्माभिमृशति ब्रध्न पिन्वस्वेत्यान्तादनुवाकस्येयं[2] स्थालीति च यजमानो[3] । दनिणसद्भ्य उपहर्तवा इत्यध्वर्युः संप्रेष्यति दक्षिणत एतेति यजमानो । ब्राह्मणा अयं व ओदन इति दक्षिणतस्तेभ्यो ऽन्वाहार्यं चतुर्धा विभज्य दक्षिणां ददाति । प्रतिगृहीतायामध्वर्युरुत्तरतः परीतेति संप्रेष्यति । हविःशेषानुद्वास्यानूयाजार्थावङ्गारौ प्रत्यूह्य ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति । देव सवितरेतत्त इति ब्रह्मणा प्रसूत एषा ते अग्न इत्यनूयाजसमिधमग्नीध्र आदधात्याधीयमानामेतेनैव यजमानो ऽनुमन्त्रयते यं[4] ते[4] अग्न आवृक्षामीति तिसृभिः समिद्धमग्निम् । ॥ ३ ॥

१ Thus VMLT, निर्दिश्यादि० HAB.

२ Thus TV; ०स्येत्यन्ता० ML; HA are deficient up to the end of next khanda.

३ यजमान ML.

४ यस्ते ML.

स्फ्यादुन्मुच्येध्मसंनहनैरनुपरिक्रामन्नाग्नीध्रः[1] पूर्ववत्परिधीनग्निं च सकृत्सकृत्संमार्ष्ट्य।ग्ने वाजजिद्वाजं त्वा ससृवाꣳसमिति मन्त्रं[2] संनमती।ध्मसंनहनान्यद्भिः[2] संस्पृश्य यो भूतानामधिपतिरित्यग्नौ प्रहरति। वेदिर्बर्हिः शृतं हविरिति यजमानो जपति। सप्तहोतारं पुरस्तादनूयाजेभ्यो व्याचक्षीतौ।पभृदाज्यशेषमध्वर्युर्जुह्वामानीयापरेणाहवनीयं सकृदेव दक्षिणातिक्रम्य त्रीननूयाजान्यजत्या।श्रुतप्रत्याश्रुते देवान्यजेति प्रथममनूयाजं संप्रेष्यति यज यजेत्युत्तरौ[3]। समिधि पूर्वार्धे प्रथमं जुहोति मध्ये द्वितीयं प्राञ्चमुत्तमं। तेनेतरौ[4] पूर्वावनूयाजौ[4] भिनत्ति। बर्हिषो ऽहमित्येतैः प्रतिमन्त्रं यजमानो ऽनूयाजानां हुतं हुतमनुमन्त्रयते। ॥ ४ ॥

उदङ्ङत्याक्रम्याध्वर्युर्यथायतनं स्रुचौ सादयित्वा वाजस्य मा प्रसवेनेत्यनुष्टुग्भ्यां[5] वाजवतीभ्यां व्यूहति। वाजस्य मा प्रसवेनेति दक्षिणेनोत्तानेन पाणिना सप्रस्तरां जुहूमुद्गृह्णात्य।था सपत्नाꣳ इन्द्रो म इति नीचा सव्येनोपभृतं निगृह्णात्यु।द्ग्राभं चेति जुहूमुद्गृह्य निग्राभं चेत्युपभृतं निगृह्णाति। ब्रह्म देवा अवीवृधन्निति प्राचीं जुहूमूहत्य।था सपत्नाꣳ इन्द्राग्नी म इति प्रतीचीमुपभृतमूहत्येताभ्यामेव यजमानः स्रुचावनुमन्त्रयते।

---

१ ०क्रामन्नाग्नीध्रः HAB ; ०क्राममग्नीध्रः ML ; ०क्राममाग्नीध्रः TV, cp. VI. 2.

२ मन्त्र सनमति om. AHRB.

३ ०त्युत्तरौ MHARB, ०तौतरौ LTV.

४ तेनेतरपूर्वा० HARB.

५ ०ष्टुग्भ्यां LT ; ०ष्टुब्भ्यां M ; ०ष्टुभ्यां H ; ०ष्टुप्भ्यां ARB ; ०ष्टुक्भ्यां V.

ऽध्वर्युरुपभृतं प्रोच्याहृत्य वसुभ्यस्त्वेति त्रिभिः[1] प्रतिमन्त्रं जुह्वां परिधीन्यथाधानमनक्ति । वसून्देवान्यज्ञेनापिप्रेमिति त्रिभिः प्रतिमन्त्रमेतानभ्यज्यमानान्यजमानो ऽन्यत्र प्रस्तराद्ध्वर्युर्जुहूं सादयित्वा संजानाथामिति विधृतीभ्यां[2] प्रस्तरमादाय[3] बर्हिषि विधृती निधाय स्रुक्षु प्रस्तरमनक्त्यक्तꣳ रिहाणा इति जुह्वामग्राणि वियन्तु वय इत्युपभृति मध्यानि प्रजां योनिं मा निर्मृक्षमिति ध्रुवायां मूलान्येवं पुनरनक्ति । तृतीये[4] ध्रुवायामादितो मूलानि मध्यान्युपभृति जुह्वामन्ततो ऽग्राणि ॥ ५ ॥

समङ्क्तामित्यज्यमानं[5] यजमानो ऽनुमन्त्रयते ऽध्वर्युरक्तस्य तृणमपादाय सुरचितं निदधात्यपिप्रेरिति[6] तद्यजमानो ऽनुमन्त्रयते । दक्षिणोत्तराभ्यां पाणिभ्यामध्वर्युः प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्यासीन आश्राव्य प्रत्याश्रावित इषिता दैव्या होतार इति संप्रेष्यतीदं द्यावापृथिवी भद्रमिति होत्रा सूक्तवाके ऽनूच्यमान आप्यायन्तामाप इति सह शाखया प्रस्तरमाहवनीये प्रहरति । नात्यग्रं प्रहरेन्न पुरस्तात्प्रत्यस्येदूर्ध्वमुद्यौति । कर्षन्निव न्यञ्चमन्ततः पर्यावर्तयन्नग्नीद्गमयेति संप्रेष्यत्यञ्जलिनाग्नीत्प्रस्तरं त्रिरूर्ध्वमुद्यौति । सूक्तवाके होता यां यां देवतामनुब्रूते ऽग्ने-

---

१ Thus ATBV; त्रिः H; in ML this passage is omitted; तिसृभिः the Vyākhyā.

२ Thus MLAHB; ०तिभ्यां TV.

३ ०मपादाय the Vyākhyā.

४ VMLT ins. तु; so also the Vyākhyā.

५ समङ्क्ता० H; समन्ता० ML; समंता० TV; समक्ता० AB.

६ आपिप्रेरिति H; अग्निप्रेरग्न इति MLV; अपिप्रेति A. अपितेरग्न इति T; ०पिप्रेमिति B.

रहमुज्जितिमनूज्जेषमित्येतैस्तां[१] देवतां यजमानो ऽनुमन्त्रयते यर्हि होता यजमानस्य नाम गृह्णीयात्तर्ह्येमा अग्मन्नाशिषो दोहकामा इति ब्रूयादनुप्रहरेत्यध्वर्युः संप्रेष्यति । स्वगा तनुभ्य[२] इति प्रस्तरस्य तृणमग्नीदनुप्रहरत्येतदेतदिति[३] त्रिरङ्गुल्या निर्दिशति[४] । दिवः खीलो ऽवतत इत्यनुप्रहृतं यजमानो ऽनुमन्त्रयते । ॥ ६ ॥

आयुष्पा अग्ने ऽसीत्यध्वर्युर्यथारूपं प्राणायतनानि संमृश्य ध्रुवासीति वेदिमभिमृश्याग्नीदित्याग्नीध्रमीक्षते[५] । संवदस्वेत्याग्नीध्रो । ऽगा३न्नग्नीदित्यध्वर्युराहागन्नित्याग्नीध्रो[६] । मध्यमं परिधिमन्वारभ्य आवयेत्यध्वर्युः । श्रौषडित्याग्नीध्रः स्वगा दैव्याहोतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीति संप्रेष्यति । तच्छंयोरिति शंयुवाके होत्रोच्यमाने यं परिधिमिति मध्यमं विमुच्याग्नौ[७] प्रहरति । वि ते मुञ्चामीति यजमानो विमुञ्चति । यज्ञस्य पाथ उपसमितमिति दक्षिणोत्तरौ परिधी युगपत्पाणिभ्यामध्वर्युः प्रहरन्नुत्तरस्याग्रं मध्यमस्याधो[८] ऽङ्गारेषूपोहति

---

१ We expect ता तां, but cp VII 8, beg.

२ तनुभ्य VHATB, तनूभ्य ML

३ Thus B; तृणमग्निरनु० AHTV; तृणमग्नावनु० ML.

४ ०ङ्गुल्या निर्दिशति MLTV (as Āp.), ०ङ्गुल्यान्ववदिशति AB (as Hir); ०ङ्गुल्यादनिर्दि० H.

५ Thus MLTV०. ०भिमृशति instead of ०मृश्य BA and probably R; H is incomplete.

६ The sign of pluti added by me.

७ Thus MLATV, विमुञ्चन्नग्नौ R and the Vyākhyā, विमुचन्नग्नौ H, विमुच्यतेग्नौ B.

८ मध्यमस्याधो RH (मध्यमस्यायो A, मध्यमस्याह्नो B) and a citation in the Vaijayantī (page 219); मध्यमस्याग्रम् ML, मध्यमस्यांगारे० TV.

दक्षिणस्याग्रमुपरि । विष्णोः शम्योरहं देवयज्ययेति शम्युवाके यजमानो ऽभिमन्त्रयते[1] । यजमानं प्रथतेत्यध्वर्युः प्रहृतान्परिधीनभिमन्त्र्य जुह्वा बिल उपभृतो ऽग्रमवधाय सꣳस्रावभागाः स्थेति स्रुचोराज्यशेषमग्नौ संस्रावयति । यज्ञ शं च मे यज्ञ नमस्ते यज्ञेष्टो[2] यज्ञो भृगुभिरिति च यजमानः संस्रावभागान्देवाननुमन्त्रयते । यत् कामयते तदभिवदति । हविःशेषान्प्राश्नाति[3] । ॥ ७ ॥

वेदो ऽसि वित्तिरसीति वेदमन्तर्वेद्यासन्नं यजमानो ऽभिमृशति विदेयेत्येतस्य पुरस्ताद्यद्यद्भ्रातृव्यस्याभिध्यायेत्तस्य नाम गृह्णीयात्तदेवास्य सर्वं वृङ्क्ते । सस्रुवामाज्यस्थालीमाग्नीध्र आदत्ते । वेदं होता जुहूपभृतावध्वर्युः । पत्नीः संयाजयिष्यन्तः प्रत्यञ्चो यन्ति । पूर्वेण गार्हपत्यमध्वर्युर्दक्षिणातिक्रम्याग्नेर्वामपन्नगृहस्येति युगधुरि स्रुचौ विमुञ्चति । यदि पात्र्या निर्वपत्येतेनैव स्फ्ये विमुच्यापरेण गार्हपत्यमुपविश्योपांशूच्चैर्वा स्रुग्भ्यां पत्नीः संयाजयति वेदं वोपभृत्य[4] पत्न्यामन्वारब्धायां दक्षिणो[5] ऽध्वर्युरुत्तर आग्नीध्रो मध्ये होताज्यस्थाल्याः स्रुवेण जुह्वां चतुर्गृहीतं गृहीत्वा सोमायानुब्रूहीति संप्रेष्याश्राव्य प्रत्याश्राविते सोमं यजेति संप्रेष्य वषट्कृत उत्तरार्धे सोमं यजति । ॥ ८ ॥

---

१ नुमन्त्रयति ML.

२ यज्ञेष्टो ML, यज्ञेष्टो भृगुभि॰ TV. यज्ञेतीष्टो H. यज्ञेनीष्टो यज्ञो भृगु॰ A; यज्ञोतिष्टो यज्ञो भृ॰ B

३ Thus the Mss. हविःशेषानृत्विजः प्राश्नन्ति the Vyākhyā.

४ Thus H and cp. Hir.; वेदं वोपयम्य the other Mss. and the Vyākhyā.

५ Thus MLATV and the Vyākhyā (one copy); दक्षिणे HB and the Vyākhyā (another copy).

एतयैवावृता दक्षिणार्धे त्वष्टारं तावन्तरेण देवपत्नीर्यजति परिश्रिते ऽपरिश्रिते वा । चतुर्गृहीतेनाज्येन राकां पुत्रकामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामो । देवानां पत्नीभ्यो ऽनुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्राविते देवपत्नीरिष्ट्वाग्निं गृहपतिं यजति । सं पत्नी पत्येति स्रुवेण गार्हपत्ये संपत्नीयं जुहोति तयान्वारब्धेन स्रुवेण वा[1] । सोमस्याहं देवयज्ययेति यजमानः प्रतिमन्त्रं पत्नीसंयाजानां कृतं कृतमनुमन्त्रयते । ऽध्वर्युः पूर्ववद्धोतुरङ्गुलिपर्वणी अनक्ति । तदवघ्राय होताप उपस्पृशति । दक्षिणे होतुः पाणावध्वर्युश्चतुर आज्यबिन्दूनिडामवद्यति षडग्नीध्र । इडामुपह्वयमानं[2] होतारमध्वर्युराग्नीध्रः[2] पत्नी चान्वारभन्त । उपहूतेयं यजमानेत्युच्यमान उपहूता पशुमत्यसानीति पत्नी जपति । ॥ ९ ॥

उपहूतो द्यौः पितेत्युपहूतामाज्येडामाग्नीध्रः प्राश्नाति । इडास्माननुवस्तामिति यजमान आज्येडामुपह्वयमानामनुमन्त्रयत । उपहूतामृत्विजः[3] प्राश्याचम्य तूष्णीमद्भिर्मार्जयन्त । इडान्तमाहवनीये ग्रम्युवन्तं गार्हपत्ये विपरीतं वा । यदि[4] ग्रम्युवन्तं[4] पाश्चात्ये वेदान्तृणमपादाय तस्याग्रं जुह्वामञ्ज्यात्स्रुवे मध्यमाज्यस्थाल्यां मूलं । तत्प्रस्तरेण[5] व्याख्यातमन्वाहार्यपचन इध्मप्रव्रश्च-

१ तयान्वारब्धे स्रुवेण वा H.

२ उपह्वयमानां VMLT, उपह्वयते होता तम० (changed into होतारम०) AB; H (partly incomplete) आज्यबिन्दूनिडामुपह्वयते होतारमध्वर्युराग्नीध्रः etc. Do the words इडामुपह्वयते होता belong to the text? The Vyākhyā agrees with the text as given above

३ उपहूतामृ० BMLTV, उपहूतायामृ० HA

४ यदि ग्रम्यवन्तं TMLAV; ग्रम्युवन्तौ HB without यदि.

५ तत्प्रस्तरे H; तत्प्रस्तरवद् MLTV तत्तत्प्रस्तरवद् A, तत्तत्प्रस्तरे व्या० B.

नान्याधाय चतुर्गृहीत आज्ये जुह्वां फलीकरणानीप्याग्ने ऽदब्धायो इति जुहोत्यपरं चतुर्गृहीतं गृहीत्वा पिष्टलेपानो-प्योलूखले मुसल इति पिष्टलेपं जुहोति । विपरीतमेके या सरस्वती विशोभगीना तस्यै ते स्वाहा या सरस्वती वेशभगीना तस्यै ते स्वाहेति[१] तयोर्यजमानो मुखं विमृष्टे । ॥ १० ॥

वेदो ऽसि वित्तिरसीति वेदं होता पत्न्यै प्रदाय वाचये-दिमं विष्यामीति योक्त्रपाशं विष्यते[२] तस्याः सयोक्त्रे ऽञ्जलौ[३] पूर्णपात्रमानयति । समायुषेत्यानीयमाने सा[४] जपति तन्नि-नीय[५] मुखं विमृज्योत्थाय[६] पुष्टिमती पशुमतीति यथार्थं गच्छति । घृतवन्तं कुलायिनमिति वेदं गार्हपत्यात्संततं होता-हवनीयात्स्तृणन्नेति । वेदो ऽसि वेदो म आहरेति[७] त्वया वेदिमिति च वेदं[८] स्तीर्यमाणं[८] यजमानो ऽनुमन्त्रयते । यथे-तमध्वर्युराहवनीयं गत्वा जुह्वा स्रुवेण वा ब्रह्म प्रतिष्ठेत्येषो ऽनु-वाको यदकर्म यत्प्रमत्ता[९] अन्तरगाम[९] मनो ज्योतिरयास्वाग्ने यदस्मिन्यज्ञे स्वस्ति न इन्द्रो यत इन्द्रः स्वस्तिदा भूर्भुवः सुव-

१ The second mantra not in ML, it belongs to the text.

२ विमुञ्चते H only.

३ Thus MLTV, तस्या अञ्जलौ सयोक्त्रे HAB.

४ सा given by AHB, not by MLTV.

५ तन्निनीय BHA. निनीय MLTV.

६ विमृज्योत्थाय H, विमृग्योत्थाय AB; विमृज्योत्तिष्ठति MLTV.

७ आहरेति AHB: आभरेति MLTV and Vyākhyā; आभर the Mantrasamhitā.

८ वेद स्तीर्यमाण VLT; वेदं विस्तीर्यमाण M; वेदि स्तीर्यमाणा HB; वेदैस्तीर्यमाणां A.

९ प्रमत्तान्त० HB; प्रमत्तोन्त० ML; प्रमत्तोंतर० TV: प्रमत्तान्तरगाम्मनो० A. The Mantra acc. to the Mantrasamhitā runs: यत्प्रमत्ता अन्तरगाम किञ्चिदस्मिन्यज्ञे सन्नतो कर्मतो वा । अनयाकृत्या etc., as Āp. III. 11. 2 end.

रित्येतैः सर्वप्रायश्चित्ताहुतीर्हुत्वा पूर्ववद्ध्रुवामाप्याय्यान्तर्वेद्यूर्ध्वस्तिष्ठन्स्रुवयाहवनीये देवा गातुविद इति त्रीणि समिष्टयजूंषि संततं जुहोत्येकं द्वे वा । मध्यमे स्वाहाकारे बर्हिः प्रहरति प्रहृत्य वाभिजुहुयात् । ॥ ११ ॥

प्रवसति यजमाने सह समिष्टयजुषा यजमानभागं जुहुयादग्नेऽदब्धायो इति यजमानो ह्रियमाणं दिवः खीलो ऽवतत इति बर्हिः प्रह्रियमाणमनुमन्त्रयते । सं यज्ञपतिराशिषेति यजमानभागं प्राश्नातीदꣳ हविः प्रजननं मे अस्त्विति घृतस्य दधिक्राव्णो अकारिषमिति दध्नो । न वैश्यराजन्यौ सांनाय्यं प्राश्नीतो । ऽग्रेणाहवनीयं प्रणीताः पर्याहृत्य को वो ऽयोक्षीदित्यध्वर्युरन्तर्वेदि विमुञ्चति । तासु संततामुदकधारामानयति[1] । सदसि सन्मे भूया इत्यानीयमानायां धारायां यजमानो जपति । प्राच्यां दिशि देवा इत्येतैर्यथालिङ्गं परिषिच्य समुद्रं वः प्रहिणोमीत्यन्तर्वेदि निनीय यदप्सु ते सरस्वतीति द्वाभ्यां मुखं विमृष्टे । यं देवा मनुष्येष्वित्युपवेषमादायाध्वर्युर्योपवेषे शुगित्युत्करे निरस्येत् ॥ १२ ॥

निरमुं नुदेत्येताभिर्वा । यानि घर्मे कपालानीत्यध्वर्युयजमानौ विमोचनं जपतो । यजमान उपोत्थाय दक्षिणेन पदा विष्णोः क्रमो ऽस्यभिमातिहेति त्रिभिस्त्रीन्विष्णुक्रमान्प्राचः क्रामति[2] तृतीये पदे तिष्ठन्नाहवनीयं नात्येति । विष्णोः क्रमो ऽसि शत्रूयत इति चतुर्थं जपत्यगन्म सुवरित्याहवनीयमुपतिष्ठत उद्यन्नद्य मित्रमह इति षड्भिरादित्यमैन्द्रीमावृतमन्वावर्त

१ उदधारा० HABTV; उदकधारा० ML and Vyākhyā.

२ क्रामति VLT; क्रामयति M; क्रमते HAB.

इति[1] प्रदक्षिणमावर्तते । समहं प्रजयेत्याहवनीयं पुनरुपावर्तते समिद्धो अग्न इत्युपसमिन्द्धे । वसुमान्यज्ञ इत्युपतिष्ठते ऽग्ने वर्च[2] इत्यन्वाहार्यपचनमग्न आयूंष्यग्ने पवस्वेति द्वाभ्यां गार्हपत्यमग्ने गृहपत इति च तामाशिषमाशासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो ऽजातः[3] स्यात्तामाशिषमाशासे ऽमुष्मै ज्योतिष्मतीमिति जातपुत्रो । बहुपुत्रः सर्वेषां पुत्राणां नामान्यनूच्य ज्योतिष्मतीमित्यन्ततो वदति[4] । ॥ १३ ॥

वेदतृणान्युपस्थे निधाय ये देवा यज्ञहन इत्यतिमोचानन्तर्वेद्यासीनो जपति । कस्त्वा युनक्ति स त्वा विमुञ्चत्विति यज्ञं विमुञ्चति । सर्वमनुवीक्षते । यथेतमेत्य यजमानायतन उपविश्य पयस्वतीरोषधय इत्यप आचम्याग्ने व्रतपते व्रतमचारिषमिति पञ्चभिराहवनीये समिधो ऽभ्याधाय तैरेव व्रतं विसृज्य यज्ञो बभूव स आबभूवेति यज्ञस्य पुनरालम्भं जपति । गोमाँ अग्न इति प्राङुत्क्रम्य जपति । ब्राह्मणांस्तर्पयितवा इति संप्रेष्याष्टौ[5] दश वा ब्राह्मणान्भोजयेच्छतं पशौ सहस्रं सोमे । वृष्टिरसीत्यप उपस्पृशति । प्रवसंश्चाहवनीयाभिमुखः सर्वं याजमानं जपति । ब्रह्मभागं प्राश्यायाडग्निरिति ब्रह्मा समिधमाधाय हुत्वोपस्थाय वा यथेतमुदङ्ङतिक्रामति । संतिष्ठते दर्शपूर्णमासौ दर्शपूर्णमासौ । ॥ १४ ॥

## इति श्रौतसूत्रे सप्तमः प्रश्नः ॥

---

१ Thus MLTV; पञ्चभिरा॰ HAB, cp. Āp. IV. 15. 1.

२ Thus ABHTV; पवस्व ML.

३ जातः without avagraha the Mss.

४ वदति THABV; जपति ML.

५ Thus MLB; संप्रेष्य दृष्टौ TV; संप्रेष्यत्यष्टौ AH.

अथाग्रयणेष्टिस्।तयानिष्ट्वा नवान्नं[१] नाश्नाति । यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन्ताः पराभवन्।नाग्रयणं भवति हुताद्याय यजमानस्यापराभावायेति विज्ञायते[२] । ओषधीनामग्रपाकेन यजते[३] । शरदि व्रीहिभिर्यजेत । पूर्वं पुराणैर्व्रीहिभिराग्नेयमष्टाकपालं निर्वपेन्नवैरितराणि हवींष्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं पयसि चरुं द्यावापृथिव्यमेककपालं । तस्य वैश्वदेविकैककपालवत्कल्पो । ऽपि वाज्येन द्यावापृथिव्यमुपांशुयाजवत्कुर्यात्।सौम्यं श्यामाकं चरु।मिन्द्राग्नी रोचना दिवः श्नथद्वृत्रमित्यैन्द्राग्नस्य याज्यानुवाक्ये । विश्वे देवा ऋतावृधो विश्वे देवाः शृणुतेति वैश्वदेवस्य । द्यावा नः पृथिवी प्र पूर्वजे इति द्यावापृथिव्यस्य । प्रथमजो वत्सो दक्षिणा । ॥ १ ॥

वसन्ते यवैर्यजेत । तेषां व्रीह्याग्रयणवत्कल्पो । नाग्नेयश्यामाकौ भवतो । व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत दर्शपूर्णमासावा[४] यवेभ्यो । यवैरिष्ट्वा यवैरेव यजेता[५] व्रीहिभ्यो । वर्षासु श्यामाकं चरुं निर्वपति[६] । तस्य[६] सप्तदश सामिधेन्यस्।त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वन्तावाज्यभागावाप्यायस्व सं त इति हविषः प्रेद्धो अग्न इमो अग्न इति संयाज्ये । यथर्तु वेणुप्रियङ्गुनीवारैः श्यामाकवद्यजेत[७] । यत्प्राक्

१ नवान्नं MLABTV and the Vyākhyā (cp. Ait br. VII. 9. 1): नवानां H.

२ I am unable to point out this śruti in a Brāhmana.

३ Thus the Mss.; यजेत the Vyākhyā.

४ Thus BAHRTV, मासौवा ML.

५ Thus A; यजेत the other Mss.

६ निर्वपति LR; निर्वपतीति M, निर्वपन्त्येतस्य TV, निर्वपतीत्येके HAB.

७ श्यामाकवद्यजेत A; श्यामाकवद्वायजेत BMLTV; ०वद्यायजेत RH.

प्रोक्षणान्तत्कृत्वा शतायुधायेति[1] पञ्चाज्यानीर्जुहोति पुरस्तात्स्विष्टकृतो वाग्निः प्रथमः प्राश्नात्विति श्यामाकस्य यजमानभागं प्राश्नाति । भद्रान्नः श्रेय इति व्रीहीणामेतमु त्यं मधुनेति यवानामपि वा पौर्णमास्याममावास्यायां वाग्रयणेष्टिमन्वायातयेदपि वा नवैरेव पौर्णमास्याममावास्यायां[2] वा[2] यजेत नवैर्वाग्निहोत्रं[3] जुहुयात्सर्वासामोषधीनां ग्राम्याणामारण्यानां वौपासने गार्हपत्ये वा स्थालीपाकं श्रपयित्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यो[4] जुहुयाच्चतुरो वा ब्राह्मणान्भोजयेदनिष्टे ऽप्याग्रयणे ब्रह्मणि हुतं भवति । ॥ २ ॥

अथ चातुर्मास्यान्यक्षय्यं ह वै सुकृतं चातुर्मास्यैर्भवति[5] । तानि यक्ष्यमाणो वसन्ते प्राचीनप्रवणे वैश्वदेवेन यजते । फाल्गुन्यां चैत्र्यां पौर्णमास्यां वोदगयन आपूर्यमाणपक्षस्य पुण्याहे[6] वा प्रयुञ्जीत । तस्य पूर्वेद्युरग्निर्होतेति मनसानुद्रुतेनानुवाकेनाहवनीये हुत्वारम्भणीयामिष्टिं कुर्याद्वैश्वानरं द्वादशकपालं पार्जन्यं चरुं च । वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य याज्यानुवाक्ये पर्जन्याय प्रगायताच्छा वद तवसं गीर्भिरिति पार्जन्यस्य । वैश्वानरे हिरण्यं दक्षिणा धेनुः पार्जन्ये । ऽतो

---

१ शतायुधायेति ALRBV · शतायुधामिति M, शतायुधोमिति H; शतायुधामेति T.

२ Thus ML, पौर्णमासीममावास्यां वा AHRB; पौर्णमासीममावास्यायां वा TV.

३ Thus ALBVT; निवैर्वा M; यवैर्वा HR.

४ Thus B; ०तुर्थिभ्यो TMLV; ०तुर्थाभ्यो HA and Vyākhya.

५ Thus ARV; चातुर्मास्यो भ० H; चातुर्मास्ये भ० MLT: चातुर्मास्यै भ० B.

६ Thus ATVB; पुण्याह्ने ML; पुण्येऽहनि HR.

ऽन्यत्त्रिद्धेष्टिस्त्रातुर्मास्यानां[1] यज्ञक्रतोः पञ्चर्त्विजो ऽधिकः प्रतिप्रस्थाता । यथास्यैतदहरुदवसायानुदवसाय[2] वा वैश्वदेवहविर्भिर्यक्ष्यमाणो ऽत्र पशुबन्धवद्गार्हपत्यादग्निं प्रणीय तद्वदग्न्यायतने ऽग्निं प्रतिष्ठापयतीत्येके[3] । ऽग्नीनन्वाधायामिक्षार्थे वैश्वदेव्यै वत्सानपाकरोति । सप्तदश सामिधेन्यस्त्रेधा प्रसूमयं बर्हिः संनद्धं । तदेकधा पुनः संनह्यत्येवमिध्ममुभयत्र पुनःसंनहने मन्त्रः । सायं हुते ऽग्निहोत्रे सांनाय्यं दोहयति । दध्नातनक्ति । ॥ ३ ॥

प्रातर्हुते ऽग्निहोत्रे पाणिप्रक्षालनादि कर्म प्रतिपद्यते । पात्रसंसादनकाले द्वे उपभृतौ पृषदाज्यधानी द्वितीया द्वे आज्यस्थाल्यौ दधिधानी द्वितीया[4] पालाशं वाजिनपात्रं चमसं । निर्वपनकाल आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुमित्येतानि पञ्च संचराणि । मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालं । त्रिष्फलीकृतेषु यथाभागमन्त्रेण सौम्यं चरुं सारस्वतं चरुं विभज्य पिष्टेषु संयुतेषु तथा[5] पौष्णं चरुं[6] विभज्य कपालान्युपधाय चरुं चाधिश्रित्य प्रातर्दोहवद्दुग्ध्वा तप्ते पयसि सायंदुग्धमानयति[7] ।

---

१ Thus emended; पार्जन्य इत्यन्यत्त्रिद्धेष्टिस्त्रा० MB; पर्जन्यत्त्रिद्धेष्टिस्त्रा० VT; पार्जन्यन्यत्त्रि० etc., L; पार्जन्येऽत्यन्यत्त्रिद्धेषिद्धेतिचा० H.; पार्जन्येत्यन्यत्त्रिद्धेष्टिस्व० A; पार्जन्येन्यत्त्रिद्धेष्टि० R.

२ Thus (difficult to understand!) the Mss. exc. A which has: यास्यै० instead of यथास्यै०.

३ Thus AMLBTV; तद्वग्न्यायतने R; दक्षिणायतनेग्निं प्र० H.

४ द्वितीया च H only.

५ तथा MLAVT; यथा HRB.

६ चरुं not in MLATBV.

७ सायं दुग्धमानयति H; सायं दुग्धं दध्यानयति BMLTV; सायं दुग्धं दध्नानयति A.

या [1]संहृता सामिक्षा । यद्द्रवति तदाजिनमन्यस्मिन्पात्रे निषिच्य निदधाति । ॥ ४ ॥

हुत्वोत्तरं परिग्राह्यमाज्येन दध्ना चोदेहीति प्रैषं संनमत्याज्यं निरूप्य पृषदाज्याय दधि निर्वपति । तस्याज्यधर्मः[2] स्थान्नाधिश्रयत्याज्यग्रहणे जुहूपभृतोश्चतुर्गृहीते गृहीत्वा निरूप्याज्यस्य तृतीयं निरुप्ते दध्न्यानीय[3] मह्मीनां पयोऽसीति द्वितीयोपभृति पञ्चगृहीतं पृषदाज्यं गृह्णाति । हविरुद्वासनेषु द्वयोः पात्रयोरामिक्षामुद्धृत्य[4] वाजिनैकदेशेनोपसिञ्चत्येककपालं पात्रे ऽन्यस्मिन्नुद्वास्य तदाज्येनाभिपूरयित्वाविःपृष्ठं[5] कुर्यादित्येके । प्रथमं चातुर्मास्यान्यन्वारभमाणस्य व्याहृतीभिर्हवींष्यासादयति तथा संवत्सर । उत्करे वाजिनमासादयत्यग्निर्होतेति[6] पञ्चहोत्रा[7] यजमानो हवींष्यासन्नान्यभिमृशति वाजिनं च । निर्मन्थ्यं करिष्यन्नग्नेर्जनित्रमसीति शकलमादाय बर्हिष्यपरेणाहवनीयं निधाय वृषणौ स्थ इति प्राचीने बर्हिषो[8] शकले निधायोर्वश्यसीत्यधरारणिमादाय[9] पुरूरवा इत्युत्तरारणिं च

१ या संहृता the Vyākhyā; यत्संहृता ML; सहृता H; संहिता RB; यत्संहिता ATV.

२ तस्याज्यधर्म स्यात् Vyākhyā; तथाज्यधर्म स्यान्ना० M; तदाज्यधर्मस्यान्ना० LHATB; ०तदाज्यधर्मस्यान्ना० V.

३ दध्न्यानीय LAMTV; दध्नानीय H; दध्यानीय B; दधन्यानीय the Vyākhyā.

४ Thus AHR and the Vyākhyā; ०चांयुद्धृत्य (०द्धत्य) MLTV.

५ ०पूरयत्याविः० BR.

६ ०साद्याग्नि० HR.

७ होत्रा AMLTV; यद्दोत्रा H; पद्दोत्रा RB.

८ Emended; (दर्भौ The Vyākhyā;) बर्हिषि or बर्हि the Mss.

९ ०धरारणिम० MLV; ०धरामरणीम० H; ०धरामरणिं B; ०धरारणीम० A.

घृतेनाक्ते इत्याज्यस्थाल्या बिले ऽक्त्वायुरसीति समवदधात्यग्नये[१] मथ्यमानायानुब्रूहीति संप्रेष्याभि त्वा देव सवितरिति होत्रा त्रिरनूक्तायां गायत्रं छन्दो ऽनु प्रजायस्वेति प्रजातिभिस्त्रिभिस्त्रिः[२] प्रदक्षिणं मन्थमावर्त्य यथाकामं मन्थति । जातायानुब्रूहीति जाते संप्रेष्यति । ॥ ५ ॥

प्रह्रियमाणायानुब्रूहीति प्रह्रियमाणे । भवतं नः समनसावित्युत्तरपरिधिसन्धिना निर्मन्थ्यमाहवनीये[३] प्रहरत्यग्नावग्निरिति प्रहृत्याभिजुहोत्यग्नये समिध्यमानायानुब्रूहीति संप्रेष्यति । यथाप्रकृति चतुरो दुर उषासानक्ता दैव्या होतारा तिस्रो देवीरिति चतुरः प्रकृतिवदुत्तम इति नव प्रयाजा इज्यन्ते । चतुर्थे ऽर्धं समानीयाष्टमे सर्वं समानयते । तेष्वादितश्चतुर्भिरनुमन्त्रणैश्चतुरो यजमानो ऽनुमन्त्रयते दुरःप्रभृतींश्चतुरश्चतुर्थस्यानुमन्त्रणेन पञ्चमे नवमं । सावित्रैककपालयोर्देवतामुपांश्वध्वर्युर्जत्यखण्डमेककपालमवदायर्जु[४] प्रतिष्ठितमपर्यावर्तयञ्जुहोति यथायं न दिक्षु पद्येत । यदि पद्येत वरं दत्त्वा स्रुगग्रेण प्रतिष्ठापयेत्प्रत्यादाय वा पुनः स्थापयेन्न पाणिनेत्येके । मधुश्च माधवश्चेति चतुर्भिर्मासनामभिरेककपालमभिजुहोति । प्रथमजो वत्सो दक्षिणा मिथुनौ वा गावौ । पृषदाज्यं यदुपभृति तज्जुह्वामानीय तामेवोपभृत्यैतेन नवानूयाजा इज्यन्ते । ॥ ६ ॥

---

१ समदधाति ML; समवदधाति ATV; समवयान्यग्नं० B; in H this whole passage is missing.

२ Thus TV and cp. Baudh. IV. 5: 115. 10; प्रजावत् त्रिभिस्त्रिभिस्त्रिः A; प्रजापतिभिस्त्रि० MLB and the Vyākhya.

३ Thus H and the Vyākhyā: निर्मथ्यम० HB; निर्मथितम० MLTV.

४ R. probably देवता उपांश्व० instead of देवतामुपांश्व०.

पशुवदष्टावाद्यान्यजमानो ऽनुमन्त्रयत उत्तमेनोत्तमं संवत्सरीणाꣳ स्वस्तिमाशास्ते दिव्यं धामाशास्त इति होता सूक्तवाकस्याशीःष्वनुवर्तयति । प्रहृत्य परिधीन्संस्रावेणाभिहृत्य वाजिनपात्र उपस्तीर्य बर्हिषि विषिञ्चन्वाजिनेन तत्पात्रं पूरयति । नाभिघारयति । वाजिभ्यो ऽनुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्राविते वाजिनो यजेति संप्रेष्यत्यनवानं होता याज्यामन्वाह । वषट्कृते ऽध्वर्युः स्रुचा स्रावयञ्जुहोति[1] । वाजिनस्याग्ने वीहीति होतानुयजति । वाजिनोद्रेकेण प्रतिदिशं यजति दिशः स्वाहेति प्राच्यां प्रदिशः स्वाहेति दक्षिणत आदिशः स्वाहेति पश्चिमतो[2] विदिशः स्वाहेत्युत्तरत उद्दिशः स्वाहेति मध्ये स्वाहा दिग्भ्य इति प्रदक्षिणमनुपरिषिञ्चति नमो दिग्भ्य इति कृत्वोपतिष्ठते । ऽन्तर्वेदि शेषं समुपहूय परस्परमसावुपह्वयस्वेत्यामन्त्रणे कृत उपहूत इति प्रतिवचने च वाजिनां भक्षो अवत्विति सर्वे वाजिनं भक्षयन्ति तत्र प्रथमो होता यजमानश्चरमः ॥ ७ ॥

पशुवत्समिष्टयजूंष्यतो ऽन्यत्सिद्धेष्टिः[3] संतिष्ठते । श्वः पौर्णमास्येष्ट्वा[4] यजमानः स्वायतन उपविश्याप उन्दन्त्वित्यद्भिः शिरो ऽभ्युद्य त्रेण्या[5] शलल्येक्षुशलाकया वा केशान्विभज्यर्तमेव परमेष्ठीति प्रतिदिशं केशान्निर्वर्तयति । श्मश्रूण्यग्रे वापयते सर्वं

---

१ Thus ABHR; स्रुचास्रावं जु० M: स्रुचा वा स्रावयन् जु० TV; स्रुचामाश्रावयन् जु० L.

२ Thus ABHR; प्रतीच्यां MLTV.

३ Cp. VIII. 3; VIII. 13 end; IX. 12.

४ पौर्णमास्ये इष्ट्वा ML; पौर्णमास्येनेष्ट्वा H.

५ श्येण्या AV.

वा वापयते । तद्धृतमिति[1] यजमानो जपति ब्राह्मण एकहोतेति चानुवाकमेतेषु पर्वसु मध्ये मांसानशनादिव्रतानि[2] । चतुर्षु चतुर्षु मासेषु यो यजते स चातुर्मास्ययाजी । वसन्ते वैश्वदेवेन वर्षासु वरुणप्रघासैः शरदि साकमेधैर्यो यजते स ऋतुयाजी । ॥ ८ ॥

आषाढ्यां श्रावण्यां वा वरुणप्रघासैर्यजते । वैश्वदेववत्तन्त्रमेतेषां वेदौ कृत्वाग्रेण गार्हपत्यं समे द्वे प्राच्यौ वेदी प्रतिप्रस्थाता दार्शिकीं दक्षिणां वेदिं करोति पाशुकीमध्वर्युरुत्तरां तत्र पाशुकीमुत्तरवेदिं च । पृथमात्रेण[3] चतुरङ्गुलेन वा श्रोण्यंसेष्वसंभिन्ने वेदी । अध्वर्युप्रतिप्रस्थातारौ ब्रह्माणं संप्रेष्यतो । द्वौ ब्रह्मा प्रसौति । प्रतिप्रस्थातान्तरा वेदी संचरत्यपरेणोत्तरां वेदिं स्तम्बयजुर्हरन्नाध्वर्युमभिपरिहरत्युत्तरस्मिन्नेवोत्करे[4] निवपति । यदेवाध्वर्युः करोति प्रतिप्रस्थाता तत्करोत्युत्तरात्परिग्राहात्कृत्वा[5] दक्षिणवेदेरुत्तरश्रोणेः प्रक्रम्योत्तरस्या वेदेर्दक्षिणादंसात्स्फ्येनैकस्फ्यामनुसंभिनत्ति । पशुबन्धवदुभावाहवनीयौ प्रणीयोभयत्रोत्तरवेदिसंभारेष्वग्नी[6] प्रतिष्ठापयतो । ऽग्नीनन्वाधाय मारुत्या वारुण्याश्चोभयोरामिक्षयोर्वत्सानपाकुरुतः सायंदोहौ पृथग्दधिनी कुरुतः । ॥ ९ ॥

---

१ तद्द्रुतमिति MLAV ; ग्निं दूतमिति HB ; तद्द्रुतोमिति T.

२ Thus HMAR ; मांसाशनादि० LTV.

३ पृथमात्रेण MLTV and the Vyākhyā ; प्रथमात्रेण A ; प्रादेशमात्रेण HR, प्रथममात्रेण B.

४ Thus AR (only ०ध्वर्युरभि० ) ; ०यजुर्हरांतंनाध्वर्युमभि० H ; ०यजुर्हरन्नध्वर्युरपि परि० MB ; ०यजुर्हरन्नध्वर्युनाभिपरि० LTV.

५ Thus MLTV ; उत्तरे परिग्रहे HAB.

६ Thus A ; ०ष्वग्नि THV ; ०ष्वग्निं MLB.

सद्यस्काला वरुणप्रघासा इत्येके । प्रातर्हुते ऽग्निहोत्रे पाणिप्रक्षालनादि प्रतिपद्य पृथक् पात्राणि प्रयुङ्क्तः[1] । स्रुचः शमीमय्यो हिरण्मय्यो वाध्वर्युः पञ्च संचराण्यैन्द्राग्नमेकादशकपालं च निर्वपति प्रतिप्रस्थाता मारुतीमामिक्षां प्रति मारुत्यै मेष्यै यवान्निर्वपत्यध्वर्युर्वारुणीमामिक्षां प्रति वारुणाय मेषाय यवान्निरुप्य कायमेककपालं निर्वपति । पुंव्यञ्जनो मेषः स्त्रीव्यञ्जनी मेषी । प्रोक्षणीशेषेण यवान्संयुत्यावहन्त्यैन्द्राग्नपर्यन्तानां कपालेषूपहितेषु मनागुपतप्तानामवाञ्जनपिष्टानां यवानां प्रतिपुरुषं करम्भपात्राण्येकातिरिक्तानि तेषामेवाध्वर्युर्वारुणं मेषं प्रतिप्रस्थाता मारुतीं मेषीमेकादशसु द्वादशसु वा कपालेष्वधिश्रयत्याप्येभ्यो निनीयाग्नी प्रणयत इत्येके । ऽग्निवत्युत्तरं परिग्राहं परिगृह्य स्रुवं[2] स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येन दध्ना चोदेहीति संप्रैषं संनमति । ॥ १० ॥

वैश्वदेववत्पृषदाज्यं गृह्णीतो । हविषामुद्वासने ऽनैडकीभिरूर्णास्तुकाभी रोमशौ कुरुतो । यदि ता न विन्देतां कुशाग्रैश्चमसे वाजिनोपस्तीर्यामिक्षामुद्धृत्य तस्यां मेषमवदधाति तथा वारुण्यां मेषीं । तयोः शमीपर्णकरीरसक्तूनुपवपतस्तानि करम्भपात्रेषु चोप्योत्तरस्यां वेद्यामाग्नेयादीन्यन्यानि हवींष्यध्वर्युः सादयति दक्षिणायां मारुतीं प्रतिप्रस्थाता करम्भपात्राणि च । मेषौ व्यत्यस्यतो मारुत्यां मेषीं वारुण्यां मेषमुत्करे ऽध्वर्युरेव वाजिने[3]

---

१ Thus emended with the Vyākhyā; प्रयुनक्ति the Mss.; cp. also Hir.

२ A and the Vyākhyā स्रुवौ; read स्रुवं च ? cp. IX. 1, XIV. 1.

३ Thus LTV; वाजिन श्चा० M; वाजिनमा० AHB. The dual is right, as appears from the Vyākhyā.

आसादयति[1] । निर्मन्थ्येन चरित्वा वेदं निधायाग्नये समिध्यमानायेति संप्रेष्यति । सामिधेनीष्वनूक्तासु वेदाभ्यामाहवनीयौ त्रिरुपवाजयत । उत्तरे संमृष्टे ऽसंमृष्टे दक्षिणे प्रघास्यान्हवामह इति प्रतिप्रस्थाता पत्नीं वाचयित्वोदानयति । ॥ ११ ॥

पत्नि कति ते जारा इति तां पृच्छति । सा यान्प्रब्रूयात्तान्वरुणो गृह्णात्विति निर्दिशति । यज्जारं सन्तं न प्रब्रूयात्प्रियं ज्ञातिं रुन्ध्यादसौ मे जार इति निर्दिशेद्विपरीतौ वानयनप्रश्नावैषीके[2] शूर्पे ओप्य करम्भपात्राणि पत्नी शीर्षन्नधि निधायान्तरा वेदी गत्वाग्रेण दक्षिणमग्निं[3] प्रत्यङ्मुख्यवतिष्ठते प्रत्यङ्मुखस्य यजमानस्तानि[4] पत्नी यजमानाय प्रयच्छति । स शीर्षन्नधि निधाय मो षू ण इति पुरोऽनुवाक्यामन्वाह यद्ग्राम इति पत्नी यजमानस्य[5] याज्यामनुब्रूतो जुहुतस्य शूर्पं चानुप्रहरत्यध्वर्युः प्रतिप्रस्थाता वा जुहोत्यन्वारभेते[6] इतरावक्रन्कर्म कर्मकृत इति विपरायन्तौ जपतो ऽध्वर्युर्वा । ॥ १२ ॥

प्रतिप्रस्थाता दक्षिणमग्निं संमार्ष्ट्यैन्द्राग्नपर्यन्तः प्रचरिते[7] मारुत्या आमिक्षायाः प्रथमेनावदानेन सह प्रतिप्रस्थाता सर्वां

---

१ Thus LTV; वाजिन आ० M; वाजिनमा० AHB. The dual is right, as appears from the Vyākhyā.

२ विपरीतावानयनप्रश्ना० MLTV; विपरीतौ उभावपि दानप्रश्ना० H; ०परितौ वा वदन(प्र)ग्राव० A; विपरीतौ वीतानयनप्रश्ना० B. (better ?)

३ Thus AMLTV; अग्रेणान्वाहार्यपचनं HB.

४ Thus AHRB; यजमानस्था तानि MLTV.

५ पत्नीयजमानौ R; पत्नीयजमाना H (preferable reading ?).

६ Thus ABRTV; ०न्वारभेयातामितरौ H; ०न्वारभे त्वितरा० M; ०न्वारभेति इतरा० L.

७ Thus ARB and the Vyākhyā; प्रचरित H; प्रचरति MLTV.

मेषीमवद्यति । द्वितीयेनावदानेन शमीपर्णकरीरसक्तूनवद्यन्मरुद्भ्योऽनुब्रूहीति संप्रेष्यति । वारुण्या आमिक्षायाः प्रथमेनावदानेन सहाध्वर्युः सर्वं मेषमवद्यति । द्वितीयेन शमीपर्णकरीरसक्तूनवद्यन्वरुणायानुब्रूहीति संप्रेष्य वषट्कृते ऽध्वर्युर्जुह्वैककपालमवदाय कायानुब्रूहीति संप्रेष्य पूर्ववद्धुत्वा नभश्च नभस्यश्चेति चतुर्भिर्मासनामभिरेककपालमभिजुहोति । सप्तभ्यो वारुण्यन्तेभ्य[1] इडां[2] समवदाय प्रतिप्रस्थात्रे प्रयच्छति । तस्मिन्प्रतिप्रस्थाता मारुत्या अवदायादधात्युपहूतां यजमानषष्ठाः प्राश्नन्ति । धेनुर्दक्षिणा । परिवत्सरीणां स्वस्तिमाशास्त इत्याशिःषु[3] होता पूर्ववदनुवर्तयति । प्रहृत्य परिधीनुभौ वाजिभ्यो ऽनुब्रूहीति पूर्ववच्चरत । आ मा विशन्त्विन्दव इति सर्वे वाजिनं भक्षयन्ति । पूर्णपात्रवर्जमतो[4] ऽन्यत्स्विष्टेष्टिः । ॥ १३ ॥

पूर्णपात्रस्थाने ऽवभृथश्चतुर्गृहीतान्याज्यानि[5] । वारुण्या निष्कासं तुषांश्चादाय चात्वालोत्करावन्तरेणोदङ्ङतिक्रम्य यत्रापस्तत्र सौमिकावभृथमभ्यवयन्ति । नायुर्दादि न साम गीयत । ऋजीषस्थाने तुषा भवन्ति । वारुणवन्निष्कासमप्सु जुहोत्यवभृथादुदेत्य यजमानः पत्नी च मनोज्ञाय वाससी दत्तो । नैव वावभृथस्तूष्णीं तुषनिष्कासमप्सूपवपेदित्येक । इमं विष्यमीति

---

१ Thus BAH; वारुण्यां तेभ्य MLTV.

२ Thus H; इतीडां the other Mss.

३ आशिषु A; आदिषु MB; आशिष्टु LTV; आशिषो H.

४ Thus MLBTV; वर्जमितो B; वर्जमीतितो A; वर्जमितितो H.

५ Emended; चतुर्गृहीताज्यानि MLTV; चतुर्गृहीता HAB; cp. Āp. VIII. 7. 13.

योक्त्रपाशं विष्यते[1] । देवीराप इति[2] सौमिकवत्समारोप्याग्नी-नुदवसाय निर्मथ्य[3] श्वोभूते पौर्णमास्येष्ट्वा[4] निवर्तनं वापनं च व्याख्यातमंत्र[5] यद्वर्म इति निवर्तनमन्त्रो मन्त्रः । ॥ १४ ॥

इति श्रौतसूत्रेऽष्टमः प्रश्नः ॥

---

१ Thus ABTV ; विष्यति MLR , विमुञ्चति H.

२ इति BHAR ; इत्यादि MLTV.

३ निर्मथ्य MLTBV ; निर्मथ्येन H ; निर्मथ्यते A.

४ पौर्णमास्येष्टाति L, पूर्णमास्येष्ट्वाति M, पौर्णमासेनेष्ट्वा H.

५ व्याख्यातमत्र HR ; व्याख्यात MLTV ; व्याख्यानमंत्रा AB.

पूर्ववच्चतुर्षु[1] मासेषु कार्तिक्यां मार्गशीर्ष्यां वा पूर्वस्मिन्पर्वण्यौपवसथ्ये ऽहनि द्व्यहं साकमेधहविर्भिर्यजते । ऽग्नये ऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यतेति यथा समाम्नाता अनीकवान्त्सांतपनो गृहमेधीय इति तिस्र इष्टयो । यदनीकवतो बर्हिस्तत्सांतपनस्य तद्गृहमेधीयस्य । तत्स्तीर्णं बर्हिर्नान्यदिध्माबर्हिर्न प्रयाजानूयाजास्तूष्णीं[2] गृहमेधीयस्य वत्सानपाकरोत्यपि वा सायंदोहवद्दुग्धे चरुर्भवति । सायं हुते ऽग्निहोत्रे ऽग्नीनन्वाधाय वेदं कृत्वा परिस्तरणादि[3] प्रतिपद्य पात्रसंसादनकाले[4] कुम्भीं तिस्रश्च पात्रीः संसादयति । निर्वपणकाले मरुद्भ्यो गृहमेधिभ्यश्चतुरो मुष्टीन्निरुप्य यावद्यजुरुत्पूताभिमन्त्रितदुग्धं प्रभूतान्व्रीहीनन्वावपति । कपालस्थाने ध्रुवो ऽसीति मन्त्रं संनम्य चरुमुपदधाति । पिष्टोत्पवनस्थाने तण्डुलानुत्पुनाति । प्रोक्षणीरासादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येनोदेहीति संप्रेष्यति । ॥ १ ॥

आज्यग्रहे ध्रुवायामेव गृहीत्वा ब्रह्माणमामन्त्र्य वेदिं प्रोक्ष्य तच्छेषं निनीयापिसृज्य[5] पवित्रे अन्तर्वेदि विधृती निधाय प्रस्तरमासाद्य ध्रुवां स्रुवं च सादयत्येषासददित्यभिमन्त्रणं संनमति । विश्ववसौत्याज्याभिमन्त्रणं । हविरुद्वासने शृताद्धविषः

---

१ Perhaps originally the word पूर्ववत् belonged to the preceding khaṇḍa.

२ नप्रयाजनूयाजतू॰ H ; नप्रयाजाः BMLTV ; संप्रयाजानूयाजाम् A.

३ परिस्तरणादि only in HARB.

४ संसादनकाले AMLTV ; संसादने HRB.

५ निनीय विसृज्य MLBTV.

शरमादाय[1] सुरचितं निधाय निर्णिज्य पात्रीषूपस्तीर्य तासु प्रतिपुरुषमोदनानुद्धरति । त्रीनित्येके । निष्कासितां कुम्भीं निदधात्यनिर्मृष्टं दर्व्युदायुवनमवधायोदनानुद्धृतानभिघारितानुत्पूतानलंकृतानन्तर्वेद्यासादयत्यन्वाहार्यपचने[2] पत्न्यै[3] स्त्रीकुमारेभ्यश्च प्रतिवेशमोदनं पचति । तद्द्वयोः पात्रयोरुद्धृत्योद्धृतयोरोदनयोर्बिले कृत्वा तयोः प्रभूतमाज्यमासिच्यान्तर्वेद्यासादयति । होतृषदनकल्पनान्ते[4] ऽग्निमुपवाज्याज्यभागाभ्यां प्रचर्य स्रुच्युपस्तीर्य सर्वेभ्य ओदनेभ्यो द्विर्द्विः समवदायाभिघार्य[5] प्रत्यज्य मरुद्भ्यो गृहमेधिभ्यो ऽनुब्रूहीति संप्रेष्य दक्षिणातिक्रम्याश्राव्य प्रत्याश्राविते मरुतो गृहमेधिनो यजेति संप्रेष्यति । वषट्कृते हुत्वोदङ्ङत्याक्रम्य सर्वेषामुत्तरार्धेभ्यः सकृत्सकृत्समवदायाग्निं[6] स्विष्टकृतं यजती।डान्तो गृहमेधीयः संतिष्ठते । ॥ २ ॥

हविर्भोजनेभ्य[7] ओदनानुपहरति । प्रतिवेशपक्वान्पत्नी स्त्रीकुमाराः प्राश्नन्ति यः स्थाल्यामोदनस्तमन्ये ब्राह्मणाः । सर्व आशिता[8] आञ्जते[9] ऽभ्यञ्जते । ऽनु वत्सान्वासयन्ति । सुहिता

१ Thus ATV, शरावमादाय MLHB.

२ ०धायोदनानु० MH, ०धायौदनानु० LATV.

३ पत्न्यै A; पत्नी MLTBV (H. dep.).

४ ? ०सादयति होतृषदन (or न) कल्पनान्तेऽग्निमुप० VMLT: ०सादयत्याज्यभृतासु देवतास्वग्निमुप० H, ०सादयत्यवभृतासु देवतास्वग्निमुप० AB, cp. Hir., page 481. The other reading is probably (cp. XIV. 2) जुष्टासु देवतास्वग्निमुपवाज्या० ।

५ द्विर्द्विः समव० AHB; द्विर्द्विरव० MLTV.

६ सकृत्समवदाय BHA: सकृत्सकृदवदाय MLTV.

७ हविर्भ्योजिनेभ्य MLTV; हविर्ह्रोतेभ्य दूवोद० H, हविर्भोजिभ्य ओद० AB.

८ अशिताः H, आशीता TLABV; आशीत M.

९ Thus AB; अञ्जते MLHTV.

एतां रात्रिं वसन्ति । पूर्णदर्व्याय शरनिष्कासं[1] दर्व्युदायुवनं च परिश्रिनत्त्यपररात्रे ऽध्वर्युरभिवान्यवत्साया अग्निहोत्र्याश्च वत्सौ संयम्य पुरा प्रातरग्निहोत्राद्दर्व्यामुपस्तीर्य तस्यां सर्वश एव निष्कासं शरं चानिम्लुष्टं[2] दर्व्युदायुवनमवधाय[3] द्विराज्येनाभिघार्य-त्वृषभे नर्दति पूर्णा दर्वीत्यनुद्रुत्य[4] देहि म इति गार्हपत्ये जुहोति । यद्यृषभो न नर्देद्ब्रह्मा हिंकुर्याद्यो[5] नर्दति स[6] दक्षिणा पयसा प्रातर्हुते ऽग्निहोत्रे मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालं निर्वपति साकं सूर्येणोद्यता । मरुद्भ्यः स्वतवद्भ्य इत्येके । ऽथ पञ्च संचराण्यैन्द्राग्नमेकादशकपालमैन्द्रं[7] चरुं वैश्व-कर्मणमेककपालमित्यपराण्यष्टौ महान्ति हवींषि वरुणप्रघा-सोत्तरविहारवत्प्रयुनक्त्यसंसृष्टमैन्द्राग्नमवहृत्य सुरचितं पृथक्कुषा-न्निदधात्यग्ने वेर्होत्रं वेर्दूत्यमिति स्रुच्यमाघारमाघारयति । वागस्याग्नेयीति यजमानो ऽनुमन्त्रयते । सहस्व सहस्यस्वेति चतुर्भिरेककपालमभिजुहोति । धेनुर्दक्षिणेदावत्सरीणाऽ स्वस्ति-माशास्त इत्याशिःषु[8] होतानुवर्तयत्यैन्द्राग्नतुषैरवभृथमभ्य-वयन्ति । ॥ ३ ॥

---

१ शरनिष्कासं HATBV ; सनिष्कासं ML.

२ ? शरांनिम्लुष्ट H ; शरीरं वा निम्लुष्ट ML ; शरं च निम्लुष्टं A ; शरं वा निर्म्लुष्ट TV ; शरन्त्वनिम्ल० B.

३ ०युवनमवधाय AHB ; ०युवनेवधाय MLTV ; read perhaps अवदाय see Āp. and Hir.

४ अनुद्रुत्य ML ; अनूच्य HB ; अनूद्दत्य A ; ०अनुद्दत्य TV.

५ Thus ATV ; ०कुर्यात्सो नर्दति H ; ०कुर्याद्योन्नर्दति ML.

६ Read सा ?

७ Thus ATBV ; चराणि (not संचराणि) MLH.

८ आशिष्ठु LTV ; आशिषं MB ; आशिष H ; आशिषु A.

अथ महापितृयज्ञो भवति । वेदिं कृत्वान्वाहार्यपचनस्य दक्षिणापूर्वस्यां[1] दिशि दिक्स्रक्तिमतीं चतुररत्नीं यजमानमात्रीं वा समचतुरश्रां वेदिमुद्धृत्य न खनेत् । देवप्रवादे[2] मन्त्रे सर्वत्रोपरि देवशब्दस्य पितृशब्दं संनमति यथा देवेभ्यः पितृभ्यो जुष्टं देवानां पितृणां परिषूतमसि॰ देवपितृबर्हिरिति । सर्वतः परिश्रित्योदीच्यां स्रक्तौ द्वारं करोत्यपरिगृहीत उत्तरस्मिन्परिग्राहे ऽन्वाहार्यपचनादङ्गारानुद्धृत्य वेदिमध्ये निदधात्ययमत्राहवनीय । एतमाहवनीयं गार्हपत्यमन्वाहार्यपचनं चान्वाधाय पिण्डपितृयज्ञवद्बर्हिराहरति । वर्षीयानिध्म इध्माद्भवति । मध्यमोत्तरौ द्वौ परिधी त्रयो वा । पात्रसंसादने[3] ऽर्धपात्रं प्रोक्षणीकुम्भ इक्षुशलाका वारणं पात्रं शरावं वा येन चार्थस्तान्येकैकशः प्रयुनक्ति । निर्वपणकाले सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपतीति यथा समाम्नातानि त्रीणि हवींषि । दक्षिणतः प्राचीनावीती यवान्निर्वपत्युत्तरत एवोपवीय निर्वपेदिति विज्ञायते[4] । प्रोक्षणीभिर्यवान्संयुत्यावहत्य त्रिष्फलीकृत्य यथाभागमन्त्रेण षट्कपालं विभज्य पिनष्टि । ॥ ४ ॥

दक्षिणतः षट्कपालान्युपधाय ध्रुवमसीति प्रथमेन मन्त्रेणान्वाहार्यपचने धानाभ्यः कपालमुपदधाति मखस्य शिरो ऽसीति षट्कपालमधिश्रित्य तेनैव[5] मन्त्रेण घर्माः स्थ विश्वायुव इति

---

१ पूर्वस्यां instead of दक्षिणापू॰ AMLTV, but cp. Hir., दक्षिणतः पुरस्ताद्दक्षिणाग्नेः.

२ Thus MLTV : ॰खनेद्देवप्रवादे A ; ॰त्यसरं निर्वेदप्रवादे H ; B useless.

३ पात्रसादने the Mss.

४ See TBr. I. 6. 8. 2.

५ तेन BLTHAV ; तेनैव M.

संनम्य वा[१] धाना आवपति तास्त्र विदह्यमानाः शेरते विदह्यमाना बहुरूपा भवन्ति[२] । परिगृहीत उत्तरस्मिन्परिग्राहे पत्नीसंनहनादन्यत्संप्रेष्यति । न पत्न्यन्वास्ते न संयाजयन्तीति विज्ञायते[३] । चतुर्गृहीतान्युत्तरेण[४] गार्हपत्यमाज्यानि गृह्णाति द्विवीपभृति[५] । वेदिस्तरणे प्राचीनावीत्यग्रेषु बर्हिरभिगृह्य वेदिं स्तृणंस्त्रिः प्रसव्यं धून्वन्पर्येति । शिष्टानभिगृहीतान्दर्भान्प्रस्तरीकृत्योपवीय[६] त्रिरधून्वन्स्तृणन्प्रदक्षिणं पर्येति । द्वौ त्रीन्वा परिधीन्परिदधाति । यदि त्रीनावाहने परिधीँरपोर्णित्युच्यमाने वा दक्षिणं मध्यमे परिधावुपसमस्यति । ॥ ५ ॥

विहाय विधृती तूष्णीं प्रस्तरं न्यस्यति । हविषामुदासने यथाभागमन्त्रेण धाना विभज्य पिष्टार्धान्सक्तून्कृत्वार्धे[७] वारणपात्रे ऽभिवान्यवत्साया दुग्धमानीय तस्मिन्सक्तूनोप्येक्षुशलाकामन्थेन दक्षिणेनाहवनीयं त्रिः प्रसव्यं दक्षिणामुखो[८] ऽनारभ्योपमन्थत्यन्वाहार्यपचनादेकोल्मुकमादायापरेण[९] गार्हपत्यं हत्वा-

---

१ सनम्य वा MLTV; संनम्या A; संनम्ययामि अवपति H; सन्ना ययच्च अव॰ B.

२ बहुरूपा भवन्ति MLTV; बहुरूपा बहुरूपा विभजति H; बहुरूपा॰ यति A; ॰रूपा आर्जति B.

३ See TBr. I. 9. 9. 10.

४ Before चतुर्गृही॰ B ins. समन्वासीनाज्यमवेक्षते; A: न समन्वासीताज्यमवेक्षते and H: समन्वासीताज्यमवेक्षते. The words, as given by B, may belong to the text, cp. Hir.: नान्वास्ते गृहेष्वासीनाज्यमवेक्षते.

५ Thus conjecturally, cp. Hir.; द्व्योपभृति BH; द्विर्द्विरुपभृति MLTV and the Vyākhyā; द्विधद्विरुपभृति A.

६ Thus the Vyākhyā; प्रस्तरीकृत्वो॰ the Mss.

७ Thus A; पिष्टार्धसक्तू॰ H; विष्वार्धा॰ B; पिष्ट्राधा॰ MLTV.

८ Thus ABHTV; दक्षिणाभिमुखो ML.

९ Thus ATV; तारभ्यो॰ B; न्वारभ्यो॰ MLH.

ग्रेणाहवनीयं पर्याहृत्यान्तर्वेदि दक्षिणेनाहवनीयं निदधाति हवींष्यलंकृत्याज्यानि पुरोडाशं धानाः करम्भमिति हवींष्येकैकमनूचीनान्युदाहरन्ति दक्षिणतः पुरोडाशं मध्यतो धाना उत्तरतः करम्भं । दक्षिणेन परिश्रयणमाञ्जनमभ्यञ्जनं कशिपूपबर्हणं दशा[1] स्फ्यमुदकुम्भं चैकैकं स्थापयति । ब्रह्मा च यजमानश्च दक्षिणतो होताध्वर्युराग्नीध्रश्चोत्तरतो । ऽध्वर्युर्वेदं निधायाग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीति संप्रेष्यत्युशन्तस्त्वा हवामह इत्येकां सामिधेनीं होता त्रिरन्वाहेध्ममध्वर्युस्त्रेधं विभज्यानूयाजसमिधमवशिष्य प्रणवे प्रणवे[2] त्रैधमादधाति । ॥ ६ ॥

संसृष्टे ऽग्नौ नार्षेयं वृणीते न होतारमाश्राव्य प्रत्याश्राविते सीद होतरित्येतावन्तं प्रवरं ब्रूयादपबर्हिषः प्रयाजा । औपभृतस्यार्धं[3] जुह्वामानीया[4] नो[5]ऽग्ने सुकेतुना त्वꣳ सोम महे भगमिति जीववन्तावाज्यभागौ । सर्वे प्राचीनावीतिनो विपरिक्रामन्त्याज्यानि हवींषि च विपरिहरन्त्युत्तरेणाहवनीयं ब्रह्मयजमानौ दक्षिणेनेतरे । दक्षिणेन जुहूमुपभृतं[6] सादयति तां दक्षिणेन ध्रुवां दक्षिणेन पुरोडाशं धानाः सादयति ता[7] दक्षिणेन मन्थं । षडवत्तः पञ्चावत्तिनां पञ्चावत्तश्चतुरवत्तिनामुपांशु

---

१ दशा (*viz.*, दशाः) H; दशां MLATRBV.

२ प्रणवे once HRB.

३ Thus HR; प्रयाजानौ० AMLTVB.

४ ०भृतस्यार्धं AMLTV; ०भृतस्याजस्य HB; ०भृतस्य जु० R.

५ Thus A; जुह्वामानयमानोऽग्ने MLBHTV; cp. Āp. VIII. 14. 24.

६ Thus AB and Vyākhyā; जुहूपभृतं MLHTV.

७ तां LHATB; ता V.

पितृयज्ञेन चरन्ति । त्रिभ्यो हविर्भ्यः समवदायैकैकां देवतां यजति । तत्तद्देवतायै तत्तद्धविषः प्रथममवद्येद्द्विः पञ्चावत्तिनः सकृत्सकृच्चतुरवत्तिनो जुह्वामुपस्तीर्य पुरोडाशादवदाय धानाभ्यश्च मन्थाच्च[1] सकृत्सकृदवदाय सकृदभिघारयति चतुरवत्तिनः । सोमाय पितृमते ऽनु स्वधेति संप्रेष्यति[2] । त्वꣳ सोम प्रचिकितो मनीषा त्वया हि नः पितरः सोमेति होता द्वे पुरोऽनुवाक्ये सप्रणवे अन्वाहाथाध्वर्युर्दक्षिणतो[3] हविरादायोदङ्ङतिक्रम्या[4] स्वधा स्वधेति वाश्रावयत्यस्तु स्वधा स्वधेति वा प्रत्याश्रावयति । ॥ ७ ॥

सोमं पितृमन्तꣳ स्वधेति[5] स्वधा कुर्विति वा संप्रेष्यति । ये स्वधामह इत्यागूर्भवति । त्वꣳ सोम पितृभिः संविदान इति होता यजति । स्वधा नम इति वषट्करोत्येतयैवावृतोत्तराभ्यां यथादेवतं यजत्यप्याश्रुतप्रत्याश्रुतान्येव । न स्वधाशब्द इत्येके । धानाभ्यः पुरोडाशान्मन्थाच्चावदाय पितृभ्यो बर्हिषद्भ्यो ऽनु स्वधेति संप्रेष्यति बर्हिषदः पितरो ऽहं पितॄनिति द्वे । उदङ्ङतिक्रम्याश्राव्य प्रत्याश्राविते पितॄन्बर्हिषदः स्वधा स्वधा कुर्विति वा संप्रेष्यति । ये स्वधामह इत्यागूरुपहूताः पितर इति यजति । स्वधा नम इति वषट्करोत्युदङ्ङतिक्रम्य मन्थात्पूरो-

---

१ Thus ATV; मथ्याच्च MLHB.

२ संप्रेष्य AMLBTV; H reads: स्वधेति स्वधीकुर्वन्ति वा संप्रेष्यति.

३ न्वाहायाध्वर्यु० BHA; न्वाहार्याध्वर्यु० MT; न्वाहाध्वर्यु० LV.

४ ०योदङ्ङति० AH and the Vyākhya; ०योदगति० MLTBV. Read अवदाय instead of आदाय.

५ It is striking that इति is given only this first time, not further on.

डाशाद्धानाभ्यश्चावदाय पितृभ्यो ऽग्निष्वात्तेभ्यो ऽनु स्वधेति संप्रेष्यत्यग्निष्वात्ताः पितरो ये अग्निष्वात्ता ये ऽनग्निष्वात्ता इति पुरोऽनुवाक्ये । पितॄनग्निष्वात्तान्स्वधा स्वधा कुर्विति वा संप्रेष्यति । ये स्वधामह इत्यागूर्भवति[1] वान्यायै[1] दुग्ध इति यजति । स्वधा नम इति वषट्करोति । जुह्वामुपस्तीर्य त्रयाणां हविषां दक्षिणार्धेभ्यः समवदाय द्विरभिघार्याग्नये कव्यवाहनाय स्विष्टकृते ऽनु स्वधेति संप्रेष्यति । यदग्ने कव्यवाहन त्वमग्न ईडित इति द्वे । अग्निं कव्यवाहनꣳ स्विष्टकृतꣳ स्वधा स्वधा कुर्विति वा संप्रेष्यति । ॥ ८ ॥

ये स्वधामह इत्यागूर्भवति । मातली कव्यैरिति यजति । स्वधा नम इति वषट्करोति । दक्षिणपूर्वार्धे इतराभिरसंसक्तां जुहोति । मेक्षणमिक्षुशलाकां[2] चानुप्रहरति । यज्ञोपवीतिनः सर्वे विपरिक्रामन्त्याज्यानि हवींषि च विपरिहरन्ति दक्षिणेनाहवनीयं ब्रह्मयजमानावुत्तरेणेतरे । जुहूमुत्तरेणोपभृतं ध्रुवां च पुरोडाशमुत्तरेण धानामन्थौ । न प्राशित्रावदानं । मन्थाद्वेडामवद्यत्युपहूतायामिडायां ततः[3] किंचिदवघ्राय बर्हिषि लेपं संन्यस्यति । प्राचीनावीतिनो[4] । हविःशेषान्पात्र्यां संप्रयुत्य[5] त्रीन्पिण्डान्कृत्वैतत्ते ततासौ ये च त्वामन्विति प्रतिमन्त्रं तिसृषु

---

१ Thus TV; ०र्भवति । वास्यायै L; ०र्भवत्यभिवात्यायै HRB; ०र्भवति । अपिवा स्वधायै M.

२ ०शलाकामंयं R and nearly the same H, cp. IX. 6 : 94. 12.

३ ततः om. H.

४ A only ०वीती; if the plural is correct, the word may be taken as an abbreviated sentence. Vyākhya: सर्वे प्राचीनावीतिनः स्युः ।

५ Emended; संप्रयुज्य the Mss., but the Vyākhya आलोड्य.

स्रक्तिषु पूर्वदक्षिणापरासु पिण्डान्प्रदाय परान्पितृपितामहप्रपितामहानन्वाचष्टे षष्ठं प्रथमे पिण्डे पञ्चमं द्वितीये चतुर्थं तृतीय। उत्तरस्यां स्रक्त्यां लेपं निमार्ष्टि। च पितरो यथाभागं मन्दध्वमित्युदञ्चो निष्क्रामन्ति। सुसंदृशं त्वा वयमित्यैन्द्र्यर्चा प्रणवान्तयाहवनीयमा तमितोरुपतिष्ठन्ते ऽक्षन्नमीमदन्तेति गार्हपत्यमक्षन्पितर इति परिश्रितं प्रविशन्ति। ॥ ९ ॥

उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिमपः परिषिञ्चन्पर्येति। निधाय कुम्भमया विष्ठा जनयन्निति त्रिरपरिषिञ्चन्प्रतिपर्येत्याञ्जनाभ्यञ्जनादि पिण्डपितृयज्ञवत्कृत्वा परिश्रितं विसृज्य परिधीन्यथापूर्वं निधाय यज्ञोपवीतिनो ब्रह्मन्प्रस्थास्याम इत्यपबर्हिर्भ्यामनूयाजाभ्यां संप्रेष्यति देवौ यजेति प्रथममनूयाजं यजेत्युत्तरं। स्रुचौ सादयित्वा वाजवतीभ्यां व्यूहति। होता [1]सूक्तवाकं प्रतिपद्यते। न पत्नीः संयाजयन्ति न समिष्टयजुः। पात्राणि द्वन्द्वमुदाहरन्ति। सर्वमन्यत्सिद्धं। प्रतिपूरुषं त्रैयम्बकान्रौद्रानेककपालान्निर्वपत्येकमतिरिक्तं यावन्तो यजमानस्यामात्याः सस्त्रीकास्तेषां। यावन्तो गृह्याः स्म इति निरुप्यमाणेषु व्रीहिषु यजमानो जपत्ययजुष्काः[2] पुरोडाशा भवन्ति। गार्हपत्यादुदीचो ऽङ्गारान्निरूह्य तेष्वधिश्रित्य नाभिघारयति। सते हवींष्युद्वास्यान्तर्वेद्यासाद्य[3] पशूनाᳫं शर्मासीति मूते[4] महत्योप्यैक एव रुद्र इत्यन्वाहार्यपचना-

१ निवीती ins. A (the Vyākhyā has this word also).

२ Thus ARB; ०यजुष्काम H; अयजुषाः LTV; अशुष्काः M.

३ सते महत्युद्वा० ABR; सतेहत्युद्वा० H. To this reading the Vyākhyā points.

४ Thus AR; मूखे MLBTV; मूके H.

देकोल्मुकमादायापरेण गार्हपत्यं गत्वोत्तरपूर्वे चतुष्पथं यन्त्यां-खुस्ते रुद्र पशुरित्याखुमूषायामेकं[1] पुरोडाशमुपवपति । ॥ १० ॥

असौ ते रुद्र[2] पशुरिति वा निर्दिशेद्यं[3] द्विष्याच्चतुष्पथे स्थण्डिलमुल्लिख्यैकोल्मुकं निधायोपसमिध्य परिस्तीर्य मध्यमेन पलाशपर्णेन सर्वेभ्यः पुरोडाशानामुत्तरार्धेभ्यः सकृत्सकृदवदायैष ते रुद्र भाग इति तस्मिन्नग्नौ जुहोत्येतत्पर्णं यं द्विष्यात्तस्य संचरे पशूनां न्यस्येद्भेषजं गव इति द्वाभ्यामग्निमुपतिष्ठन्ते[4] ऽवाम्ब रुद्रमदिमहीति यजमानो जपति । यजमानस्यामात्याः सर्व एकमेकं पुरोडाशमादाय त्र्यम्बकं यजामह इत्येतमग्निं प्रदक्षिणं दक्षिणानूरूनाघ्नानाः परियन्ति[5] । तान्पुरोडाशानूर्ध्वमुदस्य प्रतिलभ्योत्तरतस्तिष्ठतो यजमानस्याञ्जलौ समोप्य भगः स्थ भगस्य वो लप्सीयेत्युपाददते[6] । एवं द्वितीयं तृतीयं च । तृतीये पर्याये[7] नोपाददते[7] । भगेन त्वा संसृजामि मासरेण सुरामिवेति यजमानः पत्न्यञ्जलौ च पत्नी दुहितुः पतिकामाया अञ्जलौ समावपति । तान्पुरोडाशान्मूते कृत्वा नीललोहिताभ्यां सूत्राभ्यां

---

१ Thus all the Mss. exc. H which has ०मुषायमेक. The Vyākhyā periphrases आखुकरीषे.

२ रुद्र not in MLTV, in R the word is given, but above each akṣara a dot is placed.

३ निर्दिशेद्यं HAB; निर्दिश्य यं MLTV.

४ ०तिष्ठते ML; ०तिष्ठंते HATRBV.

५ पर्यन्ति all the Mss.

६ लप्सीं० MLTV; लिप्सी० HB.

७ Thus ATBV; पर्यायेनोपाददतो L; पर्यायेणोपाददते M; पर्यायेरुपाददते H.

संसजन्ति। तमादाय वृक्षे बध्नात्येष[1]ते रुद्र भाग इति प्रण्वान्तेना तमितोऽपतिष्ठन्ते। ऽपः परिषिच्याप्रतीक्षमायन्ति। हस्तपादान्प्रक्षाल्य यथेतमेत्य गोष्ठे मार्जयन्ते। ॥ ११ ॥

एधो ऽस्येधिषीमहीत्याहवनीये समिधो ऽभ्याधायापो ऽन्वचारिषमित्युपतिष्ठन्ते तथा पत्नी गार्हपत्य। आदित्यं घृते चरुमनुनिर्वपति विष्णवे चरुं निर्वपति[2]। यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रतितिष्ठतीति विज्ञायते[3]। श्वेतो ऽश्वो दक्षिणा गौर्वा। प्रभाते पौर्णमास्येष्ट्योन्दनप्रभृति[4] व्याख्यातं। यो अस्याः पृथिव्या इत्यत्र निवर्तनमितो[5] ऽन्यत्सिद्धं संतिष्ठते। संतिष्ठन्ते साकमेधहवींष्यथ चतुरहे त्र्यहे द्व्यहे चतुर्षु मासेषु वा[6] वैश्वदेववच्छुनासीरीयहविर्भिर्यजते। पञ्च संचराण्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालं। द्वादशगवं सीरं दक्षिणा। यद्युत्तरवेदिर्भवति यथा वारुणप्रघासिकोत्तरविहारवत्संसर्पो[7]

१ बध्नन्त्येष some of the Mss. But the Vyākhya : यजमानो मूतमादाय वृक्षे बध्नाति .

२ विष्णवे चरुं निर्वपति AH and the Vyākhya ; विष्णवे च MLTV.

३ Partly T.Br. I. 2. 5. 1. ; A reads प्रतितिष्ठंतीति .

४ ०मासेनेष्ट्वो० H ; ०मास्येष्ट्वो० MATBV ; ०मास्ये इष्ट्वो० L.

५ After निवर्तनम् BH ins. इदावत्सरीणां स्वस्तिमाशास्त इति चोस्तृत्य ।—इतो ऽन्यत्सिद्धं संतिष्ठते VMLT : उतो न्यत्सिद्धं BH : निवर्तनमिति उतोन्यत्सिद्धं संतिष्ठते संतिष्ठंते साक० A. The other parallel passages point to अतो ऽन्यत्सिद्धम् .

६ मासेषु HB ; मासेषु वा MLATV and the Vyākhya (one copy).

७ वारुणप्र० VMLT : वरुणप्र० HAB—०त्तरतिविहारहवींषि HB ; ०त्तरविहारवत् MLTV.

ऽस्यꣳहस्पत्याय त्वेत्युत्तमेन मासनाम्नैककपालमभिजुहोत्यनुवत्सरीणाꣳ स्वस्तिमाशास्ते वत्सरीणामिति वापरपक्षे पर्वण्येतानि समस्यन्पौर्णमास्या स्वकालयेष्ट्वा। व्याख्यातमुन्दनप्रभृत्येकं मासमुदसृजदिति निवर्तनमन्त्रः। संतिष्ठन्ते चातुर्मास्यानि चातुर्मास्यानि। ॥ १२ ॥

॥ इति श्रौतसूत्रे नवमः प्रश्नः ॥

ऐन्द्राग्नेन सौर्येण प्राजापत्येन वा निरूढपशुबन्धेन प्रतिसंवत्सरं प्रत्ययनं[1] प्रतिषाण्मासं[2] वा यक्ष्यमाणः पौर्णमास्याममावास्यायामापूर्यमाणपक्षे पुण्ये नक्षत्रे वा यजेत । मृत्योरात्मानं निष्क्रीणाति सर्वान्कामानवाप्नोति । पशुबन्धस्य यज्ञक्रतोः षडृत्विज[3] आग्नीध्रो ब्रह्मा च ब्रह्माणौ होता मैत्रावरुणश्च होतारावध्वर्युः प्रतिप्रस्थाता चाध्वर्यू । सूर्यं त इति मनसानुद्रुतेनानुवाकेन हुत्वाग्नावैष्णवमेकादशकपालमन्वारम्भणीयां निर्वपत्यपि वाग्नावैष्णव्यर्चाहवनीये चतुर्गृहीतं जुहोति । शेषं हुत्वावस्थाप्याहवनीयमुरु विष्णो विक्रमस्वेत्याहवनीये स्रुवेणाहुतिं[4] जुहोति । हुतशेषं स्रुवं चादाय तक्ष्णे शस्त्रं प्रदाय गच्छन्ति । पलाशो[5] बिल्वो रोहितकः[6] खदिरश्च यूपवृक्षाः । पालाशो निरूढपशुबन्धस्यातो ऽन्ये सौम्याध्वरस्य । तांस्त्ववरार्धानतीत्य यः समे भूम्यै स्वाद्योने रूढ ऋजुरूर्ध्वशाखो बहुपर्णो बहुशाखो ऽप्रतिशुष्काग्रो ऽव्रणः प्रत्यङ्ङुपनतस्तमत्यन्यानगामित्युपस्थाय[7] तं त्वा जुष इति स्पृष्ट्वा देवस्त्वा सविता मध्वानक्त्विति स्रुवेण गुल्फ-

---

१ This word not in HR; in view of the following word it seems pleonastic.

२ प्रतिषण्मासं AHRB: प्रतिषाण्मासं MLTV; प्रतिषाण्मासे(न) the Vyākhyā.

३ षडृत्विज आग्नीध्रो ब्रह्मा च ब्रह्माणौ MLTV; षडृत्विजो ब्रह्मा तृतीय आग्नीध्र-ब्राह्मणौ HAB.

४ स्रुवेण यूपाहुतिं A.

५ पालाशो the Mss.

६ Thus BV; रौहितकः MLT; वालोहितः H; रौहीतकः A and the Vyākhyā (one copy); रौहितकः another copy.

७ Thus AMLTBV; प्रत्यङ्ङवनत० H.

मात्रे पर्यज्यौषधे त्रायस्वैनमित्यूर्ध्वाग्रं बर्हिरन्तर्धाय स्वधिते मैनꣳ हिꣳसीरिति प्रदक्षिणमनक्षसङ्गं वृश्चेत् । ॥ १ ॥

यः प्रथमः शकलः परापतेत्तमप्याहरेद्दिवमग्रेणेति प्रागग्रमुदगग्रं वा निपातयेद्वनस्पते शतवल्शो विरोहेत्याव्रश्चने हिरण्यं निधाय परिस्तीर्याभिजुहोति । सहस्रवल्शा इत्यात्मानं प्रत्यभिमृशति । यं त्वायमिति मूलादग्रान्तं[1] शाखाः[1] प्रच्छापयत्यच्छिन्नो रायः सुवीर इति पञ्चारत्नावग्रं[2] परिवृश्चति चतुररत्नौ[3] त्र्यरत्नौ[3] वा । सहोपरेण यूपं[4] संचक्षीताष्टाश्रिमस्थूलमनणुं[5] गोपुच्छवदानुपूर्व्येणाग्रतो[6]ऽणीयांसं विश्विष्टाग्निष्ठाश्रिमतष्टद्विप्रादेशोपरं यूपं[7] तक्षयत्येषामेवावतक्षणानां स्वरुं करोत्यधिमन्थनशकलं च । यूपस्यैवाग्रत आदायाष्टाश्रि पृथमात्रं मध्ये संनतं चषालं करोति द्व्यङ्गुलं त्र्यङ्गुलं वोर्ध्वं चषालाद्यूपस्यातिरेचयत्यतिरिक्ते चषालं संधायातिरिक्तं प्रकाशयति[8] । ॥ २ ॥

वेदं कृत्वाग्रेणाहवनीयं निरूढपशुबन्धस्य षड्भिररत्निभिः प्राचीं चतुर्भिः पश्चात्तिरश्चीं त्रिभिः पुरस्तात्तिरश्चीं दर्शपूर्णमास-

---

१ Thus emended; मूलादग्रान्तशाखाः L; मूलादाग्रांतशाखाः TV; मूलाग्रान्तशाखाः BM; मूलाग्रान्ता शाखाः HA.

२ Thus AMLTV; पञ्चारत्नामग्रं H; पञ्चारत्नाग्रं B.

३ Thus ATV; चतुरत्न्यौ त्र्यरत्नौ वा H; चतुररत्ना (त्न्या) त्र्यरत्ना (त्न्या) वा M; चतुररत्नास्त्र्यरत्नौ वा L.

४ यूपं BHA, not in MLTV.

५ Thus A; ०स्थूलमरणं M; ०स्थूलमरणिं L; ०स्थूलमनं HB; ०स्थूलमरणुं TV.

६ आनुपूर्वेणा० LHTV; आनुपूर्व्येणा० MAB.

७ Emended; विश्विष्टाग्निष्ठाश्रितमष्टद्विप्रादेशोपरं यूपं त० MLTV (the last three Mss. om. यूप); विष्टाग्नीष्टामिताष्टद्विप्रदेशेन परो यूपं त० H; विश्विष्टाग्निष्ठाश्रिमनुताष्टद्विप्रदेशोपरं A; विष्टाग्निष्ठान्निष्ठांज्ञाष्टविप्रदोशोपर यूपं B.

८ प्रकाशयति BMLA; प्राशयति HR; प्रवेशयति TV.

वद्संनतां वेदिं करोत्यपरिगृहीत उत्तरस्मिन्परिग्राहे वेद्यग्रे यूपावटाय[१] देशं शिष्टोत्तरवेदिं शम्यया परिमिमीते । प्रतिदिशमुदीचीनाग्रां वा[२] शम्यां निधाय वित्तायनी मे ऽसीति चतुर्भिः प्रतिमन्त्रमुदीच्यौ प्राच्यौ च स्फ्येन[३] लेखा अभ्यन्तरं परिलिखत्युत्तरवेद्यंसमुत्तरेण[४] प्रक्रमे द्वयोस्त्रिषु वोत्तरवेदिवत्तूष्णीं चात्वालं परिलिखति । देवस्य त्वेत्यभ्रिमादाय परिलिखितमिति त्रिः प्रदक्षिणं परिलिख्य विदेरग्निर्नभो नामेति त्रिवितस्तं खनति । ॥ ३ ॥

अग्ने अङ्गिर इत्यभ्रिं निधाय यो ऽस्यां पृथिव्यामसीति पांसूनादायायुषा नाम्नेहीति हृत्वा[५] यत्ते ऽनाधृष्टं नाम यज्ञियमित्युत्तरवेद्यां निवपति । विदेरग्निरिति[६] द्वितीयं खात्वाग्ने अङ्गिर इत्यभ्रिं निधाय यो द्वितीयस्यामिति द्वितीयमादाय पूर्ववन्निवपति । तथा तृतीयं । तृतीयस्यामिति विशेषस्तूष्णीं चतुर्थं । सिंहीरसि महिषीरसीत्युत्तरवेदिं कृत्वोरु प्रथस्वेति प्रथयति । ध्रुवासीति स्फ्येन शम्यया वा संहन्ति । देवेभ्यः शुन्धस्वेत्यद्भिरवोक्ष्य देवेभ्यः शुम्भस्वेति सिकताभि-

---

१ Thus emended with some doubt; यूपं निधाय H; यूपमानाय TVML; यूपनिमानाय A; यूपन्निमीय B.

२ वा ins. all the Mss.; read perhaps उदीचीनाग्रां प्राचीनाग्रां च शम्यां निधाय.

३ Thus MLTV; चरति त्रिवैस्फ्येन लेखाभ्यंतरं परि॰ A; चरतीति तिस्रोखोभ्यांतरं परि॰ H; चरितेलेखाखाभ्यन्तरं परि॰ B.

४ Thus emended in accordance with the Vyākhya; उत्तरेण वेद्यंसं MLTV; उदीचीनवेद्यंससुत्तरेण ABH.

५ Thus ATV; कृत्वा MLHB.

६ विदेरग्निर्नमो नामेति AB.

रनुप्रकीर्य यत्ते क्रूरं यदास्थितमित्युत्तरेणोत्तरवेदिं प्रोक्षणीर्निनयति[1] पुनरेव ताभिरवोक्षेदित्येक । आपो रिप्रं निर्वहतेत्युत्तरतो दक्षिणतो वा स्फ्येनैकस्फ्यामुल्लिख्यापो रिप्रं निर्वहतेत्युत्तरवेद्यां प्रोक्षणीशेषं निनयेद्विभ्राड् बृहत्वित्युत्तरवेद्याः पर्यन्तानाकल्प्य चतुःशिखण्डे युवती कनीने इत्युत्तरवेदिं वेदिं च युगपत्संमृशत्युत्तरवेदिमध्ये चतुर्दिशं प्रादेशमात्रीं मध्यमाङ्गुल्योच्छ्रितामुत्तरनाभिं[2] कल्पयेत् । ॥ ४ ॥

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्वित्येतैर्यथारूपं प्रदक्षिणं परियन्प्रतिदिशमुत्तरवेदिं[3] प्रोक्षत्युपरिष्टाच्च । प्रोक्षण्युच्छेषं पूर्ववद्दक्षिणत उत्तरवेद्यै निनयेद्यदि द्रुहः पशुरौदुम्बरीभिः[4] शाखाभिश्छन्नामुत्तरवेदिं कल्पयेदाहवनीये ऽग्निप्रणयनीयानिध्मानादीप्याग्नये प्रणीयमानायानुब्रूहीति संप्रेष्य दीप्तानिध्मांश्छराव[5] उद्धृत्य सिकतापूरितेन पात्रेणोपयम्येध्मं चोद्यम्य[6] जानुदघ्ने ऽग्नौ धार्यमाणे यत्ते पावकेति शिष्टे ऽग्नावुद्यतहोमं जुहोति । प्रथमायां त्रिरनूक्तायां हृत्वोत्तरवेदिं[7] प्राप्य जुह्वां पञ्चगृहीतं गृहीत्वा हिरण्यं निधायोत्तरवेदिं पञ्चगृहीतेन व्याघारयति सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणे ऽंसे सिꣳहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्यां श्रोण्यां सिꣳहीरसि

---

१ Thus A; प्रोक्षणीं नि॰ the other Mss.

२ Thus the Vyākhyā; मध्याङ्गु॰ the Mss.

३ पर्यन् (not परियन्) MLTV; परिधिन् A; प्रदक्षिणमयन् H.

४ Thus AB; पशुदौदुंब॰ TV; पश्वौदुम्ब॰ H; पशुमौदुंब॰ ML.

५ Thus the Vyākhyā; संप्रेष्य दीप्तांश्छराय H; संप्रेष्योद्दीप्तानिध्मांश्छराव MLTV; संप्रेष्योद्दीप्तांश्छराव AB.

६ इध्मं च om. MLTV.

७ कृत्वा instead of हृत्वा MLHB.

रायस्पोषवनिः स्वाहेति दक्षिणस्यां श्रोण्यां सिंहीरस्यादित्यवनिः स्वाहेत्युत्तरें ऽसे सिंहीरस्यावह देवान्देवयते यजमानाय स्वाहेति मध्ये । भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति हिरण्यं च । पौतुद्रवान्परिधीनादाय विश्वायुरसीति त्रिभिर्मन्त्रैः पूर्ववदुत्तरवेदिं परिदधाति । ॥ ५ ॥

गुग्गुलसुगन्धितेजिने[1] शुक्लोर्णास्तुका पेत्वस्यान्तरा शृङ्गे यद्रोमैतान्संभारानग्नेर्भस्मासीति[2] सकृदेवोत्तरनाभौ न्युप्योर्णावन्तमित्युच्यमाने ऽग्ने बाधस्व यज्ञ प्रतितिष्ठेति द्वाभ्यां संभारेषु ज्वलन्तमग्निमभ्यादधात्यग्नेः[3] कुलायमसीति दक्षिणत उपयमनीः सिकता निवपति । मनुष्वत्त्वा निधीमहीत्युपसमिध्याग्निर्यज्ञं नयतु प्रजानन्निति चतस्रो ऽतिमुक्तीर्हुत्वा सप्त त इति पूर्णाहुतिं जुहोत्ययमत्राहवनीयो यस्मादेष प्रणीयते स गार्हपत्य । आहवनीयं गार्हपत्यमन्वाहार्यपचनं चान्वाधायेध्माबर्हिषी[4] । सप्तदश सामिधेन्य । आश्ववालः प्रस्तर ऐक्षवी विधृती कार्ष्मर्यमयाः परिधयो । ऽग्नीन्परिस्तीर्य पात्रसादने वैश्वदेववत्पात्राण्यासादयति । ॥ ६ ॥

स्रुवस्वधिती[5] वेदसमवत्तधानी[6] द्विगुणां द्विव्यायामां त्रिगुणां त्रिव्यायामां च रशने द्वे द्विशूलैकशूला[7] च द्वे कार्ष्मर्यमय्यौ

---

१ गुल्गु० ABVHR; गुग्गु० the Vyākhyā.

२ Thus MLATV; ०रोम इतान्सं० H; ०रोमयितत्सं B.

३ Thus ABMLTV; संभारेष्वाज्य० HR.

४ The verb (apparently आहरति) is missing.

५ स्रुवस्वधिति all, but cp. X. 11; one copy of the Vyākhyā ०ती.

६ ०धानि all.

७ Thus (nominative!) all.

वपाश्रपण्यौ कुम्भीं हृदयशूलं प्लक्षशाखां स्वरुमौदुम्बरं मैत्रावरुणदण्डमास्यान्तं चुबुकान्तं वा प्रथमपरापातितं शकलमरणी सुवर्णशकलानि येन चार्थः । पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्य वाग्यतः पात्राणि संमृश्य प्रोक्षितेषु वाचं विसृजते । परिगृहीत उत्तरस्मिन्परिग्राह आज्येन दध्ना चोदेहीति संनम्य संप्रेष्यति । पात्रसंमार्जनकाले स्रुवानन्तरं स्रुववत्स्वधितिं संमार्ष्टि । वैश्वदेववदाज्यसादनान्तं कृत्वा देवस्य त्वेत्यभ्रिमादायार्धमन्तर्वेद्यर्धं बहिर्वेदि सर्वतः प्रादेशसंमितं यूपावटं त्रिः प्रदक्षिणं परिलिखितमिति परिलिखत्यग्नीध्रूपावटं खनोपरसंमितं द्व्यङ्गुलेन त्र्यङ्गुलेन चतुरङ्गुलेन वोपरमतिखनतादिति संप्रेष्यति । यथोपरं नाविर्भवति तथा खनत्याग्नीध्रः । ॥ ७ ॥

अध्वर्युरग्रेणावटं यूपं प्रागग्रं स्थापयित्वा यत्ते शिक्वः[1] परावधीदिति यूपं प्रक्षालयति । यवमतीः प्रोक्षणीराहृत्य यूपाग्रे चषालं संधाय पृथिव्यै त्वेति त्रिभिर्मन्त्रैर्यूपस्य मूलमध्याग्राणि[2] प्रोक्षति । शुन्धतां लोकः पितृषदन इति यूपावटे प्रोक्षणीर्निनीय यवो ऽसीति यवं प्रहृत्य पितृणाꣳ सदनमसीत्यवटे प्रागग्रं बर्हिरवस्तृणाति[3] । स्वावेशो ऽसीति प्रथमपरापातितं शकलमधस्त्वक्कमवधाय घृतेन द्यावापृथिवी आपृणेथाꣳ स्वाहेति हिरण्यं निधाय स्रुवेणाभिजुहोति । देवस्त्वा सविता मध्वानक्त्वित्यग्रेणाहवनीयमनिरुप्तेनाज्येन[4] यजमानः प्राच्यां प्रत्यङ्मुख-

१ शिल्पः H only.

२ Thus AB ; ०मध्यमाग्राणि MLTV.

३ Thus MLTV ; बहिरस्तृ० A ; बर्हिरुपस्तृ० HR ; बर्हिस्तृ० B.

४ Thus MLABTV ; ०नीय निरुप्तेन R ; ०नीयं निर्युत्या० H. The Vyākhyā : लौकिकेन, Āp. असंस्कृतेन.

स्त्रिष्ठन्यूपशकलेनानक्ति । चषालमुन्मुच्य तेनैव मन्त्रेण यूपाग्रमनक्त्यैन्द्रमसीति । चषालमभ्यज्य सुपिप्पलाभ्य इति तं प्रतिमुच्य यूपायाज्यमानायानुब्रूहीति संप्रेष्य देवस्त्वा सविता मध्वानक्त्विति स्रुवेणाग्निष्ठामश्रिं संततमभिघारयति यावदुपरं । नोपरमनक्त्यनक्तीत्येके । रशनादेशे यूपं सर्वतस्त्रिः परिमृशत्यञ्जनप्रभृति यजमानो यूपं नोत्सृजति यावत्परिव्ययति[1] । ॥ ८ ॥

उद्दिवꣳ स्तभानेति यूपमुच्छ्रयन्यूपायोच्छ्रीयमाणायानुब्रूहीति[2] संप्रेष्यति । ते ते धामानीति यूपमवटेऽवदधाति । विष्णोः कर्माणीति द्वाभ्यामग्निष्ठामश्रिमाहवनीयाग्निना सदृशं[3] कल्पयति । ब्रह्मवनिं त्वेति प्रदक्षिणं पुरीषेणानाविरुपरं पर्यूह्य ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन परितो दृꣳहत्युन्नभय पृथिवीमित्यपः परिषिञ्चति । देवस्य त्वेति त्रिगुणां रशनामादायेदं विष्णुर्विचक्रम इति सपाशया रशनया यूपं त्रिरुन्मार्ष्टि । तद्विष्णोः परमं पदमिति यूपाग्रं पश्येद्रशनामद्भिः संमृश्य त्रिः संभुज्य[4] मध्यमेन गुणेन मध्ये नाभिदघ्ने वा यूपं परिव्ययन्यूपाय परिवीयमाणायानुब्रूहीति संप्रेष्य परिवीरसीति त्रिः प्रदक्षिणं परिवीय स्थविमदणीयसि प्रवयति[5] । दिवः सूनुरसीति स्वरुशकलमादायान्तरिक्षस्य त्वेत्युत्तमे गुणे ऽग्निष्ठामुत्तरेणावगूहति मध्यमे

---

१ परिवीयति M. only.

२ Thus RB; यूपायोच्छ्रिय० AMLTV and Vyākhyā; ०योच्छ्रय० H.

३ Emended; सद्दशं MLVAT; संमृषा HR; सम्मृशं B; see Hir. IV. 7.

४ संमृशति त्रिः संमृज्य ML; संमृश्य संभुज्य H; संमृज्य त्रिः संभुज्य ARB; संमृत्य त्रिः संभुज्य T.V.

५ Read परिव्ययति with the Vyākhyā.

द्वयोर्वा कूटकर्णकाणखण्डखञ्जघृष्टवण्डस्रोणसप्तशफवर्जं पन्नदन्तं यूथ्यं मातृपितृभ्रातृसखिमन्तं[1] सुपल्पूलितं पट्टानीतं[2] चात्वालोत्करावन्तरेण नीत्वा यूपमग्रेण पुरस्तात्प्रत्यङ्मुखमवस्थाप्येषे त्वेति बर्हिषी आदायोपवीरसीति प्लक्षशाखामुपो[3] देवानिति यजुषा प्रजापतेर्जायमाना इमं पशुमित्यृग्भ्यां च ताभ्यां तया च पशुमुपस्पृशन्निन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीति यथादेवतमुपाकरोति । ॥ ९ ॥

सुरचिते बर्हिषी निधाय प्लक्षशाखां च प्रजानन्तः प्रतिगृह्णन्त्वित्युपाकृत्य[4] पञ्च जुहोत्यग्निं मन्थति । मथित्वोपाकुर्यादित्येके । ऽग्नेर्जनित्रमसीत्यवशिष्टं शकलमादायापरेणाहवनीयं[5] बर्हिषि निधाय तस्मिन्वैश्वदेववद्दर्भौ[6] निदधाति तथारणी[7] चादायाज्यस्थाल्या बिले ऽभ्यज्य घृतेनाक्ते[8] इत्यभिमन्त्र्यायुरसीति प्रजनने प्रमन्थं संधायाग्नये मथ्यमानायानुब्रूहीति संप्रेष्यति ।

---

१ सखिवतं MLTV.

२ पट्टानितं ML; पट्टालितं T, missing in the other Mss. It is uncertain whether this word belongs to the original text. The Vyākhyā makes no mention of it.

३ The redaction of the close of the khaṇḍa is different in H: with MLTV the Vyākhyā agrees. A runs: प्लक्षशाखाम् (उपो देवानिति प्रजापतेर्जायमाना इम पशुम्) इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीति यथादैवत्यं च चतुर्भिस्ताभ्यां तया च पशुमुपाकरोति, likewise (without the marginal addition) BH, only यथादेवं चतुर्भि॰

४ प्रजानन्तं प्रतिगृह्णालि॰ VMLT; प्रजननं प्रतिगृह्णीलि॰ H; प्रजानन्तः प्रतिगृह्णीयीत्यु॰ A: प्रजानन्तः प्रतिगृह्णन्त्विति B.

५ शकलमादाय MLATV; शकलमवदाय HB.

६ दर्भौ नि॰ ABHRV; दर्भान्नि॰ MLT.

७ तथारणी THRAV; तदरणीं or ॰णिं MLB.

८ ॰नाक्ते इत्य॰ AMLTV; ॰नाक्तावित्य॰ HB.

चिरनूक्तायां वैश्वदेववदग्निप्रहरणान्तं करोति । यदि मथ्यमानो न जायेत तत्स्थाने[1] हिरण्यं व्याहृतीभिर्जुहुयादग्नावग्निरिति[2] प्रहृत्याभिहुत्य देवस्य त्वेति द्विगुणां रशनामादाय तदग्रेण पशोर्दक्षिणं बाहुमुन्मृज्य ऋतस्य त्वा देवहविः पाशेनारभ इति दक्षिणे पूर्वपादे ऽर्धशिरसि च[3] प्रतिमुच्य धर्षा मानुषानिति पुरस्तात्प्रत्यङ्मुखमुदङ्मुखं वा यूपे पशुं नियुनक्त्यद्भ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षत्यपां पेरुरसीत्यपः पाययित्वा स्वात्तं चिदित्यधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोतीति विज्ञायते[4] । वेदनिधानादि । स्रुच्यमाघार्योदङ्ङतिक्रम्य सं ते प्राण इति पशोर्दक्षिणे ऽर्धशिरसि जुह्वा समज्य सं यजत्रैरङ्गानीति ककुदि सं यज्ञपतिराशिषेति भसदि मखस्य शिरो ऽसीति प्रतिपद्य होतारं वृत्वाश्राव्य प्रत्याश्राविते मित्रावरुणौ प्रशास्तारौ प्रशास्तादिति मैत्रावरुणं वृणीते । ॥ १० ॥

असौ मानुष इत्यस्य नाम गृहीत्वास्मै दण्डं दद्यादवक्रो ऽविधुरो[5] भूयासमिति गृह्णाति । जीवति पशावेकादश प्रयाजान्यजत्याश्राव्य प्रत्याश्राविते ऽध्वर्युः समिद्धः प्रेष्येति मैत्रावरुणं प्रति प्रथमं प्रयाजं संप्रेष्यति प्रेष्येत्युत्तरान्होता यक्षदित्यसौ होतारं चोदयति । चतुर्थे प्रयाजे प्राप्ते ऽर्धे[6] समा-

१ तत्स्थाने HA ; ततस्तत्स्थाने MLTBV.

२ व्याहृती (or ति) भिर्जु० ABMLTV ; व्याहृतीर्जु० H.

३ च om. AMBH.

४ See Ts. VI. 3. 6. 4.

५ अवक्रो विधुरो (विदुरो) MLT; अविचुरो विडरो H; अविष्ठो विधुरो A; अचिचुषोवविदुरो B. The last word should be ऽविथुरो (as probably V).

६ ऽर्धे not in HB (ऊं A).

नीयाष्टमे सर्वं समानयत । इष्टे दशम एकादशायाज्यमवशिनष्टि । तान्यजमान आद्यैरनुमन्त्रनैश्चतुरो ऽनुमन्त्र्य चतुर्थस्यानुमन्त्रणेन इरः प्रभृतींस्त्रीनुत्तमेनेतरानुदङ्ङतिक्रम्याध्वर्युर्घृतेनाक्ताविति जुह्वा स्वरुस्वधिती अनक्ति त्रिः[१] स्वरुं सकृत्स्वधितेरेकामश्रिं । घृतेनाक्तौ पशुं त्रायेथामिति स्वरुस्वधितिभ्यां पशुं समनक्ति । ॥ ११ ॥

शमितरेषा ते ऽग्निः प्रज्ञातास्त्वित्यादिश्य शमित्रे स्वधितिं प्रयच्छति । यथापूर्वं स्वरुमवगुह्य[२] पर्यग्नये क्रियमाणायानुब्रूहीति संप्रेष्यत्याग्नीध्र आहवनीयादुल्मुकमादाय परि वाजपतिरिति त्रिः प्रदक्षिणं षट् पर्येति पशुं शामित्रदेशं चात्वालं यूपमाहवनीयमाज्यानि च । ये वध्यमानमनु वध्यमाना इति त्रिभिरपाव्यैः प्रतिपर्यायं जुहोत्यपिसृज्याहवनीय उल्मुकं त्रिः पुनर्यथेतं प्रतिपर्येति । प्रमुच्य पशुमाश्राव्य प्रत्याश्रावित उपप्रेष्य होतर्हव्या देवेभ्य इति संप्रेष्यत्यग्निं होतानुवक्ति । रेवतीर्यज्ञपतिमित्यध्वर्युयजमानौ वपाश्रपणीभ्यां बर्हिर्भ्यां प्लक्षशाखया च पशुमन्वारभेते । ॥ १२ ॥

नाना प्राण इति यजमानमभिमन्त्रयते[३] । प्रास्मा अग्निं भरतेत्युच्यमाने तदुल्मुकं[४] पुनरादायाग्नीध्रः प्रथमो ऽन्तरेण चात्वालोत्करावुदङ्ङतिक्रामत्युरो अन्तरिक्षेत्यन्तरेण चात्वालो-

---

१ Before स्वरुं VAT and the Vyākhyā have त्रिः, this belongs to the text; B. द्विः (as Hir.).

२ ०गूह्य MALTV and the Vyākhyā (one copy).

३ Thus ABRH; अनुमन्त्र० MLTV.

४ Thus R; उच्यमाने त्यतल्मुकं H; उच्यमाने उल्मुकं MLTV; उच्यमानं तदुल्मकमादाय A; ०मानेल्मुक B.

त्करावुदङ्मुखं पशुं नयन्ति[१] । प्राजहितादुल्मुकमादायाग्नीध्रो निष्क्रामतीत्येक । उत्तरेण चात्वालं शामित्रायतनं । तस्मिन्नुल्मुकमाधय[२] शामित्रमुत्तरेणातिक्रामत्युदीचीनाङ्[३] अस्य पदो निधत्तादित्युच्यमाने समस्य तनुवा[४] भवेत्युपाकरणबर्हिषोरन्यतरद्दक्षिणेन शामित्रं प्रागग्रमुदगग्रं वा न्यस्यत्यूवध्यगोहं पार्थिवं खनतादित्युच्यमान ऊवध्यगोहं खनति । तस्मिन्बर्हिषि पशुं प्रत्यक्शिरसमुदीचीनपादं[५] संज्ञपयन्त्यमायुं कृण्वन्तं संज्ञपयतेति संप्रेष्य[६] यथेतं पराञ्च आवर्तन्त । इह प्रजा विश्वरूपा रमन्तामिति पृषदाज्यमवेक्षमाणाः पराञ्च आसत । इन्द्रस्य भागः सुविते दधातनेत्यध्वर्युर्यदि रौति पशुस्तमभिमन्त्रयते[७] । स्वर्विदसीति[८] चतुरो मन्त्रान्संज्ञप्यमाने यजमानो जपति नाना प्राण इत्यध्वर्युर्यत्पशुर्मायुमकृतेति संज्ञप्ते संज्ञप्तहोमं जुहोति । ॥ १३ ॥

शमितार उपेतनेति पशुमभ्युपयन्नदितिः[९] पशुं प्रमुमोक्त्विति संज्ञप्तात्पाशं प्रमुञ्चति । तमेकशूलयादायारातीयन्तमधरं कृणोमीतीमां दिशं निरस्यति । नमस्त आतानेति पत्न्यादित्यमुपतिष्ठते । ऽनर्वा प्रेहीति प्रतिप्रस्थाता पूर्णपात्रेण सह

---

१ नयन्ति MLTV; नयति RBH; this passage is missing in A.

२ आदाय BMLHR and Vyākhyā; आधाय ATV.

३ ०तिक्रामन् उदीची० ML; ०तिक्रामन्नुदीची० TV; ०तिक्रात्युदीची० HB; तिक्रामंत्यु०, A.

४ तनुवा BMLTV; तन्वा RH; तनवा A.

५ प्रत्यक्छिर० VMLAT; प्रत्यक्शिर० HB.

६ प्रेष्य the Mss.; संप्रेष्य the Vyākhyā.

७ पशुस्तमभि० LATV; पशुमभि० MHB.

८ स्वर्वि० AHB and Vyākhyā; सुवर्वि० MLTV.

९ The Vyākhyā points to अभ्युपयन्ति; ०भ्युपयंतदि० A.

पत्नीमुदानयत्यन्तरेण चात्वालोत्करावुदङ् पत्नीं निष्क्रामयत्यापो देवीरिति निष्क्रान्तामध्वर्युरपो ऽवमर्शयति । वाक्त आप्यायतामित्येतैर्यथालिङ्गमनुपूर्वं पत्नी पशोः प्राणानाप्याययत्यध्वर्युर्वाभिषिञ्चति[1] । या ते प्राणानिति हृदयमभिमृशति । तानेव प्राणान्पुनः संमृशतीत्येके । नाभिस्त आप्यायतामिति नाभिं मेढ्रं त आप्यायतामिति मेढ्रं पायुस्त आप्यायतामिति पायुं शुद्धाश्चरित्रा इति संप्रगृह्य[2] चतुरः पादान्प्रक्षालयति । शमहोभ्यामित्यनुपृष्ठं शेषं निनयति दक्षिणतो वोत्तानं पशुमावर्त्य[3] दक्षिणेन नाभिं द्व्यङ्गुले त्र्यङ्गुले वा विवर्ते[4] ऽवशिष्टमुपाकरणबर्हिषोरन्यतरदोषधे त्रायस्वैनमिति प्रागग्रं निदधाति । स्वधिते मैनꣳ हिꣳसीरिति स्वधितिना तिर्यगाच्छिनत्त्यग्रमादाय[5] सुरक्षितं निदधाति मूलं लोहितेनाक्त्वा[6] रक्षसां भागो ऽसीतीमां दिशं निरस्येदिदमहꣳ रक्षो ऽधमं तमो नयामीति तत्सव्येन पदातिष्ठेत् । ॥ १४ ॥

तौ[7] पाणिपादौ प्रक्षाल्याप उपस्पृश्येषे त्वेति वपामुत्खिद्य घृतेन द्यावापृथिवी प्रोर्ण्वाथामिति वपया द्विशूलां वपाश्रपणीं

---

१ ०ध्वर्युर्वाभिषि० MLTV; ०ध्वर्युरभिषि० HAB.

२ Thus ABMLTV, प्रगृह्य H.

३ ०वृत्य the Mss.; ०वर्त्य the Vyākhyā.

४ विवर्ते LTV; निवर्ते M; पिवत H; ०ङ्गुलेवावर्तमन्ववशि० A; विवृत्तमव० B. The Vyākhyā: आवर्ते. Cp. Baudh.: विवृत्त.

५ Thus MLHTBV; तिर्यगाच्छत्यच्छिन्नस्याग्रमादाय A.

६ Thus A; लोहितेक्त्वा MLTV; लहिवा BH; रुधिरेणाक्त्वा the Vyākhyā.

७ Thus all the Mss. and the Vyākhyā (one copy); ततः another copy.

प्रोर्णोत्यूर्जे[१] त्वेत्येकशूलयोपस्तृणन्ति वपा यथा विस्तीर्णा[२] भवति । देवेभ्यः शुन्धस्वेति तां प्रोक्ष्य देवेभ्यः शुम्भस्वेति स्वधितिना वपामुन्मृज्य देवेभ्यः कल्पस्वेत्यभिमन्त्र्याच्छिन्नो रायः सुवीर इति तामधस्तादुत्कृन्तति । शमिता वपोद्धरणं मुष्टिनापिदधाति यावद्वपां जुहोति । वपामद्भिरभ्युक्ष्य प्रत्युष्टमिति शामित्रे प्रतितप्य नमः सूर्यस्य संदृश इत्यादित्यमुपस्थाय शामित्रादेकोल्मुकमादायाग्नीध्रः पूर्वं गच्छत्यन्वगध्वर्युर्वपाश्रपणीभ्यां वपां धारयन्नुर्वन्तरिक्षमिति[३] गच्छति[३] । यजमानो वपाश्रपणी पुनरन्वारभेतोप[४] त्वाग्ने दिवे दिव इति तिसृभिराग्नीध्रो ऽध्वर्युर्यजमानश्चाहवनीयमुपयन्ति । तत उल्मुकमपिसृज्याहवनीयस्यान्तमे ऽङ्गारे वपां निगृह्य[५] वायो वीहि स्तोकानामिति सुरक्षितं छिन्नाग्रमधस्ताद्वपाया अन्तमे ऽङ्गारे प्रास्यत्यन्तरा यूपमाहवनीयं च प्रतिप्रस्थाता वपामाहृत्य दक्षिणत उदङ्मुखो वपां श्रपयति । त्वामु ते दधिरे हव्यवाहमिति वपां स्रुवेणाभिजुहोति । प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्यो ऽनुब्रूहीति संप्रेष्यति जुषस्व सप्रथस्तममिति स्तोकीया होता प्रतिपद्यते । ॥ १५ ॥

श्येनीं[६] सुशृतां वपां कृत्वा सुपिप्पला ओषधीः कृधी-

---

१ प्रोर्णोत्यूर्जे AMTV, प्रोर्णोतोर्जे HB; प्रोर्णोत्योर्जे L; this, and प्रच्छाद्य of the Vyākhyā, points to gerund.

२ Thus MLATV; यथावस्ती० H; यथाभस्ती० B.

३ Thus A; इति गच्छन्ति BHR; इत्यनुगच्छन्ति M (LTV omit this passage).

४ Thus A; ०रभेत उप BM; ०रभत उप HR.

५ Thus BAHR; निगूह्य MLV; निरूह्य T.

६ Thus AHRB; श्येतां ML; श्वेतां TV.

त्युत्तरवेदिश्रोण्यां दक्षिणस्यां बर्हिषि प्लक्षशाखायां निधाय प्रयुता द्वेषाꣳसीति वपाश्रपण्यौ प्रवृहति[1] । घृतवतीमध्वर्यो स्रुचमित्युच्यमाने जुहूपभृतावादायात्याक्रम्याश्राव्य प्रत्याश्राविते स्वाहाकृतिभ्यः प्रेष्येति संप्रेष्यति । वषट्कृते हुत्वा प्रत्याक्रम्य प्रयाजशेषेण ध्रुवां पृषदाज्यं च सकृत्सकृदभिघार्य वपामभिघारयति[2] नोपभृतं । पशावाज्यभागौ हुत्वा जुह्वामुपस्तीर्य हिरण्यशकलं निधाय कृत्स्नां वपामवद्यत्युपरिष्टाद्धिरण्यमवधायाभिघार्यैन्द्राग्निभ्यां[3] छागस्य वपाया मेदसोऽनुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्रावित इन्द्राग्निभ्यां छागस्य वपां मेदः[4] प्रस्थितं प्रेष्येति संप्रेष्यति । मैत्रावरुणो होतारं चोदयति । प्राग्वपाहोमात्स्वाहा देवेभ्य इति पूर्वं परिवप्यं हुत्वा वषट्कृते जातवेदो वपया गच्छ देवानिति वपां हुत्वा देवेभ्यः स्वाहेत्युत्तरं परिवप्यं हुत्वा प्रत्याक्रम्य वपोद्धरणमभिघारयति । स्वाहोर्ध्वनभसमित्याहवनीये विषूच्यौ वपाश्रपण्यौ प्रहरति । संस्रावेणाभिहुत्वा स्रुचावन्यत्र सादयत्यत्र वरं ददाति यजमानस्तिस्रो वा दक्षिणाः । ॥ १६ ॥

आपो हि ष्ठा मयोभुव इति तिसृभिरिदमापः प्रवहत निर्मा मुञ्चामीति द्वाभ्यां च सर्वे पत्नी च चात्वालेऽद्भिर्मार्जयन्ते । ऽथाध्वर्युरग्नीत्पशुपुरोडाशं निर्वप प्रतिप्रस्थातः पशुं

१ Thus TBV; प्रव्रहति A; प्रद्दहति L; प्रद्दहति M, प्रहरति HR.

२ Thus MLTV; वपां द्विरभि० AHRB; द्विः not in the Vyākhyā.

३ Thus TV; ०वद्याय MLAB (H. incomplete here).

४ Thus L and the Vyākhyā; वपां मेदसः M; वपा मेदः VAT; वसाया मेदसः HBR and the Vyākhyā (another copy).

विशाधीति संप्रेष्यति । समानदेवतं[1] पशुनैकादशकपालं व्रीहिमयं पुरोडाशमाग्नीध्रो निर्वपति । प्रतिप्रस्थाता पशुं विशास्ति । हृदयजिह्वावक्षांसि तनिम[2] मतस्नू सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमित्येकादश दैवतानि । दक्षिणं दोः सव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि । क्लोमानं प्लीहानं पुरीततं वनिष्ठुमध्युद्धिं मेदो जाघनीमित्युद्धरति । गुदं मा निर्लेषीर्वनिष्ठुं[3] मा निर्लेषीरिति[3] संप्रेष्यति । यद्यच्च मेध्यं मन्यते । कुम्भ्यां[4] पशुं समवधाय शामित्रे श्रपयति । शूले हृदयमुपहृत्य प्रतपत्यूवध्यगोहे शकृत्संप्रविध्यति लोहितं च निरस्यति । शृते पशौ पुरोडाशेन प्रचरेज्जुहूपभृतोरुपस्तीर्यावदायाभिघार्येन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्रावित इन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति संप्रेष्यति । मैत्रावरुणो होतारं प्रेष्यत्यौपभृतं जुह्वां निधायाग्नये ऽनुब्रूहीति स्विष्टकृते संप्रेष्यत्याश्राव्य प्रत्याश्राविते ऽग्नये प्रेष्येति संप्रेष्यति[5] । मैत्रावरुणो होतारं प्रेष्यति । ॥ १७ ॥

वषट्कृते हुत्वा विरुज्य प्राशित्रमवद्यतीडां च न यजमानभागमिडान्तः पशुपुरोडाश । उपहूतामिडां मैत्रावरुणषष्ठाः

---

१ Thus MLHR; ०दैवत ATBV.

२ Thus TV; ०वक्षांसितपम ML; ०वक्षांसितनिमद् RH; ०वक्षांसितमनिमद्वितस्ने B; ०वक्षांसतनिम्नतस्नु A. Cp. X. 19.

३ Thus the Vyākhya only; निर्ल्लेषि० V; निर्लेष्टी० and निर्लेषी० T; निर्ह्रेषी० R; निर्वेषी० the other Mss.

४ तत्कुम्भ्यां VMLT; कुम्भ्यां AHRB. Separation of sentences uncertain.

५ RHB om. संप्रेष्यति.

प्राश्नन्ति । प्रस्तरे मार्जयन्ते । कृत्स्नसंस्थेत्येके । जुह्वां पञ्चगृहीतं गृहीत्वा[1] पृषदाज्यं गृहीत्वा[1] स्रुवं पृषदाज्यं चादाय शृतꣳ हविः[2] शमितरित्यभ्यागम्याभ्यागम्य[3] त्रिः पृच्छति । शृतमिति शमिता त्रिः प्रत्याहोत्तरतः परिक्रम्य शूलाद्धृदयं प्रवृह्य कुम्भ्यामवधाय सं ते मनसा मन इति पृषदाज्येन हृदयमभिघारयत्यूष्माणमुद्गतं स्वाहोष्मणो ऽव्यथिष्या इत्यनुमन्त्र्य यस्त आत्मा पशुष्वित्याज्येन पशुमभिघार्य दृꣳह गा इति कुम्भीमुद्वास्य[4] यूपाहवनीययोरन्तरेण[4] दक्षिणातिहृत्य वपावत्पञ्चहोत्रा पशुमासादयति षड्ढोत्रा वा । हृदयशूलं सुरक्षितं निदधाति । जुह्वामुपभृति वसाहवन्यां समवत्तधान्यां च चतसृष्वाज्येनोपस्तृणाति । जुह्वां हिरण्यशकलं निदधात्युपभृति च । प्लक्षशाखायां स्वधितेरश्याक्रया[5] हविषो ऽवदानान्यवद्यन्मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीति संप्रेष्यति । हृदयस्याग्रे ऽवद्यत्यथ जिह्वाया अथ वक्षस । एतद्वै पशोर्यथापूर्वं[6] । यथाकाममुत्तरेषामवद्यति । यथोद्धृतमवद्यतीत्येके । मध्यतो गुदस्यावद्यति । द्विर्द्विरवदाय दैवतानि जुह्वां । सौविष्टकृतानि सकृत्सकृदवदायोपभृति निधाय शेषाणि समवत्तधान्यां निदधाति । गुदं द्विधा विभज्य स्ववीय उपयड्भ्यो निदधाति ॥ १८ ॥

---

१ पञ्चगृहीतं पृषदाज्यं गृहीत्वा VLT; पञ्चं च गृहीतं गृहीत्वा पृषदाज्यं गृहीत्वा M; पञ्चगृहीतं गृहीत्वा HB; पञ्चगृहीतात्पृषदाज्य गृहीत्वा A. The Vyākhyā agrees with text as constituted above.

२ AHB ins. सु after हविः (perhaps pointing to pluti ?).

३ ०भ्यागम्याभ्यागम्य AR; ०भ्याक्रम्याक्रम्य H; ०भ्यागम्य MLTV; ०भ्यागत्य B.

४ From उद्वास्य unto ०न्तरेण missing in A; HB are the corrupt.

५ ०अ्या० ATVH; ०त्रिया० MLB.

६ Cited from TS. VI. 3. 10. 4 (वै !).

अणीयस्त्रैधं[1] विभज्य मध्यमं द्विधा कृत्वा जुह्वां निधायावशिष्टयोरन्यतरत्तृतीय उपभृतीतरत्समवत्तधान्यां निदधाति । त्रैधं मेदो विभज्य यूष्ण्यवधाय[2] तृतीयेन जुहूं प्रोर्णोति तृतीयेनोपभृतं चोपस्तृतसमवत्तधान्यां[3] हृदयजिह्वावक्षांसि तनिम मतस्नू गुदमेदसोस्तृतीयौ भागौ षड्वनिष्ठुं सप्तमं कृत्वानस्थिभिरिडां वर्धयति । क्लोमानं प्लीहानं पुरीततमित्यवधाय यूष्णोपसिञ्चति । शीर्षांसाण्वूकापरसक्थ्यान्यनवदानीयानि शृतैः संनिधायैन्द्रः प्राण इति संस्पृशत्यपां त्वौषधीनामिति वसाहवन्यामुपस्तीर्य वसां गृह्णाति । श्रीरसीति स्रवन्तीं धारां स्वधितिना सकृच्छिनत्ति द्विः पञ्चावत्तिनः । आपः समरिणन्निति पार्श्वेन वसाहोममपिदधाति । दैवतेषु सौविष्टकृतेष्ववत्तेषु[4] यूष्णोपसिक्तं हिरण्यशकलमवधायाभिघार्यैन्द्राग्निभ्यां छागस्य हविषो ऽनुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्रावित इन्द्राग्निभ्यां छागस्य हविषः प्रेष्येति संप्रेष्यति[5] । मैत्रावरुणो होतारं प्रेष्यति । याज्याया अर्धर्चान्ते प्रतिप्रस्थातोत्तरतस्तिष्ठन् घृतं घृतपावान इति वसाहोमं जुहोति । वसाहोमोच्छेषेण[6] वाजिनवद्दिशः प्रति यजत्यत्रैव तिष्ठन् जुह्वामुपस्तीर्य पृषदाज्यात्सकृत्स्रुवेणादाय[7] जुह्वामवदाय[8]

---

१ त्रेधा MLH ; त्रैधं HTBV.

२ यूष्ण्यवधाय BHTV : ०वधायावदाय A, यूष्ण्यवदाय L ; in M this passage has been omitted.

३ ? चोपस्तृतसमव० LATV ; चोपस्तीर्य समव० HB.

४ यत्र ins. AHB.

५ H. om. संप्रेष्यति.

६ होमोच्छेषेण AHTBV ; ०होमशेषेण ML ; ०होमोच्छेषणं R.

७ Thus AHR ; ०ज्यात् किञ्चित्सकृत् MLTVB.

८ Thus the Mss. ; read अवधाय instead of अवदाय ?

दिरभिघारयति । वनस्पतये ऽनुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्राविते वनस्पतये प्रेष्येति[1] ॥ १९ ॥

मैत्रावरुणो होतारं प्रेष्यति । वषट्कृत उत्तरार्धपूर्वार्धे ऽतिहाय पूर्वा आहुतीर्जुहोत्यौपभृतानि जुह्वां विपर्यस्याग्नये स्विष्टकृते ऽनुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्राविते ऽग्नये स्विष्टकृते प्रेष्येति संप्रेष्यति[2] मैत्रावरुणो होतारं प्रेष्यति । वषट्कृते वनस्पतिवद्धुत्वा प्रत्याक्रम्य यथायतनं स्रुचौ सादयति । मेदस्विनीमवान्तरेडामवद्यति । मेदसोपस्तीर्य होतुर्हस्ते प्रकृतिवदिडामवदाय मेदसाभिघारयति । होत्रे ऽध्युद्धिं हरत्यग्नीध्रे मेदस्विनं वनिष्ठुं ब्रह्मणे वस्नो । वयं सोम व्रते तवेति ब्रह्मा तत्प्राश्नाति । प्राश्याचम्यान्तर्वेदि मार्जयन्ते । ऽग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधींश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति । शामित्रादाग्नीध्रीयादाग्नीध्रो ऽङ्गारानाहृत्योत्तरस्यां वेदिश्रोण्यां होत्रीये वा बर्हिर्व्यूह्य न्युप्योपसमाधाय निहितं स्थवीयो गुदकाण्डमेकादशधा तिर्यगसंछिन्दन्प्रच्छिद्यानूयाजानां हुतं हुतमपर्यावर्तयन्प्रतिप्रस्थाता समुद्रं गच्छ स्वाहेत्येतैः प्रतिमन्त्रं वसाहवन्या हस्तेन वोपयजति । ॥ २० ॥

यदुपभृति पृषदाज्यं तज्जुह्वामानीय तामेवोपभृत्य सकृद्दक्षिणातिक्रान्तः पृषदाज्येनैकादशानूयाजान्यजत्याश्राव्य प्रत्या-

---

१ प्रेष्येति ALTVH ; प्रेष्यति MB. Read probably with the Vyākhyā वनस्पतये प्रेष्येति संप्रेष्यति.

२ Only in MLTV ; H and AR. are incomplete , R omits the word.

आश्राविते देवेभ्यः प्रेष्येति प्रथममनूयाजं संप्रेष्यति प्रेष्य प्रेष्येत्युत्तरान् । यजमानश्चतुर आद्याननूयाजान्प्रथमेनानुमन्त्रयते दशमं चानूयाजं पञ्चमप्रभृतींश्चतुरो द्वितीयेनोत्तमेन नवमैकादशौ । पञ्चमप्रभृतिष्वध्वर्युमैत्रावरुणौ[1] यजेति होतारं प्रेष्यतो दशमवर्जमुपयष्टा सर्वाणि हुत्वाद्भ्यस्त्वौषधीभ्य इत्युत्तरतो लेपं निमृज्य मनो मे हार्दि यच्छेति हृदयमभिमृशति । तनूं त्वचमिति[2] धूमं प्रेक्षते । ऽध्वर्युः[3] प्रत्याक्रम्य जुह्वा त्रिः स्वरुमक्त्वाहवनीये पुरस्तात्प्रत्यङ्मुखस्तिष्ठन् द्यां[4] ते धूमो गच्छत्वित्यनूयाजान्ते जुह्वा स्वरुं जुहोति । शृङ्गाणीवेच्छृङ्गिणामिति यजमानो हुतं स्वरुमुपतिष्ठते । ऽध्वर्युः स्रुग्व्यूहनादि प्रतिपद्याश्राव्य प्रत्याश्राविते सूक्ता प्रेष्येति सूक्तवाके संप्रेष्यत्यग्निमद्येति स होतारं प्रेष्यति । जुह्वा बिले जुहूपभृतामग्राण्यवधाय[5] सङ्स्रावभागाः स्थेति तान्परिधीन्प्रहृतानभिप्रस्रावयति[6] । प्रत्यञ्चः परेत्य पत्नीः संयाजयन्ति । दक्षिणेन विहारं जाघनीमाहृत्य तया पत्नीरग्निं गृहपतिं च यजति । पूर्वस्योत्तानाया जाघन्या अवद्यत्युत्तरस्य नीच्यास्तयोत्तानभागयोर्होत्र[7] इडायामग्नीधे षडवत्तं च क्रमेण भवतः । प्राशितायां जाघन्यां शेषं पत्न्यै प्रयच्छति । साध्वर्यवे । बाढं शमित्रे यदि ब्राह्मणः । ॥ २१ ॥

१ Doubtful : पञ्चम० MLATV ; चतुर्थ० HB (as Hir.).

२ तनू गां चमलच० ML ; तनूं पंचमलच० TV ; तनूचत्वभि० B.

३ ०ध्वर्युः BHVTR ; ०ध्वर्यु A ; ०ध्युँ ML.

४ द्यावं MLTV ; यावं A ; देवं H ; दिवं B and the Vyākhyā.

५ Thus all the Mss. and the Vyākhyā ; cp. VII. 7.

६ अभिप्रस्रावयति HAB ; अभिप्रवापयति ML ; ०प्रहापयति TV.

७ ? ०थोत्तरभागयोर्होत्रे MLTV ; ०थोत्तानन्यभावो होत्र A ; ०थोत्तरानन्यझावो होत्ट HB.

ध्रुवामाप्याय्य यज्ञ यज्ञं गच्छेति त्रीणि समिष्टयजूंषि जुहोति । हृदयशूलेन चरत्यसंस्पृशन्हृदयशूलमन्तरेण चात्वालोत्करावुदङ् गत्वा[1] शुगसि तमभिशोचेति द्वेष्यं मनसा ध्यायन् शुष्कस्य चार्द्रस्य च सन्धावुद्वासयत्यप उपस्पृश्य धाम्नो धाम्न इत्युपस्थाय सुमित्रा न इत्यद्भिर्मार्जयन्ते । ऽप्रतीक्षमागत्यैधोऽस्येधिषीमहीत्याहवनीये समिध आधायापो अन्वचारिषमित्युपतिष्ठन्ते । तथा गार्हपत्ये पत्नी च । सर्वेषां पशुबन्धानामेष कल्पो । नमः सखिभ्यः[2] सन्नान्मावगाताग्रासानः सुवीर्यमिति यजमानः संस्थिते यूपमुपतिष्ठत उपतिष्ठते । ॥ २२ ॥

## इति श्रौतसूत्रे दशमः प्रश्नः ॥

---

१ उदं गत्वा MB; उदग्गत्वा ALHTV.

२ सख्भ्यः A, सखभ्यः the Vyākhya; सखिभ्यः MLBTV; सक्तिभ्यः H; cp. Āp. VII. 28. 2, but Hir. VI. 25 सखिभ्य.

अथ सौत्रामणी । तया ब्राह्मणो राजन्यो वैश्यो वा भूतिकामो यजेत सोमातिपवितः सोमवामी राजा चापरुद्धो[1] ऽभिचरन्नभिचर्यमाणो ऽभिषेकेषु च सर्वत्र । सौत्रामण्या यक्ष्यमाणस्य पुरस्तात् त्रिरात्रे सीसेन क्लीबाच्छष्पाणि व्रीह्यादीन् क्रीणाति । तानि क्षौमे न्युप्योपनह्यत्यग्न्यन्वाधानादि परिस्तरणान्तं कृत्वा पाणिप्रक्षालनादि प्रतिपद्य कपालानां स्थाने स्थालीं प्रयुनक्त्यश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे प्रभूतान्व्रीहीन्निर्वपति । तेष्वर्धानवहत्य चरुकल्पेन श्रपयत्यर्धान् गार्हपत्ये लाजान् भर्जयत्यग्रेण[2] गार्हपत्यमवटं खात्वा तस्मिंश्चरुं सुरायाः कल्पेन सुरां संदधाति यथा परिस्रुद्भवति[3] । स्वाद्वीं त्वेति परिस्रुता शष्पाणि संसृजति । ॥ १ ॥

सोमो ऽस्यश्विभ्यामिति संसृष्टानभिमृशति[4] । तिसृषु रात्रिषु व्युष्टासु पशुबन्धस्तायते सौत्रामणिः[5] । तस्या[6] निरूढपशुबन्धवत् कल्पः । सौमिकवेदितृतीये[7] यजत इति विज्ञायते । पूर्वेद्युरेकमेव यूपं छिनत्ति । त्रीनित्येके । प्राकृतेन वेदेन कार्ये

---

१ राजाचापरुद्धो TBHV; राजावापरु० MLR; राजापरु० A; राजाचापरध्य the Vyākhyā.

२ Thus B; हर्जत्यग्रेण A; हर्जयत्य० H; भर्जयत्य० VMLT and the Vyākhyā.

३ परिस्रुत् भ० H; परिग्टङ्क० VLT; परिस्रुग्भ० A; परिस्टग्भ० M; परिस्रुक् भ० B.

४ संसृष्टान० all the Mss. and the Vyākhyā; read संसृष्टाम० ? (viz. सुराम्).

५ ? सौत्रामण A; सौत्रामणिः VLT; ०मणी M; BH corrupt.

६ तस्या ABMLTV; तस्य H only.

७ सौमिक० AMLTV; सौम्य० HB; cp. Āp. XIX. 1. 14.

करोत्युत्तरवेदेर्दक्षिणतो विमिता[1] परिस्तृता भवति यदि ह्यहः कालो । यस्मिन्काले ऽध्वर्युरुत्तरवेदिं करोति तदा प्रतिप्रस्थाता चात्वालात्पुरीषमाहृत्योत्तरवेदिं[2] दक्षिणेन खरं चतुरश्रं ह्यङ्गुलोन्नतं करोत्यग्रेणान्वाहार्यपचनं द्वितीयं खरं च । यदाध्वर्युरग्निं प्रणयति तदान्वाहार्यपचनादङ्गारानाहृत्य प्रतिप्रस्थाता पूर्वस्मिन्खरे प्रतिष्ठापयत्यत्र पाणी न[3] प्रक्षालयते । ऽश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे त्रीणि वैकङ्कतान्यूर्ध्वपात्राण्यपरस्मिन्खरे प्रयुनक्ति सतं शतातृण्णां स्थालीं रुक्मं वालस्रावं श्येनपत्त्रं श्रयणानि । पशूपाकरणकाले[4] सुरामुद्भिद्य[5] सते निःषिच्य पुनातु ते परिस्रुतमित्यादिना सदशेन[6] वालमयेन पवित्रेण सुरां पुनाति ॥ २ ॥

वायुः पूतः पवित्रेणेति सोमवामिनः सोमातिपवितस्य च प्राङ् सोम इति सोमवामिनः प्रत्यङ् सोम इति सोमातिपवितस्य । पूतां सुरां ब्राह्मणस्य मूर्ध्नि[7] खरे वासाद्य पशूनुपाकरोति । समानो यूपः स्वरुश्चाश्विनं धूम्रमजमालभते सारस्वतं मेषमैन्द्रमृषभं मेषं वा । बार्हस्पत्यं पशुं चतुर्थमतिपवितस्यालभते

---

१ ? उत्तरवेदि दक्षोर्विमिता ML; उत्तरवेदेर्विमिता A, उत्तरवेदिविमिता H; उत्तरवेदिर्विमिता TBV.

२ चात्वालात्पुरीष० LTV, चात्वालान्मृदं पुरीष० MB, चात्वालान्मृदपुरीष० HA.

३ अत्र पाणी न प्र० MAB (cp. Hir. XIII. 24), अत्र पाणी प्र० L, अत्र पात्राणि पाणिना प्र० H; अत्र पाणी स प्र० TV.

४ प्राक् before पशू० ins. AHB.

५ ०त्खिद्य A; ०द्भिद्य VMLTB and the Vyākhyā, ०द्य HR.

६ Thus ATV; सदेशेन L; सदेसेन M; देशन HRB.

७ मूर्ध्नि MB and the Vyākhyā; मूर्धनि H, मूर्धन् VAT; मूर्ध L.

सोमवामिनश्च[1] । पाशुकानि पात्राणि संमृज्य जुहूवदूर्ध्वपात्राणि संमार्ष्टि । वपासु हुतासु रुक्ममृषभः सूत्वरी[2] वडबा[2] च दक्षिणा । चात्वाले मार्जयित्वोर्ध्वपात्रैः कुविदङ्गेति पुरोरुच-मनूच्यापरस्मिन् खरे सुराग्रहान्गृह्णाति । सर्वेषां ग्रहाणामेका पुरोरुग्युवꣳ सुराममश्विना पुत्रमिव पितराविति देवतात्रयवत्यौ याज्यानुवाक्ये भवत । उपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रे-णाश्विभ्यां जुष्टं गृह्णामीत्याश्विनं ग्रहमध्वर्युर्गृह्णात्युपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रेण सरस्वत्यै जुष्टं गृह्णामीति प्रतिप्रस्थाता सारस्वतमुपयामगृहीतो ऽस्यच्छिद्रां त्वाच्छिद्रेणेन्द्राय सुत्राम्णे जुष्टं गृह्णामीति यजमानो ब्रह्मा वैन्द्रम् । ॥ ३ ॥

कुलसक्तून्सिंहलोमानि चाश्विने श्रीणाति[3] बदरसक्तूञ्छार्दूल-लोमानि च सारस्वते कर्कन्धुसक्तून्वृकलोमानि चैन्द्रे । ऽपि वा सिंहावध्वर्युर्मनसा ध्यायेच्छार्दूलौ प्रतिप्रस्थाता वृकौ यजमानः । श्येनपत्त्रेण ग्रहान् परिमृज्यैष[4] ते योनिरश्विभ्यां त्वेत्यध्वर्युर्यथा-यतनं सादयत्येष ते योनिः सरस्वत्यै त्वेति प्रतिप्रस्थातैष ते योनिरिन्द्राय सुत्राम्णे त्वेति यजमानो । ऽपि वा पयो-ग्रहान्गृह्णाति[5] न सुराग्रहानित्येकेषां[6] । पुरोडाशान्निरुप्यैन्द्र-

---

१ ०वामिनश्च LV; ०वाजिनश्च AB; ०याजिनश्च MH; ०वाविन० T.

२ सूत्वरी वडपा च M; सूत्वरि च बंधसबाच A: सूत्वरिर्वडवा H: सार्त्वं वडबा च L; सार्त्विरि TV; सूत्वरी B also. The Vyākhya: सार्त्वरीति वडबविशेषणं। नष्टप्रत्यागता सात्वरि (thus !)। रुक्मस्य नपुंसकत्वात्। नपुसक-मनपुंसकेनेति नपुसकमेकशेषत्वात्।

३ Thus TV; श्रिणाति L; घृणाति H; शृणाति A; गृह्णाति MB.

४ Thus H and the Vyākhya; संमृज्य the other Mss.

५ गृह्णाति MLHTV; गृह्णंति AB.

६ ०ग्रहानित्येवेषां। पुरः पुरोडा० ML; ०ग्रहानिति एतेषां पुरोडा० TBV; ०ग्रहानिति। वेषां पुरोडा० A; ०ग्रहानित्येषां पुरोडा० H.

मेकादशकपालं सावित्रं द्वादशकपालं वारुणं दशकपालं च निर्वपति । तानासाद्य तत्तद्धविर्भिस्ते प्रचरन्त्यश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सोमानाꣳ सुराम्णामनुब्रूहीत्यध्वर्युः संप्रेष्यत्याश्राव्य प्रत्याश्राविते ऽश्विभ्याꣳ सरस्वत्या इन्द्राय सुत्राम्णे सोमान्सुराम्णः प्रस्थितान्प्रेष्येति संप्रेष्यति[1] मैत्रावरुणो होतारं प्रेष्यति । वषट्कृते जुह्वति सोमस्याग्ने वीहीत्यनुयजत्यहाव्यग्ने हविरास्ये ते यस्मिन्नश्वास इति द्वाभ्यां यजमानो हुतमनुमन्त्रयते । ॥ ४ ॥

ब्राह्मणस्य यजमानस्य ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं । यदि ब्राह्मणं न विन्देद्वल्मीकवपायामवनयेदिति ब्राह्मणं[2] । नाना हि वां देवहितं सदो मितं यदत्र शिष्टꣳ रसिन इति द्वाभ्यामुच्छेषणं पिबेद्द्वे स्रुती अशृणवं पितॄणामिति वा सर्वहुतं[3] जुहुयाद्दक्षिणे ऽग्नौ[4] शिक्येन धृतायां स्थाल्यां शतातृण्णायां पवित्रमुदीचीनदशं वितत्य यन्मे मनः परागतमिति रुक्मं कुण्डलं निष्कत्रयं द्वयं वा[5] शतमानमनूनं[6] धारयन्सोमप्रतीकाः पितरस्तृप्णुतेति सुरोच्छेषं समवनयति । त्वꣳ सोम प्रचिकित इत्येताभिः पितृमतीभिः सौमीभिस्तिसृभिर्याज्यानुवाक्याभिः[7] स्रवन्तीं पुरस्तादध्वर्युरुपतिष्ठत उत्तराभिस्तिसृभि-

---

१ संप्रेष्यति om. HRB.

२ See TB r. I. 8. 6. 2.

३ सर्वहुतं वा AHRB and the Vyākhyā.

४ दक्षिणेग्नौ AHBV; दक्षिणाग्नौ ML.

५ रुक्मं कुण्डलं निष्कत्रय द्वयं वा शत० MB; रुक्मं कुण्डलं निष्कत्रयं वा शत० H; रुक्मं शत० LA.; TV om. these four words.

६ Thus AHMLTV; ०मनूनान्वा० B.

७ सौमीभिः given by AHTBV, not by ML

दक्षिणतो ब्रह्मोत्तराभिस्तिसृभिः पश्चाद्धोता। यदग्ने कव्यवाहनेति काव्यवाहनीभिराग्नीध्रः शतातृण्णां दक्षिणे ऽग्नौ निदधाति। राजन्यवैश्यौ[1] तु सुरोच्छेषं स्वयमेव पिबेताम्। ॥ ५ ॥

पुरोडाशैः प्रचर्य पशुभिः प्रचरत्यैन्द्रसावित्रवारुणैः पुरोडाशैः प्रचरति। पशूनां पुरोडाशानां च समानं स्विष्टकृदिडं। संस्थाप्य हृदयशूलैर्मासरेण पात्रैश्चावभृथं यन्ति। मासरमृजीषकल्पेन प्रतिपादयति[2]। यस्ते देव वरुण गायत्रछन्दा इत्याश्विनं पात्रमवभृथे संप्रविध्यति यस्ते वरुण त्रिष्टुप्छन्दा इति सारस्वतं पात्रं यस्ते देव वरुण जगतीच्छन्दा इत्यैन्द्रं पात्रं यस्ते देव वरुणानुष्टुप्छन्दा इति शतातृण्णां स्थालीं यस्ते देव वरुण पङ्क्तिच्छन्दा इति हृदयशूलं। तूष्णीं प्रत्यायन्ति। संतिष्ठते सौत्रामणी। ॥ ६ ॥

जुह्वादीनां स्रुचां चतसृणामायामं[3] चतुर्विंशत्यङ्गुलं बाहुमात्रं वा। मूलेन मूलमग्रेणाग्रं त्वक्पार्श्वोर्ध्वबिलं[4] च कर्तव्यं दण्डस्यायामं[5] द्वादशाङ्गुलं मूलेनाहमष्टाङ्गुलमग्रनाहं[6] षडङ्गुलं तदूर्ध्वं द्वादशाङ्गुलं तस्मिंस्त्र्यङ्गुलं घनं षडङ्गुलिविस्तारमग्रं गजस्योष्ठवद्वा बिलं निम्नमग्रान्तं घृतधारापातनार्थं[7] कुल्यां[8] च

---

१ Thus the Vyākhyā ; वैश्ये the Mss.

२ ०यन्ति AH.

३ ०णामायाम HT ; ०णामायमनं ML ; ०णामायामन A ; ०णामायाच्च B. Read probably ०णामायामम्.

४ ? ०पार्श्वोर्ध्वबिलं VMTB. ०पार्श्वोर्द्वबिलं L ; ०पार्श्वर्ध्वबलं A ; ०पार्श्व० द्वेवलवं H.

५ ०मं VLTB० ; म AHR ; ०मे ML.

६ Thus ATRB ; मूलनाभ० H ; मूलनालं ML.— ०मग्रनाहं VLTBA ; ०मग्रनालं M ; missing in H.

७ Thus B ; ०पतनार्थं MLT ; ०पातानां AHR.

८ ? कुल्यां MLVT ; कूल्यां B ; ग्यंगुलं HR and first hand of A.

कारयेद्ध्रुवाया दण्डस्योर्ध्वे चतुरङ्गुलं घनं मध्ये द्व्यङ्गुलनिम्नं[1] चेति विशेषो । जुहूवदायामौ दर्शपूर्णमासाग्निहोत्रार्थौ स्रुवौ द्वयोश्च दण्डायतमेकविंशत्यङ्गुलं तन्मूलमग्रं च पूर्ववद्दण्डोर्ध्वे त्र्यङ्गुलं समवृत्तं द्व्यङ्गुलं घनं नासिकवद्द्विपुटं[2] बिलं । तत्पुटयोर्विस्तारघननिम्नं[3] चैकाङ्गुलमेतेषां बाहुमात्रायामे ऽप्यविशेष ऊर्ध्वे साग्रं बिलमेकमेवेति विज्ञायते । शिष्टं[4] दण्डायामं कुर्वीत । स्फ्यस्यायामो द्विप्रादेशस्तस्य विस्तारघनं च[5] द्व्यङ्गुलं हंसस्य मुखवन्मूलं खननार्थमग्रं[6] कुशतीक्ष्णं च । ॥ ७ ॥

शम्या जुहूवदायामा तथैव दण्डस्य मूलमग्रं च । दण्डं विंशत्यङ्गुलमूर्ध्वे ऽग्रे चतुरङ्गुलं पद्मस्य मुकुलोपमं कुम्बमेतस्य[7] बाहुप्रमाणे चैवं कुम्बशेषं[8] दण्डायतं कुर्यादष्टाङ्गुलिविस्तारायता प्रणीता चतुरङ्गुलोन्नता मध्ये षडङ्गुलिविस्तारायता त्र्यङ्गुलिनिम्ना चतुरश्रा प्रस्थार्धोदकपूर्णा वृत्ता वा तथा करोति दोहनी च प्रस्थपयःपूर्णा । मेक्षणं स्फ्यायामविस्तारं घनमेकाङ्गुलं द्व्यङ्गुलं वा । चतुरङ्गुलिविस्तारायतमग्रं प्राशित्रपात्रं द्वादशाङ्गुलायामं । तस्य मूलं त्र्यङ्गुलमुन्नतं चतुरङ्गुलं तदूर्ध्वे नवाङ्गुलायतं षडङ्गुलिविस्तारं च । मध्ये द्वादशाङ्गुलायतं चतुरङ्गुल-

---

१ ०ङ्गुलं निम्न AHTB; ०ङ्गुलनिम्नं LM.

२ Thus B; ०वद्विपुटं AT (first hand)०, वद्विपुलं MLT (sec. hand); ०वद्विपुरं H.

३ ०घन निम्न AH; ०घननिम्नं MLTBV.

४ शिष्ट MLVHT; शिष्ट ARB.

५ च BMLR; न H; TA om.

६ Thus BT; खनोर्थं A; घनार्थं ML; घनोर्थं HR.

७ कुंब० AMTR; कुंभ० HB, कुंच०L.

८ कुंब० AHTV; कुंभ० MLB.

विस्तारं[1] त्र्यङ्गुलनिम्नं[2] तत्प्रमाणाकारौ गोकर्णवद्वा भवेतामिडापात्रं चतुर्विंशत्यङ्गुलायतं तदूर्ध्वविस्तारमुन्नतं च प्रादेशमूलविस्तृतं[3] प्रादेशार्धं[4] भित्तिः परितस्त्वेकाङ्गुला मध्यतः शेषविस्तारायतं दशाङ्गुलं[5] निम्नं चमसं प्रस्थपूर्णं सुवृत्तं चतुरश्रं वा भवेदुलूखलं हस्तोन्नतं तस्य नाहं[6] द्विगुणं परितोभित्ति द्व्यङ्गुलायतमष्टक-शेषविस्तारायतं[7] बिलं । तस्य निम्नं षोडशाङ्गुलम् । ॥ ८ ॥

मुसलं चतुर्हस्तं यजमानायतं वा युक्तनाहं[8] मूले ऽयसा निबद्धमेतौ यावता हविर्द्रव्यस्यावघातयोग्यौ तावत्प्रमाणौ वा । वेणुवेत्रकरीषकेष्वेकेनारत्निमात्रायतं[9] वृत्तमूलं विंशत्यङ्गुलि-विस्तारमष्टादशाङ्गुलिविस्तारं वा क्रमान् न्यूनं द्व्यङ्गुलाग्रं शूर्पं । याज्ञिकं यत्किञ्चित्काष्ठं द्वितालदीर्घं दृष्टिरधरा[10] दृषदूर्ध्वोपला च द्वे पेषण्यौ संपेषणशक्ते[10] । तथा ग्रावाणौ द्वौ यथोक्तयोग्यौ ।

---

१ चतुरङ्गुलविस्तार AH ; चतुरङ्गुलिविस्तारस् B ; चतुरङ्गुलमूल MLT . the same, but ०मूल V.

२ ०लनिम्नं MLT ; ०लं नि० AHRB.

३ ? प्रादेशमूल० AHB ; प्रादेश मूल० MLTV.

४ प्रादेशार्धं VMLTB ; ०शार्धमं AHR.

५ दशांगुलं VMLTB ; दशांगुलां or लान् AH.

६ नाहं ALVHTB , नाभि M.

७ ? ०यतमष्टकशेष० A ; ०यतंमष्टके शे० MLTV ; HR corrupt ; ०यत-म्मस्तेशेष० B.

८ युक्त नाहं LTV ; युनक्ति ते नाह MAHB ; cp. I. 2.

९ ? ०वेत्रकरीषकेष्वे० M and L (but L ०करिषि० and T ०करीषि०) ; ०वेत्रकरीवेषिकेष्व० A , ०वेत्रकारिवेषिचेव० H ; ०वेत्रकरीवैषीकेनष्वे० B.

१० ?? दृष्टिरधरादृषमासूद्वापवाचिद्विपेषस्त्यवेषणशक्तो M ; दृष्टिरदृषमद्वोपाचिद्वि० (etc., as M) L ; दृष्टिमधरादृषदूर्ध्वोपला च द्वेषवर्षण्यौ संप्रेषणशक्तो A ; दृष्टिमाद्-दात्यपदृष्टदूर्ध्वेवपा च द्वेषपेषांषडा संपेषणशक्यो H ; दृष्टिरधरादृषयार्ध्वोपला च द्वे पेषण्यौ संपेषणशक्तो T ; दृष्टिमाद्दात्यधरादृष्टमूर्ध्वोपप्राच्च द्वेषे पषण्यौ संपेषणौ शक्यो B.

मृन्मयी प्रस्थपूर्णाज्यस्थाली । कांस्यादिलोहमयीत्येके । विंशत्यङ्गुलिविस्तारायता पिष्टसंयवनी पात्री सुवृत्ता चतुःप्रस्थोदकपूर्णा मदन्तिपयोदोहस्तावत्पयःपूर्णा[1] सांनाय्यदधिकुम्भ्यौ[2] च[3] संयुक्तेषु पुरोडाशनिधानाय यावत्तालं[4] तदुक्तसंख्याप्रमाणानि[5] कपालानि द्व्यङ्गुलायतविस्ताराणि वा सर्वेषां मानमर्धाङ्गुलं[6] । प्रस्थतण्डुलपाका चरुस्थाली हविःशेषदानोक्ते[7] द्विप्रस्थतण्डुलपाका वा[8] प्रस्थार्धतण्डुलपाका प्रस्थचतुर्भागतण्डुलपाका वा । संस्रावस्रोतोयुक्तौ[9] । वृत्तोर्ध्वकपालाग्निहोत्रस्थाली[10] । द्रोणार्धतण्डुलपाकान्वाहार्यस्थाली[11] । प्रस्थपूर्णस्तदर्धपूर्णो वा शरावः स्यात् । ॥ ९ ॥

कर्मण्यधिके च तथैवाधिकानि पात्राणि प्रक्षेपणीयानि लौकिकानि भाण्डानि[12] तत्तत्कर्मार्हाणि । स्युर्द्विप्रादेशैः कुशैर्युग्मैः प्रादेशविस्तृतं द्विकानुबद्धमग्रे ग्रथितं चोपाहरणीयं

---

१ Thus MLHRA and T ( the last at the end पूर्णः, not पूर्णा ) : मदन्तीं पयोदोहनस्तावत्पयः पूर्णा B.

२ LT om. ०दधि०

३ च not in MH ; चयः A. ; च given by T ; कुंभय B.

४ यावतालं MHLB ; यावत्काल TA (sec. m.).

५ Thus H ; ०क्तसंख्यांशप्रमाणानि VTA ; ०क्तसंख्यां च प्रमा० ML ; क्तिसंख्यां सप्रमा० B.

६ मान० M ; घन० VTB ; मस० L ; ध्न० A ; सन० H.

७ ०नोक्ते AB , ०नोक्तेः H ; ०नोक्तेर् ML ; ०शेषधानोक्तेर् T.

८ वा MLHT ; सा AR ; B om.

९ ०युक्तौ वृ० MA : युक्ताद्वृ० the other Mss.

१० वृत्तोर्ध्वक० AHB ; वृत्तार्धक० MLTV (cp. Kāty. IV. 14. 1).

११ ०न्वाहार्यस्थाली MLT ; ०न्वाहार्यपचनस्थाली AHBR.

१२ After भाण्डानि A ins. शल्ल, BHR शल्लं च.

कूर्चं तथैवोपसादनीयं चमसमाददाति[1] । प्रादेशो वितस्तिस्तालमिति द्वादशाङ्गुलस्य हस्तो ऽरत्निरिति चतुर्विंशत्यङ्गुलस्य संज्ञा भवेत्सिकतासूक्ष्मासु शुष्काः सिकता ग्राह्यास्तास्वार्द्रतृणम्[2] उल्काष्ठाश्मलोष्टलोमादीन्विसृजेत्परिस्तरणकूर्चपवित्रादीनां बर्हिरुक्तौ[3] कुशान्काशानश्ववालान्वा । तदलाभे सुगन्धितेजनमुञ्जोलपश्यामाकनीवारसस्यदूर्वातृणान्यन्यानि[4] पलालानि[5] वा गृह्णाति । शुण्ठशरशूकविशीर्णतृणनडदमूतवबल्बजानि[6] वर्जयेत्परिधीध्मोक्तौ पलाशखदिरबिल्वाश्वत्थशमीनां शाखाः समिधः परिधयश्च मुख्या । विकङ्कतोदुम्बरन्यग्रोधप्लक्षकाश्मर्यपीतुद्रुवरोहीतकादीनां यज्ञोक्तवृक्षाणां मध्यमास्तदन्यवनस्पतीनां[7] गौणाः । स्वयंशुष्का न ग्राह्याः । ॥ १० ॥

त्रिपर्णाः सर्वे पलाशोपमाः । सर्वत्र विहितद्रव्यालाभे[8] प्रतिनिधिं गृह्णीयादनामिकाङ्गुलिनाहा मुख्याः कनिष्ठाङ्गुलिनाहा मध्यमा न्यूननाहा गौणाः । ग्राम्योदुम्बराः परिधय इत्येके । मूलाग्रे विज्ञाय प्रागग्राः समिधो होतव्या । निम्बश्लेष्मातकनीपतिल्वराजवृक्षविभीतकशल्मलिकोविदारकरञ्ज-

---

१ ०नीय चमसमाददाति MLTV; ०नीयं कूर्चं च समाददाति AB; ०नीयं कूर्चसामाददाति HR.

२ ग्राह्यास्तास्वार्द्रतृण० MLT; ग्राह्यास्तस्या आर्द्रास्तृण० A; ०तास्वार्द्रास्तृण० HRB.

३ Or बर्हिरुक्ता? (०क्तौ TVBM).

४ ? ०नीवारसस्य० HT; ०नीवाररस्य० MLA; नीवारस्य तृणान्य० B.

५ पलालानि AHTR; पलाशानि MLB.

६ शुण्ठ० HR; शुष्क० MLATB.—०नळदमूतव० A; ०नळस्तव० HR; ०नळर(द)मूत० VLT; ०नळम्रत० MB.

७ तदन्यवन० MLT; तदन्यद्वन० AHB.

८ ०लाभे MLTV; ०भावे AHB.

बाधकनिर्गुण्डिपलाण्डुजपानां समिधः परिधींश्च वर्जयेद्ध्विरक्तौ यवनीवारवेणुश्यामाकव्रीहिजातिप्रियङ्गवो[१] धान्यानि हविष्याणां। तेषामलाभे मूलकन्दफलानि वा ग्राह्याणि। सर्वेषु धान्येषु वरककोदारकोद्रवाणि वर्जनीयान्याज्योक्तौ[२] गव्यं घृतं श्रेष्ठं। तदभावे घृतमाजं माहिषं वा। तदभावे पयस्तैलं सार्षपं प्रतिनिधिः। कुसुम्भातसीनारिकेलवृक्षाणां[३] स्नेहमन्यच्च यद्रसवद्भोज्यं[४] तद्वापि पिष्टमिश्रोदकं च होम्यं भवत्यभोज्यं[५] गन्धरसदुष्टं च वर्जनीयं। सर्वेषां पूर्वं पूर्वं श्रेष्ठतमं। पूर्वेषामलाभेऽपरं गृह्णात्यपरं गृह्णाति[६]। ॥ ११ ॥

## इति श्रौतसूत्रे एकादशः प्रश्नः ॥

---

१ ॰वेणुश्यामाक॰ AHRB, ॰श्यामाकवेणु॰ MLT.

२ श्चाज्योक्तौ LT; श्चाज्योक्ते HR: श्चाज्योक्तेन A; श्चाज्योक्तासन्न M., श्चाज्योक्तेन्नं B.

३ ॰नारिकेल॰ ML; ॰नाळिकेर॰ AHTBV.

४ यद्रसवद्भाज्यं A; यद्रसवच्च भो॰ M.; यदान्यच्च भो॰ L, ॰वद्भोज्यं TRB.

५ होम्यं भक्ष्यभोज्यं MLTBR; होम्यं भवत्यभोज्य AH.

६ L ends: परं गृह्णाति without repetition. पर गृह्णाति पर गृह्णाति V; T: परंपरगृह्णाति; परं गृह्णात्यपरं गृह्णातीत्याह विखनाः BAR, पर गृह्णातीत्याह विखनाः M. Originally the Praśna must have ended with repetition of the closing words; see the reading of BAR. So it seems certain that इत्याह विखनाः is a later addition.

अथाग्निष्टोमं व्याख्यास्यामो[1] यक्ष्यमाणः श्रद्धावान्प्रज्ञावान्[2] शुचिर्विध्युपार्जितोपकरणो[3] यथोत्तरोपयोगं[4] बुद्ध्वा संभारान्यत्नेन[5] संभरति । ब्राह्मणानार्षेयाननिवृत्तविद्यानन्नशुद्ध्युपेतान्[6] लक्षणसंपन्नानृत्विजः षोडश ब्रह्मप्रथमान्होतृप्रथमानध्वर्युप्रथमानुद्गातृप्रथमान्वा वृणीते । प्रथमान्महर्त्विजश्चतुरो[7] वा । तानन्यः कर्मज्ञो यजमानानुज्ञातोऽभिवदत्यमुष्य सोमो भविष्यतीति[8] । क ऋत्विजः के याजयन्ति कच्चिन्नाहीनः कच्चिन्न न्यस्तमार्त्विज्यं कच्चित्कल्याण्यो दक्षिणा इति विज्ञायत[9] एवं तमृत्विजः पृच्छन्त्यथैत ऋत्विज एते याजयन्ति नाहीनोऽग्निष्टोमो न न्यस्तमार्त्विज्यं कल्याण्यो दक्षिणा इति स तान्प्रत्याह । भूर्भुवः सुवरायुर्मे प्रावोच इति याजयिष्यन् जपत्ययाजयिष्यन्नमः सोमाय राज्ञ इति सोमं राजानमुपस्थाय प्रत्याचक्षीत । देवो देवमेत्वित्यभिप्रव्रजति । पद्वा नामासीति पन्थानमास्थाय पितरो भूरिति त्रिः पितॄनभिमन्त्रयते । ब्राह्मणाच्छंसी[10] पोता चावशिष्टौ ब्रह्माणावच्छावाकौ[10] ग्रावस्तुच्च होतारौ । नेष्टोन्नेता

१ ०स्यामो यक्ष्य० BMALTV, ०स्यामः सोमेन यक्ष्य० HR.

२ प्रज्ञावान् BATV ; प्रजावान् ML.

३ ०तोपकरणो AB ; ०तोपाकरणो TV ; ०तोपकरो L : ०तोपरणो M.

४ Thus MLTBV , यथोक्तरो० A.

५ Thus MLTBV , यत्नैः A.

६ Thus MLTVB ; ०तिवृत्त० A.

७ चतुरो H ; चत्वारो MLATBV.

८ भवतीति MLATVB ; भविष्यतीति H.

९ विज्ञायते seems to be superfluous.

१० Thus B ; ब्राह्मणाच्छंसी पोता चावशिष्टौ ब्राह्मणाव० ( ब्रह्मणाव० ) HR ; ब्राह्मणाछं पोता चावशिष्टौ ब्रह्माणायच्छ वा० A : ब्राह्मणाच्छंसि[नेष्टा] पोतारावविशिष्टौ ब्राह्मणाव० MLTV.

चाध्वर्यू । उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्यश्चोद्गातारो । ऽभिगरो ध्रुवगोपः संस्राव[1] सदस्य इति सदस्याश्चत्वारश्चेत्येके । वासिष्ठभार्गवाङ्गिरसायास्या महर्त्विजः क्रमशो भवन्ति । शेषाः काश्यपा भारद्वाजा भार्गवा अङ्गिरसो वा । वैश्वामित्रो होतेत्येके । ऽपि वा सर्वेषां योनिर्वृत्तं विद्या च प्रमाणं । दशैकादश वा चमसाध्वर्यवस्तानेकैकशो वृणीते । ॥ १ ॥

चन्द्रमा देवो दैव्यो ब्रह्मेत्येतैर्यथालिङ्गमृत्विज उपांशु देवान्वृत्वासौ[2] मानुष इत्युच्चैर्मानुषानापो देवीर्दैव्या[3] होत्राशंसिन्य इति मैत्रावरुणं ब्राह्मणाच्छंसिनं होतारं नेष्टारमच्छावाकमाग्नीध्रमित्येतान्होत्रकान् रश्मयो देवा दैव्या इति चमसाध्वर्यूंश्च तान्यथोपपादमलंकृत्य मधुपर्कं दत्त्वामावास्यायां पौर्णमास्यां वा दीक्षते । संवत्सरादर्वागपरिमिता दीक्षाकल्पा भवन्ति । दर्शपूर्णमासाभ्यामिष्ट्वाग्निष्टोममाहरेदेष प्रथमः सोमानामतिरात्र इत्येके । सर्वेभ्यः कामेभ्यो ऽग्निष्टोमस्तान्युगपत्कामयेतापि वा पृथक्कामः पृथगाहरेत् । ॥ २ ॥

वसन्ते वसन्ते सोमेन यजेत । तदा तिस्रो दक्षिणा इति विज्ञायते । रथन्तरसामा सोमो बृहत्सामा वा । प्रथमं रथन्तरसामानमाहरेत्पश्चाद्यथाकामं । पौर्णमास्याममावास्यायां वा सुत्यमहर्भवति दीक्षते[4] वैका दीक्षा तिस्रो वा । तदा पञ्चमीं सप्तमीं वा प्रसुतो । देव वरुणेति राजानं देवयजनं याचेत्स चेन्न

---

१ सस्रावः BML and the Vyākhyā ; संस्रावः AHR ; संस्राव्यः TV.

२ देवान् BMLVTRH ; दैवान् A.

३ देव्यौ BMLTRV ; दैव्यो AH.

४ दीक्षते MLA ; दीक्षिते HTRBV. Incomprehensible ! Read perhaps भवति । दीक्षत । एका, etc.

दद्यादन्यं[1] राजानं याचेद्यदि[2] दद्याद्देवयजनवान्भूया इत्येनमभिनन्देत्स यदि न दद्यादिदहं देवयजनं वेद तस्मिंस्त्वा देवयजन आछिनद्मीत्येतैर्यथालिङ्गं[3] यजमान ऋत्विजश्चैनमभिव्याहरन्ति । यदि राजा यजमानो ऽग्निर्होता स मे होतेत्येतैर्यथालिङ्गमृत्विजो देवयजनं याचेदपि वा सर्वे न याचयेयुः[4] सचेदं पश्येति देवता एवोपतिष्ठेत । ॥ ३ ॥

यद्दृढस्थण्डिलं शुद्धमुच्चतममच्छिद्रमवल्मीकमनिरिणमपाषाणं[5] समं प्रतिष्ठितं प्राक्प्रवणमुदक्प्रवणं वा शुद्धौषधि शुद्धद्रव्यं[6] प्रदक्षिणोदकं श्वेतमृत्तिकं[7] पीतमृत्तिकं वा देवब्राह्मणजुष्टमनासुरं सुनिमित्तोपलक्षितं । पुरस्ताद्देवयजनाद्देवयजनमात्रा न शिष्टा[8] देवयजनमित्याचक्षते । कल्याण्यो वा दक्षिणा देवयजने प्रमाणमेदमगन्म देवयजनं पृथिव्या इति यक्ष्यमाणो देवयजनमध्यवस्यति । पुरोहविषि देवयजने याजयेदिति ब्राह्मणोक्तानि[9] काम्यानि देवयजनानि यथाकाममत्र

---

१ स चेन्न दद्यादन्यं MLTV, सचेन्न ददात्यन्यं AB; स चेत्तन्न ददात्यन्यं H; सचेत्यन्नं ददात्यन्यं R.

२ राजानं याचेद्यदि MLT; राजनं स यदि AHRB.

३ ०यजन आछिनद्मि इति MLT and the Vyākhyā; ०यजन आछिन-इत्यै० H; ०यजनमछिन्नदत्यै० A; B useless.

४ याचेयुः the Vyākhyā only.

५ Thus A; शुद्धं सुचंतदंमछि० H; शुद्धमुच्छन्नदछि० MT; शुद्धमुच्छन्न-द्र(म)छि० L; शुद्धसुचंगतम० B; ०सुच्छंददछि० V.

६ ? शुद्धव्यं ML; ०मद्रव्यं AHTBV.

७ श्वेतमृत्तिकं AH; श्वेतमृदं MLTV; श्वेतमृतम् B.

८ ? ०माचानशिष्टं HR०; माचावशिष्टाद् A; ०माचावशिष्टं VMLT; B useless.

९ Cp. Ts. VI. 2. 6.

सर्वतः परिश्रितां पुरस्तादुन्नतां प्रतिदिग्द्वारां प्राचीनवंशां शालां कुर्वन्त्युत्तरतःपुरस्तात्पश्चिमं द्वारमेवान्तरदिक्षु स्रक्तयः। स्रक्तिष्वारोकाः। पश्चात्पत्नीशाला प्राग्द्वाराथ प्राग्दीक्षणीयाया[1] अग्निर्यजुर्भिरिति संभारयजूंष्याहवनीये हुत्वा वाग्घोतेति मनसानुद्रुत्यानुवाकेन जुहोति। दीक्षितान्नं न भुञ्जते प्रागग्नीषोमीयाद्विभक्ते यज्ञार्थे शेषाद्भुञ्जीरन् क्रीते वा राजनि। सोमाय राज्ञे शालायां पायसमन्नं लाजांश्च क्रयादुपाहरन्ति। ॥ ४ ॥

अपराह्णे दीक्षते यजमानः पूर्वाह्णे वाथाध्वर्युर्दीक्षणीयामिष्टिं निर्वपत्याग्नावैष्णवमेकादशकपालं घृते चरुं वा। सप्तदश सामिधेन्यो। न यजमानभागं करोति। न बर्हिषदं पुरोडाशं करोति। न दक्षिणा। पत्नीसंयाजान्तेषाज्येडां भक्षयित्वा विरमन्ति। ध्रुवायाः शेषं करोत्याहवनीयं चावस्थापयत्यन्न[2] प्राचीनवंशां शालामेके समामनन्ति। यत्प्रागग्नीषोमीयात्तदुपांशु[3]। मन्द्रेण दीक्षणीयायां। वागन्तेनेत्येके। ततो नीचैस्तरां नीचैस्तरां। मन्द्रतरेण[4] मन्द्रतरेणेत्येके। उपांशूपसत्सूच्चैरग्नीषोमीये। ऽथ निर्गत्य पूर्वेण द्वारेणोत्तरेण शालां परिश्रिते यजमानस्य केशश्मश्रु वपत। आप उन्दन्तु जीवस इति दक्षिणं

१ प्राग्द्वाराथप्राग्दी० HTV; प्राग्द्वाराथप्रांदी० A; प्राग्द्वारात् अप्राग्दी० ML; प्राग्द्वाराथीप्रादक्षि० B.

२ Thus MLAT and the Vyākhyā: ०नीयमवस्था० HR; ०नीय मुपस्था० B.

३ तद् given by AB, om. by MLHTR.

४ The first मन्द्रतरेण only given by A; om. by MLBH; TV have ततो नीचैस्तरां नीचैस्तमामंतरेणेत्येके.

गोदानं विदार्यौनन्त्योषधे[1] त्रायस्वैनमिति प्रागग्रं दर्भमन्तर्धाय स्वधिते मैनꣳ हिꣳसीरिति क्षुरं तिर्यञ्चं निदधाति । ॥ ५ ॥

देवश्रूरेतानि प्रवप इति प्रोष्य केशान्सानडुहशकृद्युदपात्रे[2] प्रक्षिपत्येवमुत्तरं गोदानमुप्त्वा यजमान ओषधे त्रायस्वैनमिति[3] दर्भे ऽन्तर्धीयमाने जपति स्वधिते मा मा हिꣳसीरिति क्षुरे निधीयमाने स्वस्त्युत्तराण्यशीयेति केशेषूप्यमानेषु । नापिताय क्षुरं प्रयच्छति । श्मश्रूण्यग्रे वपते ऽथोपपक्षावथ केशानभ्यन्तरं नखानि निकृन्तते प्रथमं दक्षिणहस्तस्याङ्गुष्ठप्रभृति तथा सव्यस्य तथा पद्यानीदमहममुष्यामुष्यायणस्येति सकेशमुदपात्रमुदुम्बरमूले गूहयेद्दर्भमूले[4] वान्नाद्याय व्यूहध्वमित्यौदुम्बरेण काष्ठेन दतो धावते । तीर्थे लोमशे ऽवकाविले[5] ऽप्सु स्थावरासु हिरण्यमवधाय स्नाति । यदि दूरे तीर्थमुदपात्रे हिरण्यं निधाय स्नाति । महाव्याहृत्या जलमभिमन्त्र्येदमापः शिवा इति विगाहते[6] । हिरण्यवर्णाः शुचयः पावका इति चतस्र[7] आपो अस्मान्मातरः[7]

---

१ विदार्य all the Mss., must be faulty for वितार्य, cp. Śat. br. III. 1. 2. 5.

२ सानडाहशकृद्युद० A; सानड्डहशकृदुद० L; अनड्डहशकृद्युत० M; सानसुद्युपदात्रे H; अनड्डहं शकृद्युदपात्रे T; सानस्वाहशकृद्युदपात्रे B: सानड्डहशकृद्युद० V.

३ We expect त्रायस्व मा instead of त्रायस्वैनम्.

४ गूहेत् instead of गूहयेत् TV and the Vyākhyā.

५ वकाविले A; वकाविते LTV; वकापिले HB; वंकाविल M. Bhāradvāja has अवकावल, the Vyākhyā अवकावङ्कले.

६ ०गाहति H only.

७ Thus MLATV; चतस्रो इत्यं हिलापो अस्मान्मातरः etc. HB, cp. Hir. X. 3 (page 1023 of the edition). As long as we do not possess the Mantrasamhitā it will be impossible to reconstruct this part with certainty.

शुन्धन्त्विति च जपित्वा स्नात्युदाभ्यः शुचिरा पूत एमीत्युत्तीर्य[1] पयस्वतीरोषधय इत्यपो ऽश्नाति । सोमस्य तनूरसीति चौम-महतं वासः प्रदक्षिणं परिधाय सूर्यस्य वासो ऽसीति नीवी-मनुकल्पयते[2] । ॥ ६ ॥

ऊर्जे त्वेति मनसः प्रतिप्रियमन्नमश्नाति सर्पिर्मिश्रं दध्युप-सेकमत ऊर्ध्वं कनीयः कनीयो व्रतयत्याश्रितस्य केशान्वपतीत्येके गव्यं नवनीतमुदपात्रे सदर्भे निदधात्यथैनन्महीनां[3] पयो ऽसीति पाणिभ्यां प्रस्नाय वर्चोधा असि वर्चो मयि धेहीति मुख-मारभ्यानुलोममा पादाभ्यां[4] त्रिः पराचीनमङ्गानि सर्वाण्य-भ्यक्ते । पृष्ठमन्यो ऽस्याभ्यनक्ति[5] । वृत्रस्य कनीनिकासीति त्रैककुदेनाञ्जनपिष्टेनान्येन वाञ्जीत सतूलया शरेषीकया दर्भ-पुञ्जीलेन वानिधावमानस्त्रिः[6] पूर्वं दक्षिणमक्षि द्विः सव्यमपि वा द्वे[7] पञ्चकृत्वो । बहिः[7] शालाया उत्तरेण प्राग्वंशमेकविंशति-दर्भकूर्चैस्त्रिधा[8] विभक्तैस्त्रित्यतिस्त्वा पुनात्वित्येतैः प्रतिमन्त्रं

---

१ एमीत्युत्तीर्य LTV, एमीत्युत्तार्य M; एमीत्युदेति H; ॰त्युतीति B; एमी-त्युदेति आपः A changed into त्तीर्य.

२ ॰कल्पयते HR; ॰कल्पते AMLTBV.

३ अथैत मही॰ H; अथैतन्मही॰ AR; अथैनं मही॰ LT; अथैनान्मही॰ M; अथैनम् मही॰ V.

४ पदाभ्यां AHB; पादाभ्यां MLTV.

५ Thus A; पृष्ठमन्योऽह्यस्याभ्य॰ MLTV; पृष्ठमन्योदस्याभ्य॰ HRB.

६ Thus R; निधावमानं त्रिः MLTV; निधायमानं त्रिः A; निधायमान-स्त्रिस्त्रिः H; निधायमानं त्रिः B.

७ Uncertain: द्वे पञ्चकृत्वो निधावन (or निधनं) बहिः MB; द्वे पञ्च-कृत्वो बहिः L; अपि वा पञ्चकृत्वा एनं बहिः H; द्वे यं च एनं बहिः A; द्वे पञ्चकृत्वो वा निधावनं बहिः TV.

८ त्रिधा VMLAT and the Vyākhyā; त्रेधा HB.

द्विरुपरिष्टाभ्युन्मृज्य प्रदक्षिणं सकृदवाङ् मार्ष्ट्यच्छिद्रेण पवित्रेणेति सर्वत्रानुषजति । राजसूय एकशतेन कूर्चैश्चित्पतिर्मा पुनातु पवमानः सुवर्जन इत्येतमनुवाकमुन्मृज्यमानो यजमानो[1] जपति यद्देवा देवहेडनमिति तस्य ते पवित्रपते पवित्रेणेति चाथैतानि कर्माणि प्रतिप्रस्थातापरस्मिन्परिश्रिते तूष्णीं पत्न्याः[2] करोत्युन्दनादिवपनान्तं न करोतीत्येके[3] । आ वो देवास ईमह इति यजमानः पूर्वेण द्वारेण शालां प्रविश्य विद्युदसीत्यप उपस्पृश्येन्द्राग्नी द्यावापृथिवी इत्यपरेणाहवनीयमतिक्रम्य दक्षिणतस्तिष्ठंस्त्वं[4] दीक्षाणामधिपतिरसीत्याहवनीयमुपतिष्ठते । तस्यैष संचरो यावत्सुत्यम् । ॥ ७ ॥

आकूत्यै प्रयुजे ऽग्नये स्वाहेत्येतैरध्वर्युर्ध्रुवशेषादौद्ग्रहणानि पञ्च जुहोत्याद्यानि चत्वारि स्रुवेण स्रुचा पञ्चमीमेता दीक्षाहुतयो । वाचा मे वाग्दीक्षताऽ[5] स्वाहेत्येतैरेतासु हूयमानासु यजमानो ऽध्वर्युमन्वारभ्य जपत्यध्वर्युर्द्वादशगृहीतेन[6] स्रुचं पूरयित्वा विश्वे देवस्य नेतुरिति पूर्णाहुतिं षष्ठीं जुहोति । वातं प्राणमिति यजमानस्तामनुमन्त्रयते । ऽथ कृष्णाजिनेन दीक्षते[7] । दक्षिणं पूर्वपादं बहिर्लोममन्तर्मांसं स्यूतं करोतीन्द्र शाक्वर गायत्रीमिति दक्षिणेनाहवनीयं तत्प्राचीनग्रीवमुत्तरलोमास्तृणात्यृक्सा-

---

१ यजमानो given by A only.

२ पत्न्याः AHV (sec. hand) and the Vyākhya; पत्न्यां MLB; पत्न T.

३ Thus A; कुर्वत इत्येके MH; न कुर्वत इत्येके TBV; सक्त इत्येके L.

४ T only ins. the *s*.

५ दीक्षितां MLAHTV and B first hand.

६ जुह्वोत्य० MLATV; जपत्य० HB (and the Vyākhyā).

७ दीक्षिते MLAHTV, दक्षिणे B(!).

मयोः शिल्पे स्थ इति शुक्लकृष्णे सन्धौ संमृशते शुक्लमङ्गुष्ठेन कृष्णामङ्गुल्येमां धियमिति दक्षिणं जान्वाच्य भसत्त[1] आरोहतीमाꣳ[1] सु नावमारुहमित्याहं दीक्षामिति चारुह्य जपत्यथ मेखलया दीक्षते[2] । सा शरमुञ्जमिश्रा[3] वेणी त्रिवृदेकतःपाशा । तयोर्गस्याङ्गिरसीति यजमानमन्तरा वाससः[4] प्रदक्षिणं परिव्ययति । पूषा ते ग्रन्थिं ग्रथ्नात्वित्युत्तरेण नाभिं निष्कर्ष्य ग्रन्थिं ग्रथ्नाति । स ते मास्थादिति नाभेर्दक्षिणतः पर्यूह्य स्थापयति । ॥ ८ ॥

पत्नीं योक्त्रेण दीक्षयति । तां प्रतिप्रस्थाता सं त्वा नह्यामीति पूर्ववत्संनह्यति । ततो ऽस्याः शिरसि जालं प्रतिमुञ्चति । विष्णोः शर्मासीति यजमानो ऽहतेन वाससा सदक्षिणांसं शिरः प्रोर्णुत । इन्द्रस्य योनिरसीति त्रिवलिं पञ्चवलिं वा शाण्या मौञ्ज्या वा रज्ज्वा परिहृतां कृष्णविषाणां[5] यजमानस्य वासोदशायां बध्नाति । कृष्यै त्वा सुसस्याया इति वेद्या लोष्टमुद्धन्ति । सुपिप्पलाभ्यस्त्वौषधीभ्य इति कण्डूत्यां शिरः कण्डूयते । विषाणे विष्यैतमित्यन्येष्वङ्गेषु । पत्न्याश्च प्रतिप्रस्थाता षडङ्गुलमात्रं पृष्ठ्वग्रं कण्डूयमानं शङ्कुं बध्नाति । स बैल्वो पालाशो वा यो वान्यस्य

१ जान्वाच्य भसत्ति आरो० L; जान्वाच्य भसक्तमारो० H: जान्वाच्य भस्तत्त आ० VT; जान्वाच्य अभक्तमारो० A, जान्वाच्याङ्गिस्त्वमारो M. (कटप्रदेशात् Vyākhyā.)

२ दीक्षते L; दीक्षिते MLATBV.

३ Thus MLT and the Vyākhya; शारणमुञ्ज० AB; शणमुञ्ज० H; शरमंज० V.

४ अन्तरावाससः MLTV; अन्तरायाससः A; अन्तरावाससाः (सा) HB.

५ BA ins. after ०विषाणाम्; उत्तानाम्: H: उक्तानाम्; VMLT om. this word.

यज्ञियवृक्षस्याथ[1] मुखसंमितमौदुम्बरं दीक्षितदण्डं[2] मुष्टिनाहमूर्ध्वसदसीत्यूर्ध्वाग्रं यजमानाय प्रयच्छति । सूपस्था देवो वनस्पतिरिति प्रतिगृह्य तं[3] दक्षिणत उपधत्ते । ॥ ९ ॥

यजमानः स्वाहा यज्ञं मनसेति प्रथमेन यज्ञान्वारम्भेण[4] द्वे कनिष्ठिके अङ्गुली न्यञ्चति[5] स्वाहा द्यावापृथिवीभ्यामिति द्वितीयेनानामिके स्वाहोरोरन्तरिक्षादिति तृतीयेन मध्यमे स्वाहा यज्ञं वातादारभ इति चतुर्थेन मुष्टी करोति[6] । संभारयजूंषि चैनमध्वर्युर्वाचयत्यथ[7] यजमानो वाचं यच्छति । नारायणपरायणस्तूष्णीमास्ते प्रागुदयान्नक्षत्राणां । यदि प्रमत्तो वाचं विसृजेद्वैष्णवीं व्याहृतीश्चानूच्य पुनर्वाचं यच्छेद्यदि मुष्टी विसृजेत्त्वमग्ने व्रतपा असीति ब्रूयाददीक्षिष्टायं ब्राह्मणो ऽसावमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्तामुष्याः पुत्रो ऽमुष्याः पौत्रो ऽमुष्या नप्तेति तं गोत्रपूर्वं त्रिरुपांशु देवेभ्य आवेदयति त्रिरुच्चैर्मनुष्येभ्यः । क्षत्रियवैश्यावप्यदीक्षिष्टायं ब्राह्मण इत्येव यथावर्णं वाथास्यैतानि व्रतानि भवन्ति । न स्त्रियमुपेयान्नानृतं वदेन्न

---

१ यो वान्यस्य यज्ञियवृक्षस्य॰ H ; यो वान्यस्य यज्ञीवृक्ष॰ AB ; योन्यस्य यज्ञवृक्ष॰ MLV ; यो वान्यस्य यज्ञवृ॰ T.

२ दीक्षितदण्डं AH ; दण्डं MLTV.

३ तं ins. AR only ; V गृह्य दंड॰ shows a rest of तं.

४ Thus all the Mss. ; ॰न्वारम्भेण the Vyākhyā (perhaps rightly).

५ Thus all the Mss. and the Vyākhyā (not न्यचति).

६ This is the reading as given by MLTV, only they insert तर्जन्यौ after चतुर्थेन ; B agrees with these four but omits तर्जन्यौ ; A differs from B only so far that it inserts after नामिके and मध्यमे the word द्वे. H and probably R *replace* अनामिके and मध्यमे by द्वे. H omits तर्जन्यौ.

७ अध्वर्युर् om. HRB.

मांसमश्नाति । न दतो धावते । न दर्शयति । न स्मयते । ऽपिगृह्य वा स्मयते । न निष्ठीवति । नोपर्यास्ते न शयीत । ॥१०॥

यदि शयीताधः प्राग्दक्षिणतो ऽग्निमुत्तानो ऽभिमुखो वा शयीतान्यं न क्रुध्येद्दीक्षितवादं[1] वदति लौकिकीं वाचं चनसितवतीं विचक्षणवतीं च । चनसितान्तं ब्राह्मणमाह विचक्षणान्तं राजन्यवैश्यौ । यद्यन्यथा वदति त्वमग्ने व्रतपा असीति जपति[2] । स्वप्स्यन्नाहवनीयमनेनाभिमन्त्रयते । सुप्त्वा प्रबुध्य त्वमग्ने व्रतपा असीति प्रतिपद्य विश्वे देवा अभि मामाववृत्रन्नित्यन्तं[3] जपत्यग्ने त्वꣳ सु जागृहीति वा स्वप्स्यन्नुन्दतीर्बलं धत्तेत्यभिवृष्यमाणो ऽबद्धं मन इत्यमेध्यं दृष्ट्वा । रात्रावग्निर्ज्योतिषाꣳ श्रेष्ठ इति मन्त्रं संनमति । दीक्षितविमितादन्यत्रैनं सूर्यो ऽभिनिम्रोचेदभ्युदियाद्वा यद्यभिनिम्रुक्तो वारुणीं जपति यदि वाभ्युदितः सौरीं । कृष्णाजिनं दण्डं च निधाय निशायां मूत्रपुरीषे कुर्याद्दिवा छायायां । मेक्ष्यन्वेदिमध्यात्कृष्णविषाणयेयं ते यज्ञिया तनूरिति लोष्टं तृणमन्यद्वा किञ्चिदपादायापो मुञ्चामीति मेहति । ततो ऽप आचामति । पृथिव्या संभवेत्यपात्तं प्रतिनिदधाति । ॥ ११ ॥

ब्राह्मणक्षत्रियवैश्या एवं[4] तु प्रपद्येरन्[5] तैरेव संभाषेत । यद्येनं शूद्रेण सह संवाद उपपद्येतैतेषामन्यतममित्थमाचक्षे-

---

१ ०न्य MLABV ; ०न्नं H , ०न्यः न क्रुध्येद् T.

२ जपति ATV and the Vyākhyā , जुहोति MLHB.

३ ०त्यतेन BMLTV ; ०त्यंते H ; त्येनं A ; ०त्यन्त the Vyākhyā.

४ एवं तु MLRHTRV ; येवतु A , एव only the Vyākhyā · B useless.

५ प्रतिपद्येरन् BMLATV ; प्रपद्ये० HR.

त्याह[1] । न स्त्रिया[2] संभाषेत । कृष्णाजिनान्न व्यवच्छिद्येत[3] दण्डाद्वान्यत्र कृष्णाजिनान्नासीत शयीत वा । यद्यन्यत्रासीत देवाञ्जनमगन्यज्ञ इत्येनदभिमन्त्रयते[4] । न पुरा सोमस्य क्रयादपोर्णोत । दीक्षितागारे विहरति । येन केनचित्सहास्ते ऽथो[5] वा न कंचनाभिवादयते प्रत्युत्तिष्ठति वा । सर्व एनमभिवादयन्ति[6] । न जुहोत्यन्यत्र सोमाङ्गेभ्यो । न ददाति । न पचति । कर्शयत्यात्मानं । यदास्य कृष्णं चक्षुषोर्नश्यत्यन्तश्च नैष्पुरीष्यं[7] यदङ्गमस्य मीयते तज्जुहोतीत्याकूर्य । दि परावर्तते विश्वे देवा अभि मामावर्वृत्रन्नित्यभ्यावर्तते । न प्रतीच्येन[8] द्वारेण निर्गच्छति । नैनं[9] स्पृशति । नास्य नाम गृह्णाति । नास्य पापं कीर्तयत्यथैतानि पत्न्याश्च मन्त्रवर्जं । सा स्वायतने संविशत्यथ नित्यवृत्तावधिवृक्षसूर्ये[10] पुरा[11] वा नक्षत्राणा-

१ उपपद्येत A only. all the other Mss. उत्प०.— ०तमभिध्यमा० H; ०तमभिसमर्थमा० MLATBV. The Vyākhya: इह (read इत्य) ब्रूहीति ब्रूयात्.

२ सह ins. MLTV. om. AHRB.

३ ०नान्न व्यवच्छिद्यते A; ०नान्नैवविच्छि० M; ०नान्नैववि० V, ०नान्नैववच्छि० L, नान्नैचवच्छि० H: ०न्नैवच्छि० B; नान्यैवविच्छि० T· ०न्नैवाच्छि० R. The Vyākhya विच्छिद्येत.

४ इत्येनदभिम० A; इत्येनाभिम० H: इत्येतेनाभिम० MLTV; ०नमभिम० RB.

५ थो not in A.

६ HR ins. न नाभिवादयति.

७ Thus A; नैष्करीष्यं H, नैष्टुरिष्य MLATV; नैरिष्यं B.

८ Thus all the Mss. R.

९ नैन MLAHTRB; नैवं V.

१० Thus B only; नित्यव्रतावधि० AR, नित्यव्यतावभि० H; नित्रतम् । अधि० ML; नित्यव्रतमधि० TV; cp. Hir. VII. 3 (page 599 of the edition).

११ पुरो MLRHTV: पुरा AB.

मुदयाद्व्रतप्रदो ऽग्नीज्ज्योतिष्मतः कुरुत[1] दीक्षित वाचं यच्छ पत्नि वाचं यच्छेत्युत्तरेणाहवनीयं तिष्ठन्संप्रेष्यत्यथ पूर्वेण द्वारेण निर्गत्य वत्सार्थे स्तनमेकमवशिष्येतरान्व्रतं[2] दोहयति। गार्हपत्ये ऽग्निहोत्रविधिना व्रतं श्रपयित्वा सुरक्षितं निदधात्युदितेषु नक्षत्रेषु याः पशूनामिति जपित्वा भूर्भुवः सुवरिति च व्रतं कृणुतेति त्रिर्वाचं विसृजत। एग्नीः स्थेति चतस्रो ऽङ्गुलीरुत्सृजति कनिष्ठिके अनामिके च। ताभिर्यथेष्टं चेष्टते। मध्यरात्रे व्रतयत्यपररात्र इत्येके। ॥ १२ ॥

अपरेणाहवनीयं व्रतमभ्याहृत्य व्रतप्रदाने निःषिच्य व्रत्य व्रतय व्रतमुपेहीति दीक्षिताय प्रयच्छति। दैवीं धियं मनामह इत्यप आचम्य ये देवा मनोजाता मनोयुज इति स्वायतने[3] पूर्वतो व्रतयति। नादीक्षिता दीक्षितं व्रतयन्तं पश्यन्ति। शिवाः पीता भवथेति व्रतयित्वाप आचामत्येवं पुरा नक्षत्राणामस्तमयाद्वाचं यमयति[4] व्रतं दोहयत्यस्तमितेषु नक्षत्रेषु वाचं विसृजते। मध्याह्ने व्रतयत्यपि वा पुरोदयादादित्यस्य वाचं यमयति व्रतं दोहयत्युदित आदित्ये वाचं विसृजते। अपराह्णे वा व्रतयति। याग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिः सा व्रतस्य। यवागू राजन्यस्य व्रतमामिक्षा वैश्यस्य पयो ब्राह्मणस्य। दीक्षास्वेतानि[5]। सर्वेषामुपसत्सु स्तनविभागो। यदि पयो न

१ कुरु HB.

२ व्रत LATV, प्रातर् MHB.

३ स्वायतने MLTV and the Vyākhyā; स्व आयतने AHB.

४ Emended; एव पुरा नक्षत्राणामस्तमयात्पुरा वाचं यमयति A, एवं पुन न पुरा नक्षत्राणामस्तमयाद्वाचं य० H; एव पुनरा नक्षत्राणामस्तमयात्पुरा वाचं य० MLTV; पुनरानक्षत्राणां स्तयाद्वाच य० B.

५ दीक्षास्वेतानि HB; दीक्षास्वेतासु MLATV.

स्याद्राजन्यव्रतेन व्रतयेद्यदि मन्येतोपदस्यामीत्योदनं धानाः सक्तून् घृतमित्यनुव्रतयेदित्याह[१] । नाव्रतो भवत्यग्निहोत्रस्याविच्छित्त्यै । पत्न्याश्च वाग्यतायाः प्रतिप्रस्थाता दक्षिणेन द्वारेण निर्गत्य व्रतं दोहयित्वा व्रतश्रपणागारे श्रपयित्वा सुरक्षितं निदधात्यथ पत्न्यै स्वायतने प्रयच्छति । साप्यत्रैव व्रतं तूष्णीं व्रतयति । यदहर्दीक्षयति[२] तस्य रात्रिं जागर्ति । दीक्षितस्य[३] यूपं छिनत्ति क्रीते वा राजनि । तद्व्याख्यातं । समानो यूप आहवनीयः स्वरुरग्नीषोमीयसवनीययोरनूबन्ध्यायाश्च । ॥ १३ ॥

द्वादशरात्रं भृतिं वन्वानः पूषा सन्येति सनीहारान् प्रहिणोति । चन्द्रमसीत्याद्यैर्यथारूपं हिरण्यादि प्रतिगृह्णीयाद्देवः सविता वसोर्वसुदावेतीतराण्यपरिमिता गाव[४] एकैकं वा[४] । तासां नष्टां च वायवे त्वेत्यनुदिशत्यप्सु मृतां वरुणाय त्वेति । संशीर्णां निरृत्यै त्वेत्यपि वावसन्नां । विद्युद्धतां मरुद्भ्यस्त्वेति । ज्वरहतां रुद्राय त्वेति । सेनाभिगृहीतामिन्द्राय[५] त्वा प्रसह्नेनत्यविज्ञातव्याधिमृतां यमाय त्वेति । यानुदिष्टास्वधिगता तामनुदिष्टायै देवताया[६] आलभेत दक्षिणाभिर्वा सह दद्याद्यदि

१ See the Brāhmaṇa quoted by Rudradatta on Āp. X. 16. 13.

२ यदहर्दीक्षयति BLATV ; यदहः क्षीयति M ; यदहर्दीक्षितस्स्या H.

३ दीक्षितस्य H : दीक्षामध्ये MLATV ; B useless.

४ ? गावयेकैकमितराणि H ; भाव एकैकं वा VMLT ; गा एतैक वा A ; भावयेतैकमितराणि तासा० B.

५ सेनाभिगृही० MLTV ; सेनागृही० AHR ; सेनार्वगृही० B.

६ यानुदिष्टास्वधिगता तामनुदिष्टायै देवताया A ; यानुदिष्टां स्वधिगतामादिष्टावै देवताया H and R (only ०तामनुदि०); यामनुदिष्टास्वधिगतां तामनुदिष्टदेवताया MLTV ; यानुदिष्टादधिगतानामनुदिष्टांतेये B.

त्वरया स्वयं प्रयात्यरणीष्वग्नीन् पृथगारोप्य सह प्रयाति । भद्रादभि श्रेय इति तं प्रयान्तमध्वर्युरनुमन्त्रयते । यजमानो ऽरणीं[1] दक्षिणेन परिश्रित्य व्रतयत्यापः सन्ति चेद्देवीराप[2] इत्यवगाह्याच्छिन्नं तन्तुं पृथिव्या अनुगेषमिति लोष्टं हस्तेन विसृज्या[3] कूलात्सेतुं कुर्वन्निवात्येति । पृथिव्या संभवेत्यतिशिष्टं निदधात्यथेमवस्य वर आ पृथिव्या इति प्रयास्यन्[4] देवयजनमध्यवस्यत्यारे शत्रून् कृणुहि सर्ववीर इत्युद्यन्तमादित्यमुपतिष्ठते ॥ १४ ॥

दीक्षान्ते सोमक्रयार्थमुपरवदेशे प्रतिप्रस्थाता राजानं नीत्वा रोहिते चर्मण्यानडुहे न्युप्य सोमविक्रयिन्सोमं शोधयेति संप्रेष्यति । कौत्सः शूद्रो वा विक्रयी तं[5] संशोध्योपास्ते । ऽथ प्रायणीयमदित्यै पयसि चरुं निर्वपति । प्रायणीयाद्योदवसानीयाया इष्टिपशुबन्धेष्वन्वाधानव्रतोपायनजागरणारण्याशनपत्नीसंनहनब्रह्मवरणानि न विद्यन्ते । कपालानां स्थाने स्थाली भवत्यननूयाजः प्रायणीयो भवत्यप्रयाज उदयनीय । आज्यग्रहणकाले जुह्वां चतुर्गृह्णाति चतुरुपभृति समानयनार्थमुदयनीये न जुह्वां गृह्णात्युपभृति चतुरनूयाजार्थं । षड्ढोत्रा प्रायणीयं

---

१ रणीं HRB ; रणि LV : रणिं MA.

२ ? अपस्सन्ति चेत् MLTV अपोजगाह्वास्सं A , अपभीतिगाह्व H ; अपोभीतिगाह्व R.

३ Thus TV ; विसृज्य MLAHRB.

४ प्रयास्यं (प्रास्यं) ins. AHRB, not MLTV. I doubt whether it belongs to the text.

५ विक्रय्येतनं A ; विकर्येण H , विक्रय्येन R ; विक्रयीत T ; विक्रयीत MLV ; विक्रयेन B. The reading विक्रय्येनं would equally be possible.

चरुमासादयति । व्याख्यातावाज्यभागावाज्येन देवतास्तस्त्रो यजति[१] । ॥ १५ ॥

पूर्वार्धे पथ्यां स्वस्तिमग्निं दक्षिणार्धे ऽपरार्धे सोममुत्तरार्धे सवितारं मध्ये ऽदितिं यजेददितिमिष्ट्वा मरुतो यद्ध वो दिव इति मारुतीमृचमन्वाह । शम्य्वन्तः प्रायणीयः संतिष्ठते । स्थालीं सक्षामकाषामेतन्मेक्षणमेतद्बर्हिरेतं वेदमुदयनीयाय सुरक्षितं निदधाति । ध्रौवमाज्यं धारयति । तस्माज्जुह्वामष्टौ चतुरो वा गृहीत्वा दर्भनाड्या हिरण्यं निष्टर्क्यं प्रग्रथ्य जुह्वा-मवदधातीयं ते शुक्र तनूरिति । तदाज्यं जूरसि धृता मनसेत्याहवनीये ऽन्वारब्धे यजमाने निरूढपशुबन्धलक्षणां[२] पिङ्गाक्षीमेकहायनीं[३] सोमक्रयणीमीक्षमाणो जुहोत्यपरं चतु-र्गृहीतं गृहीत्वा शुक्रमसीति हिरण्यं घृतादुद्धृत्य सुरक्षितं निदधाति चतुर्गृहीतं च । वैश्वदेवꣳ हविरित्याज्यमभिमन्त्र्य सूर्यस्य चक्षुरुरुहमिति सहिरण्येन पाणिनादित्यमुपतिष्ठते । ऽग्रेण शालां प्रत्यङ्मुखीमवस्थाप्य सोमक्रयणीं चिदसि मनासीति संशास्ति । मित्रस्त्वा पदि बध्नात्विति दक्षिणे पूर्वपादे बद्ध्वा पूषाध्वन इति यत्र सोमस्तत्र गमयति । दक्षिणेन पदा वस्व्यसि रुद्रासीत्याद्यैर्दक्षिणानि षट् पदान्यनुनिक्रामत्येकमिषे[४] विष्णुस्त्वान्वेत्विति तैर्निक्रम्यमाणेषु[४] यजमानो ऽनुवर्तयति[५] ।

१ यजति MLTV ; यजंतीति AHRB.

२ Thus (and cp. XII. 20, end) TV ; ०बन्ध० om. the other Mss.

३ पिंगलाक्षी० TVML.

४ ०निक्रामति TVB and the Vyākhyā ; ०निष्क्रा० (and निष्क्र०) the other Mss.

५ Thus HR, अनुवर्त्य the Vyākhyā ; ०नुसंवयते the other Mss.

सखाय इति सप्तमं पदमभिमन्त्रयते । ऽध्वर्युर्बृहस्पतिस्त्वा सुम्ने रण्वत्विति सप्तमं पदमभिगृह्णाति । तद्धिरण्यं तस्मिन्निधाय परिस्तीर्य पृथिव्यास्त्वा मूर्धन्नाजिघर्मीति तच्चतुर्गृहीतमभिजुहोति[1] । ॥ १६ ॥

हिरण्यमपोद्धृत्य परिलिखितꣳ रक्षः परिलिखिता अरातय इति स्फ्येन[2] दक्षिणं[2] पदं त्रिः परिलिखति यावद्धृतान्तक्रमथ स्फ्येनोपसंग्राहं पदं स्थाल्यामस्मे राय इति समोप्य[3] त्वे राय इति यजमानाय प्रयच्छति । तोते[4] राय इति यजमानः पत्न्यै । सं देवि देव्योर्वश्या पश्यस्वेति पत्नीं सोमक्रयण्यां समीक्षयति । त्वष्टीमती ते सपेयेति यजमानं पत्न्या । माहꣳ रायस्पोषेण वियोषमिति सोमक्रयणीं यजमानो ऽभिमन्त्रयते । तद्धिरण्यं प्रक्षाल्यानामिकायां[5] बध्नात्याप्यायनाभिषवांश्वदाभ्यार्थं च[6] । यतः पदगतं[7] तदुन्नभ्य पृथिवीमित्यद्भिरुपनिनीय सोमक्रयणी-

---

१ Thus MLTV ; ०गृहीतेनाभिजु० A ; ०गृहीतानभिजु० BH.

२ These two words om. H. Instead of दक्षिण the Vyākhyā : प्रदक्षिण. This probably is right, cp. Āp. X. 23. 2.

३ Thus MLTV and the Vyākhyā and A, where originally was a gape; राय इयावतनून सवति H. राय इति यावतूनं (?) सपवति ; यावत् सूत सवपति B. In A later on, is added on the margin : यावत्तोम संवपति. This points to a reading यावत् तूत संवपति, cp. Āp. l. c. 3.

४ Thus TV ; तेते the Vyākhyā ; त्वोते MHB : A (sec. h.) तो.. ; ततो L.

५ Thus BMLATV ; आवध्नाति HR.

६ Thus TV ; आप्यायनाभिषणंश्वदाभ्यर्थं च ML ; आप्यायनाभिष्वजश्वदाभ्य A ; आपायनाभिष्वाꣳदास्येषु चैतत् H ; आप्यायनाभिषवांश्वदाभ्येषु चैत० B.

७ Thus TV and Vy. ; यतदगतं ML : चैतत्पादपटसोन्नं भय H ; A. incomplete ; चैदं पादवगमान्न भय B.

मुत्सृजति । पत्नी पदं सुरचितं निदधात्यथ सूर्यस्य चक्षुरुरुहमित्यादित्यमुपतिष्ठते । सोमविक्रयिणं शूद्रस्ते[1] सोम इति पृच्छति । शूद्र[2] इतीतरः प्रत्याहैष ते गायत्रो भाग इत्येतैर्विचितं राजानमुपतिष्ठते । तच्चर्मण उत्तरार्धे क्षौमं वासो द्विगुणं प्राचीनदशमास्तीर्यांशुना[3] ते अंशुः पृच्यतामिति राजानं सहिरण्येन पाणिनाभिमृश्याभि त्यं देवं सवितारमित्यतिच्छन्दसर्चा स्तीर्णे क्षौमे मिमीते कनिष्ठाद्येकैकाङ्गुल्या साङ्गुष्ठया प्रसारितयांशून् समुपगृह्य[4] मिमीते । न कनिष्ठया पञ्चमं । कनिष्ठयैव दशमं । पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीमेवं द्विस्त्रिरपरिमितकृत्वो वा । ॥ १७ ॥

अवशिष्टं राजानं प्रजाभ्यस्त्वेत्युपसमूह्य वाससो ऽन्तान्समुच्चित्य द्विगुणेनोष्णीषेण प्राणाय त्वेति प्रदक्षिणमुपनह्यति । व्यानाय त्वेत्यनुशृन्थति[5] । प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्त्विति राजानं यजमानमवेक्षयत्येनं चर्मणि निदधाति । देव सूर्य सोमं क्रेष्याम इत्यादित्यमुपतिष्ठते सोमविक्रयी च राजानं चर्मण आदत्ते । सोमविक्रयिन् क्रय्यस्ते[6] सोमो राजेति सोमविक्रयिणं पृच्छति । क्रय्य[6] इतीतरः प्रत्याह । सोमं ते

१ शूद्रस्ते A and the Vyākhyā; राद्रस्ते MLHTRBV. — The Vyākhyā has . सोमा, pointing to सोमा३.

२ Thus the Vy. only; शूद्रमि॰ the Mss.

३ Thus H; प्राचीनोपरिदश॰ the other Mss.

४ उपसंगृह्य the Vyākhyā.

५ ॰नुश्रुंथति M; ॰नुशृन्थति L; ॰नुग्रंथति ABHR; ॰नुश्रिंथति T; ॰नुस्रंथति V.

६ कार्यस् and कार्य H (as Maitr. Samh.); कार्यस् (first time) also B.

क्रीणामीत्युक्त्वा गोर्महिमा महानिति[१] मन्वानः कलया ते क्रीणानि कुष्ठया ते क्रीणानि शफेन ते क्रीणानि पदा ते क्रीणानीति प्रत्येकं तिस्रः[२] पणते । स्वयं गोस्त्रीन्पादान्पणितान्[३] प्रतिषिध्य[४] गवा ते क्रीणानीति गामेव पणते । भूयो वा अतः[५] सोमो राजार्हतीत्या संख्यासंपदः[६] सोमविक्रयी प्रत्याह । भूय एवातः सोमो राजार्हतीत्यध्वर्युः प्रतिनन्द्य शुक्रं ते शुक्रेण क्रीणामीति हिरण्यं[७] पणते । विक्रय्येतदादत्ते[८] । तपसस्तनूरसीत्यजां । वाससा ते क्रीणानीति वासश्चतुर्भिः संख्यां संपादयति ॥ १८ ॥

द्वादशशतदक्षिणस्य क्रतोर्दशभिर्वा । तदा सप्त गावो हिरण्यं वासो ऽजा च दश भवन्ति । भूयसा वैकयैकविंशतिदक्षिणस्य तिसृभिः षष्टिदक्षिणस्योक्तसंख्यां संपाद्य संयत्ते[९] गोरसे चन्द्राणीति सोमविक्रयिणो हिरण्यं प्रत्यादाय यजमानाय प्रयच्छत्यस्मे त बन्धुरिति शुक्लामूर्णास्तुकां च । तया यजमानो दशापवित्रस्य

---

१ ? महांस्तु गोर्मह्निमह्निमेति HB, गोर्मह्निमेति A; गोर्मह्निमान ह्वानिति ML, गोर्मह्निमा मह्वानिति TV and the Vyākhyā.

२ त्रिस्त्रिः TVB. (preferable ? cp. Āp. X. 25. 8.)

३ पदान् AB, पादान् H, पदादीन् MLTV.

४ Thus TV; पणिता प्रतिषिध्य H; पणिता प्रतिधिच्य MB; पणिगीन्प्रद्दिष्यध्य L; प्रणीतान्प्रतिषिध्य A.

५ Emended; वातः MLATBV, त्र भूयोतातः H.

६ Thus BHTV, ०तीत्यासंख्यसुपदः A, ०तीत्याख्यां सपदः M; ०तीत्याख्यासंपद्दिः L.

७ ह्विरण्य H; सह्विरण्यं MLATBV.

८ Thus TV; विक्रय्यैंतदादत्ते A; विक्रयततदादत्ते H; क्रय्येवदादत्ते ML.

९ Thus T; संयत्ते MLAH and Vyākhyā; सम्यत्ते B, विक्रय्यतदादत्ते B.

नाभिं करोती।दमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्ना- मीति कृष्णामूर्णास्तुकामुपग्रन्थाति । सोमविक्रयिणि तम इति तया जलेन सोमविक्रयिणं ललाटे विध्यति । स्वान भ्राजाङ्घार इत्यान्तादनुवाकस्य सोमक्रयणाननुदिशति । मित्रो न एहि सुमित्रधा इति राजानं सोमविक्रयिणो ऽपादत्त इन्द्रस्योरु- माविशेति[1] यजमानस्य दक्षिण ऊरावासादयत्यैनं यजमानः प्रत्यपोर्णुते वयः सुपर्णा इत्यभ्युक्षितमुष्णीषं परिकर्मिणे प्रयच्छति । मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छाम्यवक्रो ऽविधुरो[2] भूयासमिति मैत्रावरुणाय दीक्षितदण्डं प्रयच्छति । रुद्रस्त्वावर्तय- त्विति सोमक्रयणीं प्रदक्षिणमावर्त्यान्यया गवा निष्क्रीय गोष्ठे यजमानस्योत्सृजत्यथ यजमानो राजानं हस्ताभ्यामुपादाय शीर्ष्णि कृत्वोदायुषेत्युत्तिष्ठति । प्रागीषं सोमवाहनमनो दक्षिणत उपस्थितं भवत्युर्वन्तरिक्षमन्विहीत्यभिप्रव्रजति । तस्य नीडे ऽध्वर्युरदित्याः सदो ऽसीति प्राचीनग्रीवं कृष्णाजिनमुत्तरलोमोपस्तृणात्यदित्याः सद आसीदेति कृष्णाजिने राजानमासादयत्यस्तभ्नाद्द्यामृषभ इत्येनमुपतिष्ठते । वनेषु व्यन्तरिक्षं ततानेति वाससा परितनोति । सौर्यर्चा पुरस्तात्कृष्णाजिनं प्रत्यानह्यत्युदुत्यं जातवेदसमित्यूर्ध्व- ग्रीवं बहिर्विशसनं । धूरसीति धुरावभिमृश्य वारुणमसीति शकटमाखिद्य वरुणस्त्वोत्तभ्नात्वित्युपस्तभ्य वरुणस्य स्कम्भनमसीति शम्यां प्रतिमुच्योस्रावेतं धूर्षाहावित्युन्नीयमानौ सोमवाहना- वन्वीक्षते[3] । ॥ १९ ॥

---

१ Thus MLHTVB ; ०दत्ते तमिंद्र० A.

२ Cp. X. 11 (page 110, line 15).

३ Thus AHTBV ; ०वाहनान्वीक्षते ML.

वरुणस्य स्कम्भनमसीति तयोर्दक्षिणं प्रथमं युनक्ति। वरुणस्य स्कम्भसर्जनमसीति शम्यामवगूह्य प्रत्यस्तो वरुणस्य पाश इति योक्त्रपाशं प्रत्यस्यत्येतयैवावृतोत्तरमनड्वाहं युनक्ति। पलाशशाखे बिभ्रदन्तरेणेषे सुब्रह्मण्य उपसर्पत्यध्वर्युरीषां दक्षिणामन्वारभ्य सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यत्यों भूः सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पाद इति सुब्रह्मण्यासु सर्वासु यजमानः सुब्रह्मण्यमन्वारभ्याहूताहूतां जपत्यध्वर्युयजमानौ प्रथमायां त्रिरुक्तायां प्रच्यवस्व भुवस्पत इति राजानं प्रच्यावयतः। सर्वे प्राञ्चो ऽभिभूयाथ[1] प्रदक्षिणं परिचरन्ति। श्येनो भूत्वा परापतेति राजानमध्वर्युरभिमन्त्रयते। यजमानस्य स्वस्त्ययन्यसीति दक्षिणेनोत्तरेण वाध्वर्युर्यजमानश्चाञ्जसा राजानमुपसंक्रामतो। ऽग्रेण शालां तिष्ठन् राज्ञे प्रोह्यमाणायोपदां मन्वानो[2] ऽजेनाग्नीषोमीयेण कर्णगृहीतेन नमो मित्रस्येति राजानं यजमानः प्रतीक्षते। स कृष्णसारङ्गो लोहितसारङ्गो वा निरूढपशुबन्धलक्षणः श्मश्रुलः[3] स्थूलः पीवा[4]। ॥ २० ॥

प्रोह्यमाणे राजन्यग्रेण शालामासन्दीमध्वर्यव उद्गृह्णन्त्यौदुम्बरी नाभिदघ्नपादारत्निमात्रशीर्षण्यानूच्या मौञ्जविवाना[5] भवत्यथाग्नीन्प्रज्वलयन्ति। तदनः सोमवाहनमग्रेण प्राग्वंशमुद-

---

१ Thus RMLTV; ०भिर्भूयाथ A; ०भयाथ B; विर्भूयाथ H; अभिप्रयाथ the Vyākhyā.

२ ? ०पदां मन्वानो MLTV; पादान्मन्वानो A; ०पादानान्वानानो H; ०पादान्वानो R; ०पादानान् मन्वानो B.

३ श्मश्रुल MLA; श्मश्रूणः HB; ०ळः TV.

४ Emended; पीवान् MLAHTV; पीलन् B.

५ Thus VT and the Vyākhyā; ०विधाना the other Mss.

गौषमवस्थाप्य वारुणमसीत्युत्तिवदति । वरुणस्त्वोत्तभ्नात्वित्युपस्तभ्नाति । दक्षिणमनड्वाहं विमुञ्चति । वारुणमसीति योक्त्रं परिकर्षति । वरुणस्य स्कम्भसर्जनमसीति शम्यां प्रवृहत्युन्मुक्तो वरुणस्य पाश इति योक्त्रपाशं विमुञ्चत्येवमुत्तरमनड्वाहं विमुञ्चत्यविमुक्तो वा स भवत्यथातिथ्यायां सप्तदश सामिधेन्य । इक्षुशलाके विधृती । कार्ष्मर्यमयान्परिधीनिध्म उपसंनह्यत्याश्ववालं प्रस्तरं बर्हिषि । देवस्य त्वा सवितुः प्रसव इति प्रतिपद्याग्नेरातिथ्यमसीत्येतैः प्रतिमन्त्रं जुष्टं निर्वपामीत्येतैः पञ्चकृत्वो । वैष्णवं नवकपालमातिथ्यं पत्न्यान्वारब्धो निर्वपति । हविष्कृता वाच विसृज्योत्तरमनड्वानं विमुञ्चति । वारुणमसीति यजमानो वासो ऽपादाय या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति नीडाद्राजानमादत्त । उर्वन्तरिक्षमन्विहीति प्रव्रजति । प्रतिप्रस्थातासन्दीमादाय पूर्वेण[1] द्वारेण[1] शालां प्रविश्याग्रेणाहवनीयं पर्याहृत्य[2] वरुणस्यर्तसदन्यसीति दक्षिणेनाहवनीयमासन्दीं निदधाति । ॥ २१ ॥

तस्यां कृष्णाजिनमदित्याः सदो ऽसीति तयास्तृणात्यदित्याः सद आसीदेति कृष्णाजिने राजानमासादयति । वरुणो ऽसि धृतव्रतो वारुणमसीति राजानमुपतिष्ठते । वारुणमसीति वाससा पर्यानह्यति[3] । तत्त्वा यामि ब्रह्मणा वन्दमान इति वारुण्यर्चा सर्वत्र राजानं परिचरत्यग्निं राजानं चान्तरेण मा संचारिष्टेति संप्रेष्यत्यत्राप्यस्मै पायसमन्नमर्घ्यं लाजानपूपांश्चोप-

---

१ पूर्वद्वारेण MLTV.

२ Thus AHB; परिहृत्य MLTV.

३ पर्यानह्यति BH; परियानह्यति A; परिणह्यति MLTV.

हरन्त्यथावहननादि[1] कर्म प्रतिपद्यते । श्रपणकाले सह पुरोडाशेन मदन्तीरधिश्रयति[2] । चतुर्गृहीतान्याज्यानि गृह्णाति । चतुर्होत्रातिथ्यमासादयत्यैन्द्र संभारयजूंषि व्याचष्टे । पशुवन्निर्मन्थ्येन[3] चरति[4] । वेदं निधाय सामिधेनीभ्यः संप्रेष्यति । पञ्च प्रयाजान्यजति । सर्वमौपभृतं चतुर्थे जुह्वां समानयत्युपांशु चरति । विष्णवे ऽनुब्रूहीति[5] विष्णुं यजेतीडान्तातिथ्या । ध्रौवाज्यमाप्याय्यान्तर्वेदि चमसं निधाय तस्मिंस्तानूनप्त्रमापतये त्वा गृह्णामीति पञ्चभिः प्रतिमन्त्रं पञ्चावत्तमभिगृह्णाति । तद्दक्षिणश्रोण्यां निधायानाधृष्टमसीति सर्व ऋत्विजो यजमानश्च समवमृशन्त्यनु मे दीक्षामिति यजमानं वाचयति । ॥ २२ ॥

यावन्त ऋत्विजस्तेषूपहवमिष्ट्वा तैरुपहूतः प्रजापतौ त्वा मनसि जुहोमीति यजमान एव समवमृष्टं त्रिरवजिघ्रति । तस्मिन्नपो निनीयोत्तरतः सिञ्चत्यथाग्नीन्मदन्त्यापा३[6] इत्यध्वर्युः पृच्छतीदं मदन्ति देवीरमृता ऋतावृध इत्याग्नीध्रः प्रत्याह । ताभिराद्रवेति संप्रेष्यति । तेनाहृताभिर्मदन्तीभिः पाणीन् प्रक्षाल्य तानूनप्त्रिणो हिरण्यपाणयो राजानं विस्रस्यांऽशुरंऽशुस्ते देव सोमाप्यायतामित्याप्याययन्त्याप्याय्य सखीनित्यध्वर्युर्यज-

---

१ Thus TV; ॰थाहनादि L; ॰थावमाननादि M; ॰थावाहनादिकं MB; ॰थवाहनादिकं H.

२ ॰श्रयति BMLTV; ॰श्रयति AHR.

३ Thus MLTV; ॰निमथ्येन AHRB.

४ Thus AHRB; चरन्ति MLTV.

५ ॰ब्रूहि LTV; ॰ब्रूहीति MAHRB.

६ The sign of pluti not in the Mss.

मानमपि वाचयति[1] । दक्षिणार्धे वेद्याः[2] प्रस्तरं निधायोत्तानान्दक्षिणान्पाणीन् कृत्वा सव्यान्नीच एष्टा रायः प्रेषे भगायेति निह्नुवते । यजमानमवान्तरदीक्षामुपनयत्यग्ने व्रतपते त्वमित्याहवनीयमुपस्थापयति । ॥ २३ ॥

यजमानो गाढतरं मेखलां समायच्छते गाढतरं मुष्टी[3] कुरुते । पत्नी तु योक्त्रं । तप्तव्रतो भवति । मदन्तीभिर्मार्जयते । पूर्वव्रतमुत्सृजति । या ते अग्ने रुद्रिया तनूरित्येतेनातो ऽधि व्रतयति । दैक्षमेतदहर्व्रतपरिमाणं भवत्यौपसदो ऽत ऊर्ध्वं व्रतसंकल्पस्तिस्र उपसदो भवन्ति षड् द्वादश चतुर्विंशतिर्वा । चतुःस्तनमेतां रात्रिं व्रतं भवति त्रिस्तनं मध्यमे ऽहनि द्विस्तनं रात्रावेकस्तनमुत्तमे ऽहोरात्र । आराग्रामवान्तरदीक्षामुपेयादिति ब्राह्मणोक्तानि[4] काम्यानि व्रतपरिमाणानि । तेषां यथाकाममथ प्रवर्ग्येण चरन्ति चरन्ति । ॥ २४ ॥

॥ इति श्रौतसूत्रे द्वादशः प्रश्नः ॥



---

१ ०पिवाच० the Mss.; read probably ०तिवाच०.
२ वेद्यः AB; वेद्यैः R; वेद्या LTV; विद्या M; missing in H.
३ Thus TVH and the Vyākhyā; मुष्टिं MLARB.
४ Cp. Ts. VI. 2. 3. 5.

प्रवर्ग्येण चरिष्यन्नमावास्यायां पौर्णमास्यां शुक्लपक्षे पुण्ये ऽहनि वा[१] संभाराहर्तुर्नमो[२] वाच इत्यनुवाकेन शान्तिं हुत्वा वैकङ्कतीं खादिरीं वैणवीं वा समिधमाधाय। युञ्जते मन इति चतुर्गृहीतं जुहोति। न दीक्षितस्य जुहुयात्। काण्टकीमेवैतया समिधमादध्यादेतां वा जपेद्देवस्य त्वेति खादिरीमौदुम्बरीं वैकङ्कतीं वैणवीं वा व्यायाममात्रीमरत्निमात्रीं वा कल्माषीमुभयतःक्ष्णूमभ्रिमादायाभ्रिरसि नारिरसीत्यभिमन्त्र्योत्थायोत्तिष्ठ ब्रह्मणस्पत इति ब्रह्माणमामन्त्रयते। ब्रह्मोपोत्तिष्ठत्युभावुपप्रयन्त्वित्युत्तरमर्धर्चं जपत। आददते[३] कृष्णाजिनं। यतः कुतश्चिन्मृदं खनित्वाहरन्ति तच्च प्रैतु ब्रह्मणस्पतिरित्यश्वप्रथमाः प्राञ्चो यन्त्यपि वान्वैते संभाराः परिश्रिते[४] भवन्ति। पुरस्तादाहवनीयान्मृत्खनः[५] पूर्वः पूर्व उत्तरोत्तरो[६] भवत्युत्तरेण मृत्खनं प्राचीनाग्रेषु दर्भेषु कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। देवी द्यावापृथिवी इति द्यावापृथिवी उपस्थाय ऋध्यासमद्येत्यभ्रिया मृत्खने प्रहृत्य मखस्य शिर इत्युपादाय[७] मखाय त्वेति हृत्वा मखस्य त्वा शीर्ष्णे इति कृष्णाजिने निवपत्येवं द्वितीयं तृतीयं च हृत्वा निवपति। तूष्णीं चतुर्थमपरि-

---

१ HBAMLR om. वा, given by TV; पुण्यनक्षत्रे वा the Vyākhyā.

२ ? संभारानाहर्तुं व० MLTV; संभाराहर्तुर्नमो AB; संभाराहर्तुं HR.

३ आददते MLATV, आददे B; आदत्ते HR. The Vyākhyā points to plural.

४ परिश्रिता MLATV; परिश्रितो HRB; परिश्रिते देशे the Vyākhyā.

५ Thus MLTAV; पुरस्तादाहवनीयं मृ० BH; ०नीय मृ० R.

६ Thus MLATV; उत्तरो H; पूर्वमुत्तरो RB.

७ Thus HTV; ०त्यादाय MAB; ०त्युपादाय L.

मितं[1] वा यावत्यो मृदः प्रवर्ग्यपात्रेभ्य[2] आप्ताः[2] स्युः । प्रायश्चित्ताय परिभिनष्टि शेषमेवमितरेषां संभाराणाम् ॥ १ ॥

इयत्यग्र आसीरिति वराहविहतमुपतिष्ठते । देवीर्वम्रीरिति वल्मीकवपामिन्द्रस्यौजो ऽसीति पूतिकानग्निजा[3] असि प्रजापते रेत इत्यजलोमसंसृष्टानि कृष्णाजिनलोमानि पृथगुपस्थाय प्रहृत्योपगृह्य[4] कृष्णाजिने निवपति । पञ्च संभारानायुर्धेहि[5] प्राणं धेहीत्यश्वेनावघ्राप्य मधु त्वा मधुला करोत्विति न्युप्तेषु संभारेष्वेकामजां पुंवत्सामभितो दोग्धृत्विजः सर्वे प्रवर्ग्यमाददत उत्तरेण विहारं परिश्रित उद्धत्यावोक्ष्य सिकता न्युप्य तान्निदधति[6] । गार्हपत्ये मदन्तीः पूर्वमधिश्रित्य[7] मधु त्वा मधुला करोत्विति ताभिरेनमुपसृजति[8] ॥ २ ॥

यान्यप्यन्यान्युखासंसर्जनान्यमेकलालानि[9,10] शर्करावाञ्जनपिष्टादीनि[11] दृढार्थं[11] तैश्चोपसृजत्यस्मिन्प्रवर्ग्ये यत्किञ्चोदककृत्यं

---

१ ०मित BAHR; मितं MLTV.

२ ०पात्रेभ्य आप्ता H; ०पात्रभ्यस्वाप्ताः MLATRB, ०भ्य चाप्ताः V.

३ पूतिका० MLAHTRV and the Vyākhyā; with ०ति० B first hand, ०ती० second hand.

४ ? ०पगृह्य MLATV; ०गूह्य H; ०गुह्य RB.

५ पञ्चसभारान् VHTR and the Vyākhyā; पञ्चसंभरान् A, पञ्चसभाराणाम् MB, पञ्चभ्रान् or पञ्चभान् L.

६ ०दधति VMLT and the Vyākhyā; ०दधाति AHRB.

७ मदन्तीः पूर्वमधिश्रिता MLTV, पयोधिश्रित्य AHRB.

८ ताभिरेनमुप० L, ताभिस्तिभिरेनमु० M, मदन्तीभिरेनमु० ABHR; ताभिंतिभिरेनमुप० T; ताभिर्मदन्तीभिरेनमुप० the Vyākhyā.

९ Thus MLTV; ये चाप्यन्ये उ० HR; येवाप्यन्य उ० A; योवाप्यन्ये B.

१० Thus LATV; ०सर्जनाम्मकपालानि M; ०सर्जना अम्मकपालानि HB.

११ Thus MLTV; ०पिष्टादि दृढार्थांस्तैश्चो० A; पिष्टार्थांस्तैश्चो० H.

तथाधिश्रित्य[1] मदन्तीभिः क्रियते । नैनं स्त्री प्रेक्षते न शूद्रो । न पात्राणि कुर्वन्नभिप्राण्यादपहाय मुखमनभिप्राणन्वेणुना करोति । न प्रवर्ग्यं चादित्यं चान्तरा व्यवेयाद्यत्र क्व च प्रवर्ग्ये प्रक्रान्त आदित्यो ऽस्तमियात्तद्विरम्य[2] तच्छिष्टं श्वो भूते समापयति । ता मृदः संप्रक्षुद्य[3] मखस्य शिरो ऽसीति पिण्डं कृत्वाङ्गुष्ठाभ्यां यथार्थाभ्यामङ्गुलीभ्यां[4] च यज्ञस्य पदे स्थ इति निगृह्य तत्त्रिधावच्छिद्य त्रीन्पिण्डान् कृत्वा गायत्रो ऽसीति प्रथमं कर्त्रे प्रयच्छति त्रैष्टुभो ऽसीति द्वितीयं जागतो ऽसीति तृतीयं च । गायत्रेण त्वा छन्दसा करोमीति त्रिभिश्छन्दोभिस्त्रीन्महावीरान्वायव्यप्रकारांस्त्र्युद्धीन्पञ्चोद्धीनपरिमितोद्धीन्वा[5] प्रादेशमात्रानूर्ध्वसानूनासेचनवदुपरिभागान्मध्ये संनतान् करोति । मखस्य रास्नासीत्युपबिलं रास्नां कृत्वादितिस्ते बिलं गृह्णात्विति वेणुपर्वणा बिलं करोति ॥ ३ ॥

यावता बिलेन दैवताय सौविष्टकृतायाग्निहोत्राय भक्षेभ्यो ऽलं मन्यते । तानुत्तरतः सिकतासु प्रतिष्ठाप्य सूर्यस्य हरसा श्रायेत्यातपेन[6] प्रत्येकमभितपति । मखो ऽसीत्यनुवीक्षते । तूष्णीमितराण्यासेचनवन्ति । हस्त्योष्ठ्यास्ये द्वे दोग्ध्रं मृदैतया

---

१ तथाधि॰ LHRB; तदाधि॰ MATV.

२ Thus MTV, तद्विरम्यतभिष्टं L; तद्वारम्तत्त्विष्ट A यमेव्युत्तुष्टिष्ट H.

३ Thus MLATV; संप्रक्ष....H. संप्रकुश्य(?) R, सप्रकाश्य B: these readings point to संप्रक्लिश्य.

४ Thus MLTV and the Vyākhya: ष्ठाभ्यां यदार्थाभ्यामङ्गुली॰ A; ॰ष्ठाभ्यां यथार्थाभ्यामिष्टतरांगुली॰ HR; यथार्थाभ्यामितराङ्गुलिश्च B.

५ महावीरान् given by HR; it cannot be missed.

६ ॰तपे ML and Vyākhya; ॰तपि TV; ॰तपेन the other Mss.

करोति यथा स्रुगदण्डेवं[1] वर्षीय आध्वर्यवं दोग्ध्रं प्रतिप्रस्थाना-दाज्यस्थालीं दधिस्थालीं[2] द्वे परिमण्डले रौहिणकपाले । यदि क्रतुः साग्निचित्यो घर्मेष्टकां कुलायिनीं च । श्लिष्टया मृदा प्रलिप्य तान्युपवातयत्युपवातेषु श्लक्ष्णीकरणैः श्लक्ष्णीकुर्वन्ति । गार्हपत्ये वृषाश्वशकृदादीन्प्रदीप्य वृष्णो अश्वस्य निष्पदसीति प्रथमं महावीरं शफाभ्यां गृहीत्वान्तर्बहिर्धूपयत्येवमितरौ । तूष्णी-मितराण्यतः प्रभृति शफाभ्यामेव[3] महावीरानादद्यात् । ॥ ४ ॥

गार्हपत्यस्य पुरस्तादवटं खनति । तस्मिन् लोहितपचना-संभारानवकीर्य[4] देव पुरश्चर सघ्यासं त्वेति महावीरान् क्रमेण प्राचो वोदीचो वोपावहरति । पुरस्ताद्दोग्ध्रे ऽपरस्ताद्रौहिणकपाले[5] चाज्यदधिस्थाल्या उपरिष्टान्निधाय[6] तैः पचनैः संप्रच्छाद्य मृदावलिम्पति । प्रतिदिशमुपोषणाय चतुरङ्गुलं विशिनष्टि । गार्हपत्ये मुञ्जप्रलवानादीप्यार्चिषे त्वेत्याद्यैः प्रतिमन्त्रं प्रतिदिश-मुपोषत्यपि वा सर्वैः सर्वतस्तान्यहनि रात्रौ वा पच्यन्ते । यदि सायमुपोषति प्रातरुपैति यदि प्रातः सायमंभोमं महिनेति मैत्रीभ्यां पच्यमानान्युपचरति । पक्वेषु सिद्ध्यै त्वेति धृष्टी आदाय ताभ्यामङ्गारानपोहति । देवस्त्वा सवितोद्वपत्विति प्रथमं महावीरं

---

१ Thus TV (and cp. Āp. XV. 3. 10); स्रुग्दंडेवं MLAB; स्रदण्डेवं HR.

२ दधिस्थालीं om. L.

३ Thus MLTV; एवं AHB.

४ Thus the Vyākhya; ०पचनात्संभारा० the Mss., only B: ०पचनात्सं०.

५ Read ०दोग्ध्रे अपर० ?

६ Thus MLTV (०स्थाल्या must be dual); चाज्यस्थाल्योपरि० HB; चाज्यदधिस्थाल्यायरिष्टा० A; cp. khaṇḍa 6.

शफाभ्यामुद्वासयत्यपद्यमानः पृथिव्यामाशा दिश आपृणेत्युत्तरतः सिकतासु प्रतिष्ठापयत्येवमितरौ । तूष्णीमितराणि । सूर्यस्य त्वा चक्षुषान्वीक्ष इत्यनुवीक्षते । ॥ ५ ॥

ब्राह्मणस्यैतानीदमहममुमामुष्यायणं ब्रह्मवर्चसेन पर्यूहामीति सिकताभिः प्रदक्षिणं पर्यूहति । विशा पर्यूहामीति संनमति राजन्यस्य । पशुभिरिति वैश्यस्यैकैकं महावीरं शफाभ्यां गृहीत्वा सते[1] ऽवधाय गायत्रेण त्वा छन्दसाच्छृणद्मीत्येतैस्त्रिभिः प्रतिमन्त्रं प्रभृतेनाजापयसाच्छृणत्त्यन्तरतो बाह्यतश्च । स्वाच्छृणं गोपयसाभिविष्यन्दयति । तूष्णीं दोग्ध्रे रौहिणकपाले चाज्यदधिस्थाल्यौ च । यदि विधुः प्रदरो वा जायते शिष्टेभ्यः किंचिदादाय चूर्णयित्वाजापयसि प्रकीर्य तेनात्र प्रलिप्य विधुं दद्राणं यदृते चिदभिश्रिष इति द्वाभ्यामुपोषयति । यद्यु वै सर्वश एव भिद्यते तानि कपालानि पिष्ट्वा शिष्टया मृदा संसृज्य तथा कृत्वोपोषति[2] । प्रवर्ग्यपात्राणि कृष्णाजिनेनोपनह्योत्तरेण शालां देव पुरश्चर सघ्यासं त्वेति शिक्य आसज्य तद्यथा पत्नी न पश्यत्या प्रयोगात्तथा[3] निदधाति । शं नो वात इत्युत्तरां शान्तिमुपयन्ति । ॥ ६ ॥

प्रचरणकाले प्रवर्ग्येण प्रचर्योपसदा प्रचरन्त्युपसदा[4] वा प्रचर्य प्रवर्ग्येण । तेन चरिष्यन्तः संवृण्वन्ति द्वाराणि स्त्रियो यथा न पश्यन्ति परिश्रयन्ति पत्नीसंचारान्[5] । पुरस्तादध्वर्युः पश्चाद्धोतो-

---

१ सते MLTV ; सिकते ARB ; थिक्ते H.

२ ०पोषति MLHTVB ; ०पोषयति A. (as above !)

३ Thus AB ; प्रयोगात्तदा HR ; प्रयोगांत तथा MLTV.

४ प्रचरन्ति MLTV and the Vyākhyā ; प्रचरति AHR.

५ पंत्नी सं० MLTV.

पविशति दक्षिणतःपश्चात्प्रस्तोता दक्षिणतो ब्रह्मा यजमानश्चोत्तरतः प्रतिप्रस्थाताग्नीध्रश्चाप उपस्पृश्य मदन्तीर्नमो वाच इति शान्तिं जपित्वा पुरस्ताद्गार्हपत्यस्य कुशप्रस्तवान्संस्तीर्य तेषु देव पुरश्चर सघ्यासं त्वेति प्रथमं महावीरमुपावहरत्येवमितरौ तूष्णीमितराण्येवैव प्रवर्ग्यार्थान्संभारान्संसादयति । सोमासन्दीप्रकारा वर्षीयसी[1] सम्राडासन्दी ह्रसीयसी वा । चतस्रः स्रुचस्तासु द्वे रौहिणहवन्यावनिम्ने[2] । इतरे द्वे सनिम्ने । तयोर्वर्षीयस्युपयमनी प्रोक्षणीधानी ह्रसीयसी । द्वौ स्रुवौ द्वे[3] धृष्टी च । महावीरसंमितौ पार्श्वतश्छिन्नावन्यतरतः संतृष्णौ संदंशौ शफावित्याचक्षते । स्थूलशङ्कुर्घर्मदुघार्थस्त्रयो[4] ऽस्थूलशङ्कवो वत्साद्यर्था अमी अवत्सशङ्कुरिति पदंदिनां[5] षट्ककलाश्नैतान्यौदुम्बराणि । वैकङ्कतौ समित्परिधयो वैकङ्कतास्त्रयोदशेन्धनानि[6] पालाशानि वैणवानि वैकङ्कतानि खादिराण्यर्काण्यौदुम्बराणि शमीमयानि वा[7] । शुक्लकृष्णरोमाणि कार्ष्णाजिनानि धवित्राणि त्रीणि बाहुप्रमाणदण्डानि । वैणवा औदुम्बरा वा दण्डाः । शतमानं रजतं सुवर्णं च । साग्रश्छिन्ना-

---

१ ०सद्रिप्रकारावर्षीयसि ML and VT (but with ०सी at the end); read perhaps सोमोसन्दोप्रकाराद्; ०संद्रिप्राकारा वर्षयसि A : ०सद्रौप्राप्राकारा वार्षीयसी H ; ०प्रा० also R.

२ Thus B ; ०निम्न MLATRV , ०निम्नेयितरो द्वे H.

३ द्वे only in TV and the Vyākhyā.

४ Thus ATVB ; ०स्त्रयः ML ; in HRB the words स्थूल० . . यार्थास् are missing ; then they have त्रयस्थूलशङ्कवोवत्सशंकुषट् etc.

५ Meaning ?

६ Thus MLTV ; ०शेध्मानि AHRB.

७ शमीमयानि वा शुक्ल० LATV ; ०मयानि मौञ्जानि शुक्ल० M : ०मयानि मौञ्जानि वा शुक्ल० HRB.

शश्च द्वौ वेदावभिधान्यौ द्वे निदाने त्रीणि विशाखदामान्येतानि मौञ्जान्य।फलीकृतानि रौहिणयोः पिष्टानि । प्रभूता मुञ्जप्रलवाः । खरेभ्यः सिकता । मौञ्जे पवित्रे दर्भमये वोत्तरेण गार्हपत्यं स्फ्येनोद्धृत्यावोक्ष्य सिकता न्युप्य प्रादेशमात्रं[1] परिमण्डलं प्रवृञ्जनीयमुत्तरेणाहवनीयं तथोद्वासनीयमुत्तरेण शालां चतुरश्रं निष्यन्दवन्तमुच्छिष्टखरमेवं त्रीन् खरान्कृत्वा शिष्टाः सिकता उत्तरार्धे[2] निधेयाः[2] स्रुर।य प्रोक्षणीः[3] संस्कृत्य ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुह्यग्नीद्रौहिणौ पुरोडाशावधिश्रय प्रतिप्रस्थातः प्रवर्ग्यं[4] विहर प्रस्तोतः सामानि गायेति ब्रह्मादीन्संप्रेष्यति । ॥ ७ ॥

अथ ब्रह्मा यजुर्युक्तमित्युपांश्वनुद्रुत्योमिन्द्रवन्तः प्रचरतेत्युच्चैः प्रसौत्य।ध्वर्युः प्रसूतो मदन्तीभिर्यमाय त्वा मखाय त्वेति सर्वान्प्रवर्ग्यसंभारांस्त्रिस्त्रिः प्रोक्षति यथा परान्संभारानभिप्राप्नुया।त्प्रोक्षितानि[5] व्यायातयति । प्रेषितो होता ब्रह्म जज्ञानमिति प्रतिपद्याभिष्टुया।दृगावानं प्रणुत्य व्यवस्ये।दाग्नीध्रो रौहिणौ पुरोडाशावधिश्रयति । प्रतिप्रस्थाता दर्विहोमवदाज्यं संस्कृत्य दध्यधिश्रयत्य।ग्रेणाहवनीयं सम्राडासन्दीं पर्याहृत्य राजासन्द्याः

---

१ All the Mss. om. the anusvāra; by the Vyākhyā it is given.

२ उत्तरार्धे निधेया A; उत्तरार्धा निधया ML; उत्तरार्धा स्रु॰ HB; उत्तरार्धा निधिया TV.

३ प्रोक्षणीं all exc. B which has ॰णी.

४ प्रवर्ग्यं विहर MBH and the Vyākhyā; without प्रवर्ग्यं LATV.

५ Thus (cp. Baudh. IX. 6 : 273 8) BMH; यथा सर्वां A; यथा सर्वतः LTV.

पुरस्तादुत्तरतो वा निदधाति। तस्यां प्राग्ग्रीवं कृष्णाजिनमूर्ध्वलोमास्तृणाति[1]। तस्मिंस्तथोत्तरौ महावीरावुपशयौ निदधाति। तावप्रचरणीयौ। स्थूलशङ्कुं[2] वत्सशङ्कून्विशाखदामानीत्यादायाग्रेण होतारं दक्षिणातिक्रम्य दक्षिणया द्वारोपहृत्य दक्षिणेन दक्षिणं द्वारं होतुः समीचायां मातुः शङ्कुं[3] निहन्ति। पूर्वस्या एव द्वार्याया दक्षिणतो घर्मदुहो वत्सस्यापरस्या एव दक्षिणतोऽजाया अभ्यन्तरमुत्तरतो बर्करस्य शङ्कुं निहत्य तत्र विशाखदामानि व्यायातयत्योद्वासनादत्र काले बद्ध्वा दुहन्ति। खरांस्त्रीन्व्युप्योत्तरेणाहवनीयं शृतं दधि शकलानुपसादयति वैकङ्कतीं च समिधम्। ॥ ८ ॥

अथाध्वर्युर्देव पुरश्चर सध्यासं त्वेति प्रचरणीयं महावीरं संदंशाभ्यां परिगृह्य सव्ये पाणौ कृत्वा तमुपरिष्टात्साग्रेण परिमार्ष्ट्याज्यस्थाल्याः[4] स्रुवेण सकृदुपहतेनाज्येन गार्हपत्येऽनवानं संततं प्राणाय स्वाहेति सप्त प्राणाहुतीर्जुहोत्येकादश वाथैनं महावीरं देवस्त्वा सविता मध्वानक्तित्युत्तमस्य[5] शेषेणाज्येन स्रुवेणानक्ति। पृथिवीं तपसस्त्रायस्वेत्येतस्मिन् काले प्रतिप्रस्थाता राजतं शतमानं प्रवृञ्जनीये खर उपगूहति। मुञ्जप्रलवानादायार्चिरसीति दक्षिणेषामग्राणि[6] गार्हपत्य आदीपयति शोचिरसीति तेषामग्रैरुत्तरेषां मूलानि ज्योतिरसीति तेषां

---

१ Thus MLA; उपस्तृणाति HTVB.

२ ०शंकुं ML; शङ्कून् HB; शंकूं ATV.

३ शङ्कून्निहन्ति MAB; शङ्कूनिहन्ति LHTV.

४ ०स्थाल्या LAHTV; स्थाल्यां MRB.

५ Thus BMLHTV; ०त्तममस्य A.

६ दक्षिणेषां instead of तेषां VT.

मूलैर्दक्षिणैषां मूलानि तपो ऽसीति तेषां मूलैरुत्तरैषामग्राणि । तान्यतिषक्तानुपरि श्रतमाने निधाय तेषु सꣳसीदस्वेति महावीरं सादयत्यञ्जन्ति यमित्येनमाज्येनाभिपूरयत्यनाधृष्या पुरस्तादित्येतैर्यथालिङ्गं महावीरमसंस्पृशन्यजमानः प्रादेशेन दिशो व्यवस्थापयति । मनोरश्वासि भूरिपुत्रेत्युत्तरतः पृथिवीमभिमृशति । सिद्ध्यै त्वेति धृष्टी आदायाध्वर्युः[1] प्रतिप्रस्थाता च तपो ष्वग्न इति गार्हपत्यादुदीचो ऽङ्गारान्निरूह्य चितः स्थ परिचित इत्येनं प्रदक्षिणं न्युप्य त्रयोदश परिधीन्परिधत्तः[2] । ॥ ९ ॥

मा असीति प्राञ्चावध्वर्युः परिदधाति । प्रमा असीत्युदञ्चौ प्रतिप्रस्थातैवं द्वौ द्वौ पूर्वेण पूर्वेण[3] मन्त्रेणाध्वर्युरुत्तरेणोत्तरेण प्रतिप्रस्थातान्तरिक्षस्यान्तर्धिरसीत्यध्वर्युरेव त्रयोदशं दक्षिणतः परिदधाति । दिवं तपसस्त्रायस्वेत्युपरिष्टात्सौवर्णेन रुक्मेनापिधायाभिर्गीर्भिरिति तिसृभिरुपतिष्ठते । गायत्रमसीत्येतैरेकैकं धवित्राण्यादत्ते । पश्चात्प्राङ् जान्वाच्य तैरेनं मधु मध्विति त्रिरूर्ध्वमभिधूनोति[4] । तेषां प्रथमं स्वयं गृहीत्वा मध्यमं प्रतिप्रस्थात्रे प्रयच्छतीतरदाग्नीध्राय । मधु[5] मध्वित्याग्नीध्राग्रा[6] ऊर्ध्वं धून्वन्तस्त्रिः[7] प्रदक्षिणं महावीरं परियन्ति । प्रणवेन संराधयन्ति । यथावकाशमुपविश्य महावीरं समञ्जन्तो वाग्यता

१ आदायाध्वर्युः HMB (LTV corrupt); आदत्तोध्वर्युः A.
२ Thus LV; परिधत्त M; परिधत्तेः A, परिदद्दाति H, परिदधाति B.
३ पूर्वेण once the Mss.
४ Thus MLATV; ०धुनोति HB.
५ मधु twice H only.
६ ०ग्नीध्राग्र LTV; ०ग्नीध्राग्रे M; ०ग्नीध्राग्रमूर्ध्वं AHB.
७ ०धू० BMLATV, ०धु० H.

इन्धाना आसते । प्रज्वलिते सुवर्णं शतमानमपादत्ते । याभिर्वर्तिकां ग्रसितामसुञ्चतमिति होतुरभिज्ञाय दश प्राचीर्दश भासि दक्षिणेत्यनुवाकेनाध्वर्युर्महावीरमभिमन्त्रयते । ऽप्नस्वतीमश्विना वाचमस्मे इत्यभिज्ञाय धवित्राण्युपोद्यच्छन्ते[1] । ऽरूरुचदुषसः पृश्निरग्रिय इत्यभिज्ञाय रुचितो घर्म इत्युक्त्वा यथेतं त्रिः पुनः प्रतिपरियन्ति । धवित्राणि प्रत्यादायाध्वर्युरग्रेणाहवनीयं पर्याहृत्य स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः सम्राडासन्द्यां सादयति[2] स्वाहा त्वा नक्षत्रेभ्य इति सायं । यथास्थानमवस्थायापश्यं गोपामिति सर्व ऋत्विजो यजमानश्चाधीयन्तो महावीरमवेक्षन्ते । त्वमग्ने गृहपतिरित्यध्वर्युर्गार्हपत्यमुपतिष्ठते । ऽन्तर्हिते प्रतिप्रस्थाता त्वष्टीमती ते सपेयेति पत्नीं वाचयत्यग्नीद्रौहिणौ पुरोडाशावासादयेति संप्रेष्यति । ॥ १० ॥

अनिम्लयोराग्नीध्र उपस्तीर्णाभिघारितौ रौहिणौ पुरोडाशौ पूर्वाह्णे प्राच्यौ स्रुचौ[3] दक्षिणोत्तरपरिधिसंधौ[4] अन्वासादयति[4] प्रतीच्यावपराह्ण इत्येके । देवस्य त्वेति रशनामादायादित्यै रास्नासीति रशनामभिमन्त्र्य पूर्वद्वारोपनिष्क्रम्याध्वर्युरिड एह्यदित एहि सरस्वत्येहीति घर्मदुघमाह्वयति[5] त्रिरुपांश्वसावेह्यसावेहीति त्रिरुच्चैर्यथानाम । प्रत्येत्याभिधानीं निदाने दोग्ध्रे चादायाध्वर्युराग्नीध्रः प्रतिप्रस्थाता च दक्षिणया द्वारोप-

---

१ Thus AHTVB and the Vyākhyā ; ०त्राण्युपोद्यच्छंते ML.

२ Thus BTVHR and the Vyākhyā ; ०यते MLA.

३ स्रुचौ LBV; स्रुचोर् HA; om. by M, प्राच्यौ om. T; cp. Baudh. IX. 6: 273. 21.

४ ०परिधिसंध्यन्वा० ML; ०परिधिसंधि अन्वा० HATBV.

५ ०द्रुहस० H only.

निर्हृत्यादित्या उष्णीषमसीति घर्मदुघमध्वर्युरभिधान्या कण्ठे[1] बध्नाति वायुरस्यैड[2] इति वत्सं । पूषा त्वोपावसृजत्विति वत्समुपावसृजति । यस्ते स्तनः शशय इत्यध्वर्युर्घर्मदुघमभिमन्त्र्योस्र घर्मꣳ शिꣳषेति वत्समादाय नियुज्य बृहस्पतिस्त्वोपसीदत्वित्युपसीदति । दानवः स्थ पेरव इति स्तनान्संमृशत्या दशभिर्विवस्वत इत्यभिज्ञाय स्तनानश्विभ्यां[3] पिन्वस्वेत्येतैर्वर्षीयसि दोग्ध्रे पिन्वयत्येतस्मिन् काले प्रतिप्रस्थाता तूष्णीमजां ह्रसीयस्याग्नीध्रे पयसी प्रदाय यथेतं प्रत्येत्य गायत्रो ऽसि त्रैष्टुभो ऽसीति शफावध्वर्युरादत्ते जागतमसीति प्रतिप्रस्थातोपयमनमुपद्रव पयसा गोधुगित्यभिज्ञायाग्नीध्रः प्रतिपद्यते । सहोर्जो भागेनोप मेहीत्याह्रियमाणं पयो ऽध्वर्युः प्रतीक्षते । ॥ ११ ॥

इन्द्राश्विनेति महावीरे गोपय आनयति । स्वाहा त्वा सूर्यस्य रश्मय इत्युद्यन्तमूष्माणमुपतिष्ठते । मधु हविरसीत्यजापयः प्रतिप्रस्थाता । सूर्यस्य तपस्तपेत्युद्यन्तमूष्माणमुपतिष्ठते । द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्यध्वर्युः संदंशनेन महावीरं परिगृह्णाती । वेदेन प्रसृज्यान्तरिक्षेण त्वोपयच्छामीत्युपयमनेन प्रतिप्रस्थातोपयच्छति । देवानां त्वेत्यादायोत्तिष्ठति[4] । तेजो ऽसि तेजो ऽनुप्रेहीति प्रागाहरत्यग्निर्मा पृथिव्याः पातु वायुरन्तरिक्षात्सूर्यो दिव[5] इति[5] दिविस्पृङ्[5] मा मा हिꣳसीरिति

१ Thus MLTVH and the Vyākhyā; कर्णे AB.

२ Thus T and the Vyākhyā; ०स्यैड the other Mss.

३ स्तनान् depends on पिन्वयति.

४ Thus TV; ०ष्ठते MLAHB.

५ Read probably: दिवो दिविस्पृङ्; but the Vyākhyā दिव इति हरन् दिविस्पृ०.

जपित्वा समुद्राय त्वा वाताय स्वाहेति पञ्च वातनामानि गच्छन्नेवानवानं व्याचष्टे सप्त वांपान्याग्नये त्वा वसुमते स्वाहेति पञ्चोत्तराण्यवशिष्टानि[१] । शिष्टा विकल्पार्थमेतस्मिन्[१] काले प्रतिप्रस्थाता दक्षिणमहर्ज्योतिः केतुनेति प्रातर्जुहोति रात्रिरिति सायमपरेणाहवनीयं दक्षिणातिक्रम्य विश्वा आशा दक्षिणसदिति ब्रह्माणमभिसमीक्ष्य विश्वान्देवानयाडिहेति पश्चादासीनं होतारं स्वाहाकृतस्य घर्मस्येति घर्ममभिसमीक्ष्याश्राव्य प्रत्याश्राविते घर्मस्य यजेति संप्रेष्यत्युत्तमया वाचा प्रचरत्यश्विना[२] घर्मं पातमिति वषट्कृते जुहोति स्वाहेन्द्रावडित्यनुवषट्कृते । घर्ममपातमश्विनेति हुतं घर्ममुपतिष्ठते । नमो दिवे नमः पृथिव्या इत्यनुवाकशेषेणोपर्याहवनीये धार्यमाणं[३] महावीरं यजमान उपतिष्ठते । तं[४] प्रतिप्रस्थाता शृतदध्नाभिपूरयति । ॥ १२ ॥

इषे पीपिहीहि विचरन्तं यजमानो ऽनुमन्त्रयते मह्यमित्युपांशु वांथिनं[५] दिशो ऽनु प्रहावयति[६] त्विष्यै त्वेति पूर्वस्यां द्युम्नाय त्वेति दक्षिणस्यामिन्द्रियाय[७] त्वेति प्रतीच्यां भूत्यै

---

१ ०वशिष्टानि शिष्टा (ष्टां) विकल्पार्थमे० MLA, ०वशिष्टा विकल्पार्था एत० H; ०वशिष्टानिशिष्टां विकल्पार्थमे० TV, ०वशिष्टावशिष्टविकल्पार्था एत० B.

२ प्रचरन्त्य० MLA, प्रचरत्य० THBV.

३ Thus emended in accordance with the Vyākhyā; धारयमाणं all the Mss.

४ तं om. H only.

५ Thus MLTAV; H has: ०त्युपांश्वावाञ्चैष्ठाय पीपिहीत्युच्चैरन्तःपरिधि दिशो नु०, similarly B; cp. Baudh. IX. 10: 280. 4.

६ ०हावयति ATV; ०हापयति H and Vyākhyā; ०हादयति L; ०ह्लादयति M; ०वाहयति B.

७ इन्द्रियाय TV; उन्द्राय MLAHB.

लेत्युदीच्यां । प्रत्याक्रम्योपयमने महावीरपयःशेषमानीयोद्वासनीये खरे राजतं शतमानं निधाय धर्मासीति तस्मिन्महावीरं निदधाति नेत्त्वा वात स्कन्दयादित्यभिचरतो[1] ऽप उपस्पृश्योदुम्बरशकलान्[2] षडादाय तेषामेकैकेनोपयमनद्रव्यस्योपघातेन पूष्णे शरसे स्वाहेति पूर्वार्ध, आहवनीयस्य तत्प्रश्चोत्यैनमन्तराञ्जनं[3] मध्यमे[4] परिधौ संस्पृष्टं सादयत्येवं[5] द्वितीयशकलेन ग्रावभ्यः स्वाहेति प्रश्चोतयत्येनं पूर्ववत्सादयति । तथा तृतीयेन मध्यतः प्रतिरेभ्यः स्वाहेति चतुर्थेन द्यावापृथिवीभ्याꣳ स्वाहेत्यपरतो । ऽथैनमूर्ध्वाञ्जनं भस्मान्त उपगूहत्येवं पञ्चमेन दक्षिणार्धे पितृभ्यो घर्मपेभ्यः स्वाहेत्येनं बहिरञ्जनं दक्षिणे[6] परिधौ संस्पृष्टं सादयत्यथ षष्ठं सर्वेषु लेपेषु समज्योपयमनादन्तत[7] उपहत्योत्तरार्धे[8] रुद्राय रुद्रहोत्रे स्वाहेत्यथैनमुत्तरेण शालाया अतीकाशेनानन्वीक्षमाणो[9] ऽमुना सह निरर्थं गच्छेति निरस्याप[10] उपस्पृश्यातिशिष्टाञ्छकलानद्भिः[11]

---

१ इत्यभिचरतो MLTAVB ; इति यद्यभिचरेतोपस्पृश्य H.

२ ०दुम्बरशकलान् MLTV ; ०दुम्बरान् शकलान् AB ; ०दुम्बराः शकलाः H.

३ ०न्तराञ्जनं H ; ०न्तर जन MLTV and Vyākhyā , ०न्तरंजन AB ; cp. Baudh. IX. 11 : 280. 16.

४ Thus the Vyākhyā ; मध्ये AB ; मध्य MLTV.

५ सादयति MLTABV and the Vyākhyā ; आसा० H.

६ Thus MAHR and the Vyākhyā ; दक्षिण TLBV.

७ Thus HB ; समज्य MLTAV and the Vyākhyā.

८ Thus the Vyākhyā ; ०नादंतपहत्योत्तरार्धे A , ०नांतत उपगूहत्युत्तरार्धे HB , ०नादतत उत्तरार्धे TV ; ०नादन्ततमुत्तरार्धे L ; ०नादन्ततमुपगूहति । उत्तरार्धे M.

९ अतीकाशे० HRB ; अति० MLATV and the Vyākhyā.

१० निरस्याप MLATV and the Vyākhyā ; निरस्यत्यप HRB.

११ ०शिष्टांच्छ० all the Mss.

संस्पृश्याहवनीये ऽनुप्रहरति । प्रतिप्रस्थाता पूर्ववदुत्तरं रौहिणं जुहोत्यपीपरो मा रात्र्या अह्नो मा पाहीत्यध्वर्युर्वैकङ्कतीं[1] समिधं प्रातरादध्यादपीपरो माह्नो रात्र्यै मा पाहीति सायम् । ॥ १३ ॥

शेषादुपयमनेनाग्निहोत्रं जुहोत्यग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातर्व्याहृत्या वोभयत्र तूष्णीं वा । शेषं समुपहूय हुतꣳ हविर्मधु हविरिति यजमान एव प्रत्यक्षं भक्षयति होत्रादयो ऽवघ्रेणाग्नीध्र उपयमनमुच्छिष्टखरे मार्जयित्वान्तर्वेदि प्राचीनबिलं सादयति । तस्मिन्सुवर्णरजतौ शतमानौ प्रास्य मदन्तीर्निनीय हिरण्यवतीभिस्ताभिर्यजमानषष्ठा हिरण्यवर्णाः शुचय इति चतसृभिर्मार्जयन्त । आज्यस्थाल्या[2] स्रुवेणाज्यमादाय प्राणाय स्वाहा पूष्णे स्वाहेत्येताभ्यामनुवाकाभ्यां प्रवर्ग्यप्रायश्चित्तानि हुत्वोपयमनादपो निःसार्य तन्सस्मिवँ घर्मपात्रं समवधाय तत्समवमृशन् घर्माय सꣳसाद्यमानायानुब्रूहीति संप्रेष्यत्या यस्मिन्सप्त वासवा इत्यभिज्ञाय तदेतदुपयमनमग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्राचीनबिलं स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः संसादयति स्वाहा त्वा नक्षत्रेभ्य इति सायं प्रतीचीनबिलमद्भिस्तृणमध्ये[3] विश्वदानीमित्यभिज्ञाय घर्मदुघमुत्सृज्यैतस्मिन् काले शं नो वातः पवतामित्युत्तमेनानुवाकेन शान्तिमुपयन्त्येवं

---

१ वैकङ्कतीं all the Mss. (not काष्टकीं).

२ This must mean: ०स्थाल्याः (०ल्यां B).

३ ॰मध्ये MT ; ॰मध्रिये LTV ; ॰मध्ने A : B useless.

त्रिरात्रं षड्रात्रं द्वादशरात्रं वा सायंप्रातः प्रवर्ग्योपसद्भ्यां प्रचरन्ति । ॥ १४ ॥

प्रवर्ग्यं भक्षयित्वा न मांसमश्नीयात्संवत्सरं चतुरो वा मासान्न राममुपेयान्न मृन्मयेन पिबेन्नास्य राम उच्छिष्टं पिबेत् । तेज एव तत्संश्यतीति[1] ब्राह्मणमग्निष्टोमे प्रवृणक्ति नोक्थ्ये प्रवृञ्ज्यादिश्वजिति सर्वपृष्ठे प्रवृणक्ति न प्रथमयज्ञे प्रवृञ्ज्यात्प्रवृञ्ज्याद्वा श्रोत्रियानूचानस्य प्रवृञ्ज्याद्दुर्ब्राह्मणस्य च ब्रह्मवर्चसकामस्य च प्रवृञ्ज्यात् । प्रवर्ग्यमुद्वासयिष्यन्नजामग्नीधे ददाति पष्ठौहीं ब्रह्मणे घर्मदुघं होत्रे शतमानावध्वर्यवे । ऽथ पूर्वशान्तिमुपेत्य तृणानि संस्तीर्याग्रेणाहवनीयं सर्वं परिघर्म्यं सम्राडासन्द्यां[2] सादयत्यथाग्नीध्रः प्रवृञ्जनीयोद्वासनीयौ खरौ सते समोप्योत्तरतः सम्राडासन्द्यां[3] सादयत्युच्छिष्टखरमन्यस्मिन्सते समोप्य[4] दक्षिणया[5] द्वारोपनिर्हृत्य मार्जालीयदेशे निदधाति । यथेतमेत्योदग्दशेन वाससा पत्न्याश्चक्षुः प्रोर्णोति । प्रतिप्रस्थाता गार्हपत्य आज्यं विलाप्योत्पूयौदुम्बर्यां स्रुचि चतुर्गृहीतं गृहीत्वा त्रीन् संनखाञ्छलाकामुष्टीनादाय तेषामेकमाहवनीय आदीप्यास्यदघ्ने धारयति । तस्मिन्नध्वर्युर्घर्म या ते दिवि शुगिति प्रथमामाहुतिं[6] जुहोति । तस्मिन्नपरमादीप्याहवनीये पूर्वं प्रहृत्य घर्म या ते ऽन्तरिक्ष इति नाभिदघ्ने द्वितीयामाहुतिं[6]

---

१ See Taitt. Ār. V. 8. 13.

२ ०न्द्यां सा० H; ०न्द्या सह साद० MLABV: ०न्द्यासहासाद० T.

३ ०द्यां MLATBV; in H these words are missing, read ०द्याः ?

४ समुप्य AHB; समोप्य MLTV and the Vyākhyā.

५ दक्षिणया द्वा० H; दक्षिणद्वा० MLATBV.

६ प्रथमामा० and द्वितीयामा० A, प्रथमाहुतिं and द्वितीयाहु० MLTHBV; प्रथमसमाहुतिं B.

तथापरमादीप्य जानुदघ्ने घर्मं या ते पृथिव्यामिति तृतीयामपि वा मुष्टीन्विहाय यथाप्रदेशमाहवनीये तिस्र आहुतीर्जुहोति। संवृत्य द्वाराणि प्रवर्ग्यमादायानु नो ऽद्यानुमतिरन्विदनुमते त्वमिति द्वाभ्यां पूर्वया द्वारा निष्क्रामन्ति। प्रतिप्रस्थाता वाससा पत्नीं नयति[1]। महावेदिमाक्रम्य प्रस्तोतः साम[2] गायेति संप्रेष्यति। ॥ १५ ॥

सह पत्न्या यजमानः सर्वर्त्विजस्त्रिः साम्नो निधनमुपयन्ति पुरुषः पुरुषः निधनमुपैतीति विज्ञायते[3]। दिवस्त्वा परस्पाया इति प्रथमं प्राप्य मध्यदेशे[4] द्वितीयं निधनं। प्राञ्चो ऽति-क्रामन्ति[5]। ब्रह्मणस्त्वा परस्पाया इति द्वितीयमभिक्रामन्त्यु-परवदेशं प्राप्य तृतीयं निधनमुपयन्ति प्राणस्य त्वा परस्पाया इति तृतीयमभिक्रामन्त्युद्वासनदेशमुत्तरेणोत्तरवेदिं[6] प्राप्य सम्राडासन्दीं प्रतिष्ठाप्य प्रस्तोतर्वार्षाहरं साम गायेष्टाहोत्रीयं साम गायेति संप्रेष्यतीष्टाहोत्रीयस्य पूर्ववन्निधनमुपयन्ति न वार्षाहरस्योदकुम्भमादायानेन संततधारया वस्त्वुरसीति सर्वं परिघर्म्यमुत्तरवेदिं[7] परिषिञ्चन्पर्येति। निधाय कुम्भं शं च

---

१ नयति महा० MLTABV; नयत्यमहा० H (pointing to नयत्यध्वर्यु-र्महा० ?).

२ सामानि A only.

३ See Taitt. Ār. V 9. 4

४ मध्यदेशे om. HB.

५ The words प्राञ्चोतिक्रामन्ति only give by MHB, (Vyākhya; प्राञ्चोभिक्रामन्ति): moreover H has after them: मध्यदेशमुपयन्ति.

६ उद्वासनदेशम् om. HB— उद्वासनदेश० T and the Vyākhya: उद्वासदेश० MLA.

७ ०घर्म्यमुत्तरवेदि A; परिघर्म्य उत्तर० MLTVB: परिग्रम्य उत्तर० H,

वक्षीति त्रिरपरिषिञ्चन्प्रतिपर्येति । चतुस्रक्तिर्नाभिश्चर्तस्येत्युत्तरनाभिमभिमृशति[1] । सदो विश्वायुरित्युत्तरेण नाभिं खरावुपनिवपत्यप[2] द्वेषो अप ह्वर इति मार्जालीय उच्छिष्टखरं पाणी प्रक्षाल्योत्तरवेद्यां कृष्णाजिनमास्तीर्य तस्मिन् हिरण्यं निधाय रौहिणपिष्टान्मुञ्जप्रलवान्सिकताश्चानुप्रकीर्य देव पुरश्चर सघ्यासं त्वेति प्रचरणीयं महावीरमुपावहरत्येनं मह्नीनां पयो ऽसीति दध्ना मधुमिश्रेण पूरयत्येवमेतरौ पूर्वापरौ दक्षिणोत्तरौ वा । तूष्णीमितराण्यादित्यस्येव मण्डलं भवत्यपि वा मह्नीनां पयो ऽसीति प्रचरणीय आज्यं ज्योतिर्भा असि वनस्पतीनामोषधीनाᳮ रस इति मधु वाजिनं त्वा वाजिनो ऽवनयाम इति दध्येवमितरयोरपि वाज्यमेव प्रथमे मधु द्वितीये दधि तृतीये । घर्मैतत्ते ऽन्नमेतत्पुरीषमिति यान्यासेचनवन्ति तानि दध्ना मधुमिश्रेण पूरयत्यरिक्तताया इति विज्ञायते । ॥ १६ ॥

अपि वा पुरुषाकृतिं कुर्यात्तां चिकीर्षन्समानमा प्रचरणीयोपावहरणात्तच्छिरो भवत्युपरिष्टात्साग्रं वेदं प्राञ्चं निदधाति । सा शिखा । शिरो ऽभितो दोग्ध्रे कर्णौ । प्रोक्षणीधानी मुखं । स्रुवौ नासिके । अभितः स्रुवौ हिरण्यशकलावक्षिणी[3] । आज्यस्थाली ग्रीवा । धृष्टी जत्रुण्यभितः शफावंसौ । रौहिणहवन्यौ बाहू । प्राची मेथी पृष्ठ्यो । ऽभितो द्वे धवित्रे पार्श्वे । तृतीयधवित्रमुरो । मध्य उपयमनमुदरो । ऽभितो

---

१ संमृशति H only.

२ उपवपति MLATVB; उपनीयपति H; खरौ निवपति the Vyākhyā.

३ अक्षिणी A; (also Vyākhyā); अक्षीणी TV, अक्षीणि B; अक्षणी HR; अक्ष्णि ML.

ऽग्निः श्रोणी । अभितः शङ्कू सक्थिनी । मध्ये तृतीयं मेढ्रमभितो रौहिणकपाले पार्ष्णी । तस्मिन्सर्वं रज्जुमयं दधाति तान्यन्त्राणि । रौहिणपिष्टानि सर्वतः प्रध्वंसयति तानि मज्जा । वेदं विसृज्यानुप्रकिरति स स्नायवो । ऽवकाभिस्तृणैः प्रच्छादयति सिरा[1] । घर्मैतत्ते ऽन्नमेतत्पुरीषमित्यतिशिष्टं दध्ना मधुमिश्रेण संसृज्यान्तरेण सक्थिनी निवपति तन्मांसं । दध्ना मधुमिश्रेण सर्वतो ऽवोक्षति तल्लोहितं । प्राचीनग्रीवेणोत्तरलोम्ना कृष्णाजिनेन प्रोर्णुते त्वग्लोमानि च । सम्राडासन्दीं विस्रस्योपरिष्टान्निदधाति । साम्राज्यं[2] भवति । ॥ १७ ॥

उत्तरवेद्यां नित्यं कल्पं ब्रुवत । उत्तरवेद्यामुद्वासयेत्तेजस्कामस्येति ब्राह्मणोक्तानि[3] यथाकामं । नैनमुद्वासितं वयांसि पर्यासीरन्नाग्निप्रणयनाद्वोदकुम्भपरिषेचनमेके समामनन्ति । रन्तिर्नामासि दिव्यो गन्धर्व इत्येनमुपतिष्ठते । ऽचिक्रदद्वृषा हरिरिति यजमानो । ऽध्वर्युरेतत्त्वं देव घर्मेत्यभिमन्त्र्येदमहं मनुष्यो मनुष्यानिति प्रदक्षिणमावृत्योच्छिष्टखरे मार्जयित्वानवेक्षमाणः प्रत्येत्योद्वयं तमस इत्यादित्यमुपस्थायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोत्युपतिष्ठत इत्येके[4] । इममू षु त्यमित्याहवनीयमुपतिष्ठते गार्हपत्यं वा । शं नो वातः पवतामित्युत्तरां शान्तिमुपयन्त्युपयन्ति । ॥ १८ ॥

इति त्रयोदशः प्रश्नः ॥

---

१ Read सा सिरा ?

२ साम्राज्यं भ॰ HTBV ; साम्राज्यं भोज्यं भ॰ ML ; संसृज्य भ॰ A.

३ See Taitt. Ār. V. 10. 2-3.

४ ॰तिष्ठतीत्येक ATHVB ; ML have only जुहोतीत्येके.

अथोपसत्कल्प । उपांशुयाजवद्यदातिथ्याया बर्हिः[1] परिधयः प्रस्तरश्चोपसदामग्नीषोमीयस्य च भवन्त्युपसत्सु तद्बर्हिः स्तीर्णं प्रस्तरश्च परिहिताः परिधयः । षोडशदारुमिध्मं संनह्य स्फ्यमग्निहोत्रहवणीं स्रुवं जुहूमुपभृतं ध्रुवां वेदमाज्यस्थालीमिति द्वन्द्वं प्रयुज्य यजमानं वाचं यच्छेति संप्रेष्य प्रणीताः कृत्वा वाचंयमः पात्राणि संमृश्य मदन्तीः संस्कृत्य ब्रह्माणमामन्त्र्य पात्राणि प्रोक्ष्य वाचं विसृज्याज्यं निरुप्याधिश्रित्य स्फ्यमादाय वेदेः[2] स्तीर्णाया[2] उपरि स्तम्बयजुर्हरत्युत्तरं परिग्राहं परिगृह्य मदन्तीरासादयेध्ममुपसाद्य स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीति संप्रेष्यति । ॥ १ ॥

निरुप्तमाज्यं ध्रुवायामेव गृहीत्वा मदन्तीरभिमन्त्र्य ब्रह्माणमिध्मं वेदिं च प्रोक्ष्य मदन्त्यवशेषं निनीय प्रस्तरे पवित्रे अपिसृज्य[3] सूर्यस्त्वेत्यग्निमभिमन्त्र्य पूर्वाघारसमिधमाधाय[4] विधृत्योराश्ववालं प्रस्तरं निधाय तस्मिन्[5] बर्हिषि वा ध्रुवां स्रुवं च सादयत्येतावसदतामिति[6] मन्त्रं संनम्य विष्णवसि वैष्णवं धामासि प्राजापत्यमित्याज्यमभिमन्त्र्य[7] सामिधेनीषु नवधेध्मं प्रतिविभज्य सं-

---

१ ०याजवद्यथातिथ्यायाबर्हिः AB; ०याजवद्दातिथ्याबर्हिः M; ०याजवद्द०दातिथ्याब० L; ०याजवद्यदानिथ्याब० TV; ०याजयतिथ्यं ब० HR. cp. Hir. VII. 12, beg.

२ वेदे स्तीर्णाया MLTV; वेदेस्तीर्णावा A; वेदे स्तीर्णा HB.

३ अपिसृज्य ATVBR; अपिपविसृज्य L; ऽपिविसृज्य M; अभिमृज्य H.

४ आधाय AB; आदाय MLTH.

५ जुहूं ins. MHRB.

६ Thus ATRVH; एते असदतामिति B; the other Mss. are badly corrupt.

७ ०मन्त्र्य TMLV; ०मन्त्रयते AHRB.

मादधात्यूढासु[1] देवतास्वग्निमुपवाज्य नान्यामाहुतिं पुरस्ताज्जुहुयात्स्रुवेणाघारमाघारयति । संमृष्टेषु महापितृयज्ञवत्प्रवरं प्रवृणीते[2] । ध्रुवाया अष्टगृहीतं जुहूं कृत्वा चतुर्गृहीतमुपभृति कुर्यादाज्यस्थाल्या इत्येके । ॥ २ ॥

घृतवतीमिति होतुरभिज्ञाय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्त उपांशुयाजवत्तिस्रो देवता यजत्युत्तरतः प्रथमायाः पुरोऽनुवाक्यां संप्रेष्यति दक्षिणत इतरयोर्जुहूमाज्यं तस्यार्धेनाग्निं पूर्वार्धे यजत्यर्धेन मध्ये सोमं यदुपभृति तज्जुहूमानीय तेन पश्चार्धे विष्णुं यजत्युदङ्ङावृत्य यथायतनं स्रुचौ सादयित्वा प्रस्तरमक्त्वा सव्ये पाणौ कृत्वाज्यस्थाल्याः स्रुवेणोपहत्य या ते अग्ने ऽयाशया तनूरिति प्रथममौपसदमाहवनीये जुहुयाद्या ते अग्ने रजाशयेति द्वितीयं या ते अग्ने हराशयेति तृतीयं । ये[3] युध्येयुरयज्ञसंयुक्तानेतान् होमान् जुहुयादयो ऽवधाय प्रथमं रजतमवधाय द्वितीयं हरितमवधाय तृतीयमग्नीन्मदत्यापा३[4] इत्येतदादि निह्नवान्तं व्याख्यातं । दक्षिणोत्तानैः पूर्वाह्णे सव्योत्तानैरपराह्णे निह्नुवते । ऽग्नीद्देवपत्नीर्व्याचक्ष्व सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यत्यपरेण गार्हपत्यमाग्नीध्र उपविश्य सेनेन्द्रस्येति देवपत्नीर्व्याचष्टे । सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति । सासि सुब्रह्मण्य इति तां यजमानो ऽनुमन्त्रयते यथा पुरस्तादनूपसदमेतानि

---

१ Thus all instead of ओढास्.

२ वृणीते MLTARBV , प्रवृणीते H.

३ यजेयुर्ध्येयुर० M ; यजेयुद्वेयुर० L ; ये(or या)युध्येयुर० ATVB , यंययुध्येयुर० R ; ययुग्योर० HR perhaps यदि यु०.

४ The sign of pluti here also (cp. XIV. 23) added by me.

क्रियन्त । एवं सायं प्रातस्त्रिरात्रं प्रवर्ग्योपसदौ कार्ये[१] । याः प्रातर्याज्या स्युस्ताः सायं पुरोऽनुवाक्याः कुर्याद्याः प्रातरनुवाक्यास्ता याज्यास्तिस्र एव साह्नस्योपसदो[२] द्वादशाहीनस्येत्युक्तं । मध्यमेऽहनि पौर्वाह्णिकीभ्यां प्रचर्याग्रेण प्राग्वंशं[३] त्रिषु प्रक्रमेषु शङ्कुं निहत्य दर्शवत्संनमनवर्जं स्फ्येन परशुना वा वेदिं विमिमीते[४] । ॥ ३ ॥

स पाश्चात्यो वेदेर्मध्यमः शङ्कुस्तस्मात्पुरस्तात्प्रक्रमेषु षट्त्रिंशति[५] शङ्कुः पौरस्त्यः । पाश्चात्याद्दक्षिणोत्तरौ पञ्चदशसु पञ्चदशसु शङ्कू तौ श्रोण्यौ पौरस्त्याद्द्वादशसु द्वादशसु शङ्कू तावंसावेवंव्यायामानं विधाय[६] सर्वं स्पन्द्यया शक्तिविषये दक्षिणावृत्तया प्रदक्षिणं विमिमे त्वा पयस्वतीमिति वेदिं परिमिमीते । मध्ये प्रागग्रां पृष्ठ्यां करोतीदं तस्मै वेदेन वेदिमित्यभिमर्शनसंमार्गौ[७] । पौरस्त्यात्पश्चात्प्रक्रम उत्तरवेदेः पौरस्त्यात्पश्चाद्दशमे[८] पदे शङ्कुरुत्तरवेदेः पाश्चात्यस्ततः[९] षष्ठात्पदाद्दक्षिणतः सप्तम

---

१ कार्ये TV; कार्येण HB, कार्यौ MLAR.

२ Thus TVBLR; all the other Mss. are corrupt cp. Āp. XI. 4. 7.

३ प्राग्वशं HR; प्राग्वंशात् MLATBV.

४ विमि० LTV; मिमीने MAHRB and the Vyākhya.

५ Thus all the Mss.

६ विधाय MATV; पिधाय L; विसाय B; व्यवसाय HR and the Vyākhyā.

७ Thus MLTAV; ०मर्शनसमग्नौव्यामीतौ पौर० H; ०मर्शसममान्नौव्यामीतौपौ० R; ०मर्शनसमार्गौ व्यावयामौ तौ पौर० B.

८ पौरस्त्यात्पश्चा० all, read probably पौरस्त्यः पश्चा०.

९ Thus B only; पश्चा० (not पाश्चा०) all the other Mss.

उपरवदेशस्तस्मात्स्तम्बयजुर्हरत्युत्तरादंसात्पश्चिमे[1] द्वादशादुत्तरतः प्रक्रम उत्करदेशे[2] नमो दिव इत्याग्नीध्रो[3] ऽञ्जलिं कृत्वोपविशति । तदञ्जलौ स्तम्बयजुर्व्याख्यातं । स उत्करस्तदंसस्योत्तरेण प्रक्रमे चात्वाल । इमां नराः कृणुत वेदिमेत्येति संप्रेष्यति । व्याख्यातं खननं । चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये । तस्यां सुपर्णावधि यौ निविष्टौ तयोर्देवानामधि भागधेयमिति वेदिमभिमन्त्र्योत्तरवेद्यावृता दशपदामुत्तरवेदिं पुरस्तादंहीयसीं करोत्युदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छन्नां कृत्वापराह्णिकौ श्वो भूते चरमे[4] पूर्वाह्णिकौ । व्रतार्धं[5] प्रयच्छति सर्वं वा । तथैवापराह्णिकौ समस्य[6] प्रवर्ग्यमुद्वास्योपसदं कुर्याद्यदि पूर्वः प्रवर्ग्यः । पशुबन्धे ऽग्निप्रणयनं व्याख्यातम् । ॥ ४ ॥

एष एव सौमिक आहवनीयो । ऽग्निमत्यामुत्तरवेद्यामुत्तरं परिग्राहं परिगृह्याप्रोक्षितायां[7] न विचरन्त्या स्तरणात्प्रतिप्रस्थाता पयस्यायै मैत्रावरुण्यै सायं दोहाय वत्सानपाकरोति घर्मदुघस्य[8] वत्सं दधिघर्माय । सौत्यं काष्ठं वेद्यर्थं बर्हिश्च

---

१ उपरवदेश० ARB; उपरदेश० H and the Vyākhyā; उत्तरदेश० ML; उत्तरवेदेश० TV.

२ ०देशे HR; ०देशो MLATVB.

३ ०ध्रोञ्जलिं HRB; ०ध्राञ्जलिं MLATV.

४ Thus emended; चरमौ all the Mss.

५ व्रतार्थं the Mss.

६ समस्य H (R is missing); समस्यन् the Vyākhyā; समाप्य MLATBV.

७ ०गृह्याप्रोक्षि० AHR; ०गृह्यप्रोक्षि० MLTVB.

८ ०दुहस्य ALTV and the Vyākhyā; ०दुघस्य MHRB.

संभ्रियते । काष्ठं वेदिं बर्हिश्च त्रिस्त्रिः प्रोक्ष्या घा ये अग्निमिन्धत इति बद्धलं वेदिं प्राचीनं बर्हिः स्तृणाति । पूर्वं प्रयुक्ते प्रक्षालिते अनसी युग्मक्षते[1] शालामग्रेणाभितः पृष्ठ्यां परिश्रिते सच्छदिषी प्राची स्थापयतो दक्षिणमध्वर्युरुत्तरं प्रतिप्रस्थातैवं कुरुतः कर्माण्युत्तरच्च । तयोर्दक्षिणं॰वर्षीय उद्धृतफलकं तथोत्तरं । तयोरक्षबन्धान्प्रसक्तान्विस्रस्य[2] पुनस्तान्सुरक्षितान्बध्नाति[3] । वैष्णवी विष्णवे शुन्धेयामिति[4] हविर्धाने प्रोक्षति । शालामुखीय आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा युञ्जते मन इति सावित्रेणौत्तरवेदिके[5] जुहोति । देवश्रुताविति पत्नी पदतृतीयस्यैकदेशमादाय साज्येन तेन दक्षिणस्य हविर्धानस्य दक्षिणामक्षधुरं दक्षिणेन हस्तेनोत्तानेन त्रिः प्रदक्षिणमुपानक्त्येवमुत्तरस्य । पदनाश आज्येनोपानक्त्यध्वर्युर्हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति संप्रेष्यति । युजे वां ब्रह्म पूर्व्यमित्येतां त्रिरुक्तामभिज्ञाय प्राची प्रेतमिति हविर्धाने प्राची प्रवर्तयेयुर्यक्षघोषः सुवागिति जपति । यदा हविर्धाने वेदिमवक्रामतस्तदा दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यामन्तर्वेदि हिरण्यं निधाय परिस्तीर्येदं विष्णुर्विचक्रम इति जुहोत्येवमुत्तरस्य प्रतिप्रस्थातेरावती

---

१ युग्यक्षवे HR and cp. Hir. VII. 16 ; युग्ययुक्ते MLTABV.

२ प्रसक्तानिस्रस्य H ; प्रसिक्तान्वि॰ ALBR ; प्रनिक्तान्वि॰ V ; प्रखिक्तावि॰ T ; प्रसिक्तान् वि॰ M.

३ पुनस्तान् MBV ; पुरस्तात् LATH.

४ शुन्धेथा॰ TV and Vyākhyā ; शुध्येथा॰ AMLHB.

५ Most of the Mss. ॰णौत्तर॰.

धेनुमती इत्यप जन्यं भयं नुदेति[1] वेदेः पश्चार्धे वितृतीयदेशे[2] मनसाप जन्यं भयं नुदेति ब्रह्मा होताध्वर्युर्वा पादेन पांसून् लोष्टं वा बहिर्वेदि निरस्यति । ॥ ५ ॥

अपरेणाहवनीयं त्रिषु प्रक्रमेष्वत्र रमेथामिति नभ्यस्थे हविर्धाने स्थापयित्वाभिमन्त्रयतो[3] । यावदर्थमेतयोरन्तरालं । वैष्णवमसि विष्णुस्त्वोत्तभ्नात्विति तयोश्शुबुके उत्तम्भयतो । दिवो वा विष्णवित्याग्नीध्रः पदयर्चा दक्षिणस्य हविर्धानस्य मेथीं निहन्ति दक्षिणं[4] तूष्णीमुत्तरं[4] च । विष्णोर्नु कमिति तयोत्तरस्य । विष्णोर्ध्रुवमसीति स्यन्द्यया मेथिष्वेते निबध्नीतो[5] विष्णोर्ध्रुवोऽसीति ग्रन्थिं कुरुतस्तौ । सुरचितौ बद्ध्वोर्ध्वाः ग्रन्थ्याः समुत्क्षिप्योपरि धारयतो । दक्षिणस्य हविर्धानस्य प्राञ्चमरत्निं मौला मह्नो वा विष्णविति प्राचीनकर्णास्तिस्र उदगपवर्गाः स्थूणाः स्थापयत्येवमुत्तरस्य प्रतिप्रस्थातैवमपराः षट् स्थूणाः स्थापयतस्तास्विदञ्चौ वंशौ प्रोहतः प्राचश्च । विष्णो रराटमसीति पुरस्ताद्रराटं[6] वंशे बध्नीतस्तथा परितो । विष्णोः पृष्ठमसीति त्र्यरत्निविस्तारं

---

१ Probably the words अप..नुदेति (found in all the Mss.) are interpolated.

२ वितृतीय० HRB; तृतीय० LMTV; सतृतीये A; विगततृतीयदेशे the Vyākhyā.

३ ०यतो LTV and the Vyākhyā; ०यते MAHRB.

४ उत्तरं and दक्षिण (not ०रं, ०णं) MLATV and the Vyākhyā; दक्षिण and उत्तरतो (the last instead of उत्तरं च) H; दक्षिणां तूष्णीमुत्तरतो B (perhaps preferable).

५ निबध्नी० HR; बध्नी० MLTAV; नब० B.

६ Not quite certain. रराटं HALMB; रवीपिं रराविं V; the Vyākhyā seems to read रराति.

नवायामं मध्यमं छदिः प्राञ्चमुदञ्चं वा निधाय विष्णो श्नप्त्रे स्थ इति तदभितश्छदिषी च । परि त्वा गिर्वण इति सर्वतः परिश्रयति[1] । पृष्ठ्यामभितः पूर्वमपरं च द्वारे कुरुतो । विष्णोः स्यूरसीति दर्भैर्द्वारस्थूणे वेष्टतो । विष्णोर्ध्रुवोऽसीति[2] ग्रन्थी कुरुतस्तौ । सुरचितावेवमपरे द्वारस्थूणे । प्रागुन्नतं पश्चादवनतमेतद्वैष्णवमसि विष्णवे त्वेत्यभिमृशतः । ॥ ६ ॥

प्र तद्विष्णुरिति पूर्वेण द्वारेण निष्क्रामत । ऊर्ध्वमन्यया वैष्णव्या वा । दक्षिणस्य पुरोऽक्षमुक्तमुपरवकर्म । देवस्य त्वेत्यभ्रिमादायाभ्रिरसीत्यभिमन्त्र्य व्याघारवदक्ष्णया चतुरः प्रादेशमुखान्प्रादेशमध्यानुपरवान्परिलिखितमिति त्रिः परिलिख्य रक्षोहणो वलगहन इति बाहुमात्रमुपरवानधस्तात्संतृण्णानुपर्यसंभिन्नान्[3] खात्वा वृत्रहनसीत्यभ्रिं निदधात्येषां पुरीषमुदुप्य दक्षिणस्यानसः पूर्वेणोपस्तम्भनं तेन खरं चतुरश्रं करोति यावदलं सोमपात्रेभ्यः । पुरस्तात्संचरं शिनष्टि । रक्षोहणो वलगहनो वैष्णवान् खनामीति पुनरभ्रिया खात्वा विराडसि सपत्नहेति पूर्वयोर्दक्षिणस्मिन्नुपरवे बाहुमुपावहृत्येदमहं तं वलगमुद्वपामीति पांसूनादायेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयतीति तद्बिले ऽवबाध्य निरस्तो वलग इति हुत्वा गायत्रेण छन्दसावबाढो वलग इति यजमानस्याधस्पदं तान्पांसून्निवपति । सम्राडसि भ्रातृव्यहेत्यपरयोरुत्तरस्मिन्बाहुमुपावहृत्य

१ ०श्रयति A, Vyākhyā ; ०श्रयत MLTVB ; ०श्रयत HR.

२ ध्रुवोसी० AB, Vyākhyā ; ध्रुवमसी० MLTHV.

३ संतृषान् MLTHVB ; संतृद्य A. .— ०संभिन्दन् MLBV ; ०संभिन्नान् H ; ०संभिद्य A.

पूर्ववदादानबाधनहरणानि । त्रैष्टुभेन छन्दसावबाढो वलग इति तथा निवपत्यपरयोर्दक्षिणस्मिन् स्वराडस्यभिमातिहेति बाहुमुपावहृत्य तथादानावबाधनहरणानि । जागतेन छन्दसावबाढो वलग इति तथा निवपति । ॥ ७ ॥

विश्वाराडसि विश्वासां नाष्ट्राणाꣳ हन्तेति पूर्वयोरुत्तरस्मिन् बाहुमुपावहृत्य तथादानावबाधनहरणान्यानुष्टुभेन छन्दसावबाढो वलग इति तथा निवपति । तांश्च पदपांसून्यं द्वेष्टि तस्य संचरे परावपत्यप उपस्पृशति । पूर्वदक्षिणस्मिन्यजमानोऽपरोत्तरस्मिन्नध्वर्युस्तत्तद्यजुषावमृश्य संमृश इमानायुष इत्यधस्ताद्बाहुभ्यां संमृशेते । किमत्रेत्यध्वर्युर्यजमानं पृच्छति । भद्रमिति स प्रत्याह । तन्नौ सहेत्याहाध्वर्युर्यजमानोऽपरदक्षिणस्मिन् पूर्वोत्तरस्मिन्नध्वर्युस्तथावमृश्य संमृशेते । किमत्रेति यजमानोऽध्वर्युं पृच्छति । भद्रमिति स प्रत्याह । तन्म[1] इत्याह यजमानो । ऽध्वर्युरुपरवान्यथाखातं रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति यवमतीभिरद्भिस्त्रिः प्रोक्षत्युत्तरैर्यजुर्भिर्यथालिङ्गं प्रोक्षण्यवनयनयवप्रासनबर्हिरवस्तरणस्रुवाभिहोमान् हिरण्यमन्तर्धाय जुहुयात् । ॥ ८ ॥

अधिषवणफलके असंतृण्णे औदुम्बरे पालाशे कार्श्मर्यमये वा दीर्घसोमे संतृद्ये तूष्णीं प्रोक्ष्य रक्षोहणौ वलगहनावुपदधामि वैष्णवी इति ताभ्यामुपरवानपिदधाति । द्वौ दक्षिणेन द्वावुत्तरेणाभितो मयूखान्निहन्ति । रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इति प्रदक्षिणं पुरीषेण पर्यूहति । रक्षोहणौ

---

१ तन्म VTH Vyākhya ; तन्न MLA.

वलगहनौ परिस्तृणामि वैष्णवी इति बर्हिषा परिस्तृणाति । रक्षोहणौ वलगहनौ वैष्णवी इत्यनेनाभिमृशत्यभिमन्त्रयते[1] वा । लोहितमानडुहमधिषवणचर्मोपरिष्टाद्यथासेचनवदभिषवायालं[2] तूष्णीं[3] प्रोक्ष्य फलकयोर्यज्ञ प्रतितिष्ठेति प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । पञ्च ग्राव्णस्तस्मिन्प्रतिदिशं[4] मध्ये च बृहन्नसीति प्रत्येकं संमुखान्सादयति । प्रथिष्ठं मध्यमं । रक्षोघ्नो वो वलघ्नः प्रोक्षामि वैष्णवानिति तान्प्रोक्षति । ॥ ९ ॥

अपरेणोत्करं षट् प्रक्रमानपरेणार्धं बर्हिर्वेद्यर्धमन्तर्वेदि चतुःस्थूणं सर्वतः षट्प्रक्रमं दक्षिणद्वारं प्राचीनवंशं परिश्रितमाग्नीध्रं मिनोति । वैश्वदेवमसि विश्वेभ्यो देवेभ्यस्त्वेति संमितमभिमृशति । पूर्वेणापरवेद्यन्तं त्रीन् प्रक्रमान्पूर्वेणापरिमितान्वा प्राक्[5] प्रत्यङ्[5] नवारत्न्यष्टादशोदगायतमुदग्वंशं[5] दक्षिणेन पृष्ठ्यां प्रतिक्लृष्टतरं यथर्त्विग्भ्यः प्रसर्पकेभ्यो धिष्णियेभ्यश्चालं भवति तथा सदो मिनुयात्तन्मध्ये दक्षिणेन पृष्ठ्यां प्रक्रमे[6] उपरात्परं[6] यजमानसंमितां सुनाह्वां[7] यथा यूपस्य प्रक्षालितामौदुम्बरीं

---

१ इत्यंनानाभि॰ AB; इत्यनेनाभि॰ TMLHVR.

२ ॰परिष्टाद्यथासे॰ AHBR, ॰परिष्टाद्यासे॰ MTV, ॰परिष्टावसे॰ L.

३ Before तूष्णीं AHR ins. त.

४ ग्रावाणस्त॰ MLTVB; गृह्लवाणस्मि॰ A, ग्रावाप्रतिदिशं HR; ग्रावुसः the Vyākhyā, which points to ग्राव्णः.

५ Thus MLTV; प्रत्यन्नादशोदग्वशं A; पृथक् प्राग्द्वारेत्यष्टादशारत्नयो दशायतिमुदग्वंशं H; B useless.

६ Thus ATV; प्रक्रम उपरवात्परं L; प्रक्रमपरात्परं MHRB.

७ ? सुनाह्व T; सुनाह्वां MLAV—RH read this and the foll.: सुनामानाभिदघ्नमौदुम्बर्यवदो यथा यूपस्य; B: सन्नाह्वनाभिदघ्नमौ etc., as RH.

प्राचीनाग्रामवटे संधाय दिवे त्वेति प्रतिमन्त्रं परस्तादर्वाचीं[1] प्रोक्षति । शुन्धन्तां लोको यवो ऽसि पितृणाꣳ सदनमसीत्यवटे ऽपामानयनादीन्युक्तान्युद्दिवꣳ[2] स्तभानेति प्राचीनकर्णामौदुम्बरीं स्थूणामुद्गात्रा सहोच्छ्रयति द्युतानस्त्वा मारुतो मिनोत्विति । यथा प्राग्वंशस्य सदोहविर्धानयोश्च समानः[3] संकाशास्तथावटे[3] मिनोति । ॥ १० ॥

ब्रह्मवनिं त्वा ब्रह्म दृꣳहोन्नमय पृथिवीमित्येतैरौदुम्बर्याः पर्यूहणादीन्युक्तानि । तस्या विशाखे हिरण्यं निधाय घृतेन द्यावापृथिवी आपृणेथामिति स्रुवेणाभिजुहोत्यान्तमन्ववस्रावयति । यदा[4] भूमिं प्राप्नुयात्तदा[4] स्वाहेति ब्रूयात्तां सर्वतः परिमृज्यौदुम्बरीमन्वग्राः[5] सदसः स्थूणा[6] हविर्धानवदवटे ऽवधाय तासूदग्वंशान् प्रोक्ष्य प्राग्वंशानध्यस्येन्द्रमसीति[7] त्रीण्युदक्छदींषि मध्यमानि प्रोक्ष्येन्द्रस्य सदो ऽसीति त्रीणि दक्षिणानि विश्वजनस्य छायेति त्रीण्युत्तराण्यौदुम्बरीमभ्यग्राणि । दक्षिणान्युत्तराणि करोत्येकादशच्छदिः प्रभृतीनि ब्राह्मणोक्तानि[8] काम्यानि यथाकामं । हविर्धानवत्परिश्रित्य[9] द्वारे कृत्वेन्द्रस्य स्यूरसीति परिश्रि-

---

१ अर्वाचीन L only, अर्वाञ्चं B.

२ Emended ; ०नाद्युक्तानु० MHR , ०नाद्युक्तान्यु० AB ; ०नाद्युक्तानु० LT ; ०नाद्युक्तान्यु० V.

३ ? समानः संकाशास्त० A ; समानाः सका(पा)शास्त० MLTV ; समाः संकाशास्त० HR ; समानसंकाशास्त० B.

४ यदा..तदा TBH ; यथा..तथा MLARV.

५ परिमृशत्यौ० MLTV ; परिमृश्यौ० A ; परिमृज्यौ० HRB.

६ Thus B ; ०न्वग्रां..स्थूणान् or स्थूणां the other Mss.

७ अभ्यध्यस्यति instead of अध्यस्य H.

८ See Taitt. Saṃh. VI. 2. 10. 6.

९ परिश्रितस्य TV only.

त्येन्द्रस्य ध्रुवो ऽसीति ग्रन्थी सुरचितौ कुरुत । ऐन्द्रमसीन्द्राय त्वेति संमितमभिमृशतः । सोमस्य पुरा संस्थानादध्वर्युः पूर्वेण द्वारेण हविर्धाने प्रविश्य प्रत्यङ् नातीयाद्यद्यतीयादिदं विष्णुर्विचक्रम इति जपेदपरेण सदः प्रविश्य प्राङ् नातीयात् । ॥ ११ ॥

यद्यतीयादुत्तिष्ठन्नोजसा सहेति जपेत्सदोहविर्धानयोर्विपरीतं च[1] नातीयाद्धिष्णियान्होतारं च प्रत्यङ् नातिसर्पेद्यदि सर्पेदैन्द्रीं जपेन्नाध्वर्युरुपगायेदित्युक्तमच वोपरवकर्म । चात्वालात्स्फ्येनोद्धृत्य पुरीषमाहृत्य चतुरश्रान्परिमण्डलान्वा धिष्णियानुपवपत्याग्नीध्रागारे विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिंसीरित्याग्नीध्रीयमुपवपति[2] यथोत्तरेणान्तर्वेदि संचरः स्यात्सदसि षड् धिष्णियान्प्रत्यङ्मुखः[3] सदोद्वारमपरेण पृष्ठ्यायां[4] प्रक्रमे वह्निरसि हव्यवाहनो रौद्रेणानीकेनेति होतुः । स्वात्रो[5] ऽसि प्रचेता रौद्रेणेति[5] दक्षिणेन होत्रीयं पूर्वेणौदुम्बरीं मैत्रावरुणस्योत्तरेण होत्रीयं चतुरो धिष्णियान्समान्तरालानुदगन्तान् तुथो ऽसि विश्ववेदा रौद्रेणोशिगसि कवी रौद्रेणाङ्घारिरसि बम्भारी रौद्रेणावस्युरसि दुवस्वान्रौद्रेणेत्येतैर्ब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानां प्रतिमन्त्रमुपवपति । शुन्ध्यूरसि मार्जालीयो रौद्रेणेति सदसो बहिर्दक्षिणे वेद्यन्ते सममाग्नीध्रीयेण मार्जालीयं

---

१ च MLATBV ; om. HR.

२ ०त्याग्नीध्रमु० ML ; ०त्याग्निध्रयमु० TV ; ०त्याग्नीयमु० A ; ०त्याग्नीध्रियमु० HB.

३ प्रत्यङ्मुखः H (and cp. Kāty. VIII. 6. 19), प्राङ्मुखः MLATBV and the Vyākhyā.

४ MHB ins. दक्षिणेन.

५ These words only in MAHB.

दक्षिणामुख उपवपति यथा दक्षिणेनान्तर्वेदि संचरः स्यात् । ॥ १२ ॥

यथोपदिष्टं[1] यजमानो यजुर्भिस्तैस्तैरेव धिष्णियानुपतिष्ठते । ऽध्वनामध्वपते नमस्ते अस्तु मा मा हिंसीरिति तं तमभिक्रम्य जपति । सम्राडसि कृशानू रौद्रेणेत्याहवनीयं । परिषद्यो ऽसि पवमानो रौद्रेणेति बहिष्पवमानदेशं । प्रतक्वासि नभस्वान्रौद्रेणेति चात्वालमसंमृष्टो ऽसि हव्यसूदो रौद्रेणेति शामित्रं । समूह्यो ऽसि विश्वभरा रौद्रेणेत्युत्करमृतधामासि सुवर्ज्योती रौद्रेणेत्यौदुम्बरीं । ब्रह्मज्योतिरसि सुवर्धामा रौद्रेणेति ब्रह्मसदनं । सदस्यो ऽसि मलिम्लुचो रौद्रेणेति सदस्यमजो ऽस्येकपाद्रौद्रेणेति शालामुखीयमहिरसि बुध्नियो रौद्रेणेति प्राजहितं । कव्यो ऽसि कव्यवाहनो रौद्रेणेत्यन्वाहार्यपचनमत्र वा वेदिं स्तृणाति । धिष्णियानुपरवान्खरमुत्तरवेदिं च न[2] स्तृणाति । ॥ १३ ॥

दीक्षितस्याग्नीषोमीयः पशुरालभ्यस्तस्य निरूढपशुबन्धवत्कल्पो । न षड्ढोतेष्टिस्साङ्गभूतेषु विद्यते[3] । तूष्णीमातिथ्याबर्हिः संनह्य तान्परिधीनिध्मे[4] संनह्यति । वेदिकरणपरिस्तरणपाणिप्रक्षालनास्तरणानि कृत्वा पाशुकानि पात्राणि स्रुगादीनि प्रचरणीमधिकां प्रयुज्य यावदाज्यग्रहणं कृत्वा गार्हपत्ये प्रचरण्यामाज्यं चतुर्गृहीत्वाचैव पाशुकान्याज्यानि गृह्णाति । प्रैतु ब्रह्मणस्पत्नीति नेष्टा पत्नीमुदानयत्यथाहमनुकामिनीति पत्नी

१ यथोपदिष्टं MLATBV ; यथोपवापं H ; उपवापक्रमेण Vyākhyā.
२ च न स्तृ० RTAVB , MLH om. न.
३ न वित्तते H ; न विते R ; the word is missing in MLABTV.
४ तान्परि० MLTV ; तत्परि० AHRB.

जपित्वापरेण शालामुखीयमुपविश्य सुप्रजसस्त्वा वयमित्यादि जपत्येवं वा वन्दस्वेत्युपस्थे ब्रह्मा राजानं प्रतिपादयति । समपिव्रतान्क्रयध्वमिति संप्रेष्यति । यजमानस्यामात्यान्संक्रयन्ते । यजमानो ऽध्वर्युमन्वारभते यजमानं पत्नी ताममात्या । वाससाहतेनैतान्संप्रच्छाद्य तस्य दशासु हिरण्यं बद्ध्वाज्ये ऽवधाय प्रचरणीदण्डे दशान्तं[1] निबध्य त्वꣳ सोम तनुकृद्भ्यो जुषाणो अंशुरिति द्वाभ्यां प्रचरण्या वैसर्जने शालामुखीये[2] जुहोत्याज्यार्धं विशिनष्टि । ॥ १४ ॥

सोमं ग्राव्णो वायव्यानि प्राशित्राहरति बृहद् द्रोणकलशं चमसानिध्माबर्हिर्गृहीत्वाज्यान्याददते यानि चात्र शस्तान्यग्नीषोमीयपशुं[3] चानयन्ति । शालामुखीये ऽग्निप्रणयनीयानादीप्योपयमनीभिः[4] सिकताभिरग्निप्रणयनीयं सतमुपयम्य तस्मिन्नग्निमुद्यम्य निधाय धार्यमाणे ऽग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति । सावीर्हि देव प्रसवाय[5] पित्र इत्यस्यां त्रिरनूक्तायामयं नो अग्निरित्यग्निप्रथमाः प्राञ्चो गच्छन्ति तूष्णीं[6]

---

१ Thus AV, दशास्ताः M; दशास्त L, दशास्ता B; दशा HR; दशां the Vyākhyā.

२ गार्हपत्ये ins. HRB.

३ यानि चात्र शस्तान्य० TAV, शस्ताण्य० L, शस्ताण्य० MB; शास्तन्य० H; शस्तान्य० R. This must refer to Taitt. Saṃh. VI. 3. 2. 3, cp. the Vyākhyā: यानि चात्र शस्तनिति (sic!) वचनात्पत्न्युदानयनमनसामनुप्रवर्तनं च गम्यते.

४ ०ग्निप्रणयनान्या० RHB; ०ग्निप्रणीयान्या० ML, ०ग्निप्रणनानान्या० A; ०ग्निप्रणयनाना० TV; प्रणयनीयानिध्मान् the Vyākhyā.

५ प्रसवाय HRB; प्रथमाय ATV; प्रसवायथमाय ML.

६ तूष्णीं om. HR. Acc. to the Vyākhyā it belongs to the text.

सोमप्रथमा वा । यथोक्तानि तथानुहरन्त्यन्वनांसि[1] प्रवर्तयन्त्यनुनयन्त्यग्नीषोमीयमनुगच्छन्त्यमात्या । आग्नीध्रीये ऽग्निं प्रतिष्ठाप्याग्ने नयेति नयवत्यर्चा तस्मिन्नाज्यशेषं हुत्वा पुनराज्यशेषं शिनष्टि । ग्राव्णो वायव्यानि द्रोणकलशमाग्नीध्र उपवासयति चमसांश्चोत्तरेणाग्नीध्रीयं धिष्णियं परीत्य पाशुकैरिध्माबर्हिराज्यप्रभृतीनि[2] नयन्त्युत्तरवेदिं प्राप्योरु विष्णो विक्रमस्वेति सर्वमाज्यशेषमौत्तरवेदिके जुहोति ॥ १५ ॥

हुते ऽमात्याः प्रदक्षिणमावृत्य यथेतं प्रतिगच्छन्ति । सोमो जिगाति गातुविदिति सौम्यर्चा[3] ब्रह्मापरद्वारेण प्रविश्य हविर्धानं राजानं प्रपादयति[4] । गतश्रियः पूर्वेण द्वारेणोर्वन्तरिक्षमित्यध्वर्युर्यजमानश्च पूर्वेण प्रविशतो । दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनास्तरणं तस्मिन्प्रवृत्तस्य राज्ञश्चासादनं[5] चोक्तमेष वो देव सवितः सोम इति यजमानो राजानं देवताभ्यः संप्रयच्छत्येतत्त्वꣳ सोमेत्यभिमन्त्र्येदमहं मनुष्यो मनुष्यानिति प्रदक्षिणं परीत्य नमो देवेभ्य इति प्राचीनमञ्जलिं करोति । स्वधा पितृभ्य इति दक्षिणेदमहं निर्वरुणस्य पाशादिति पूर्वया द्वारोप-

---

१ Thus H, ०हरन्ति हिरण्यं चानासि प्रव० AB; हिरण्यं वासांसि प्र० M; हिरण्य चानासि प्र० TV; हिरण्य च नांसि प्र० L.

२ पाशुकैर् or पशुकैर् MLAHB, पाशकेध्मा० TV. The instrumental is inexplicable to me; perhaps the reading of TV, although it stands alone, is preferable.

३ Emended; सौम्यया MATBV; सौम्यय L; सौम्याया H.

४ Thus the Vyākhyā and B second hand; प्रतिपा० all the other Mss.

५ ? वृत्तस्य राज्ञस्यासादनं MLATV; B has the same, only प्रवर्तस्य; प्रवृत्तस्य राज्ञस्य सादनं HR.

निष्क्रम्य सुवरभिविख्येषमिति सर्वं[1] यज्ञमनुवीक्षते वैश्वानरं ज्योतिरित्याहवनीयमेत्यावान्तरदीक्षां विसृजते ऽग्ने व्रतपते त्वं व्रतानामित्याहवनीयमुपस्थाय तेनैव समिधमाधाय वितरां मेखलां विसृजते वितरां मुष्टी कुरुते । ॥ १६ ॥

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याᳫँ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति विसृज्य स्वाहा वाचि वाते विसृज इति वाचं विसृजते । पयोव्रतं निवर्त्य हविःशेषानेव सुत्ये व्रतयत्यध्वर्युरुत्तरेणाहवनीयं पांशुकानि पूर्ववदुपसाद्य दर्शवत्प्रोक्षण्यभिमन्त्रणाद्याज्यसादनं[2] पशुवद्यूपसंमानादि चा प्रवराद्व्याख्यातमग्नीषोमाभ्यां त्वा जुष्टमुपाकरोमीति मन्त्रं संनमति । प्रवरं प्रवृत्याश्राव्य प्रत्याश्रावित इन्द्रं होतात्सजूर्दिव आ पृथिव्या[3] इत्यृतुप्रैषादिभिर्यथालिङ्गं[3] होतारमाग्नीध्रमध्वर्युं प्रतिप्रस्थातारं मैत्रावरुणं ब्राह्मणाच्छंसिनं पोतारं नेष्टारं यजमानं चैतान्सौमिकानध्वर्युर्वृणीते वेद्यां तृणमपिसृज्यास्पृश्य आग्नीध्रादींस्तु[4] तन्नामग्रहणमुपांशु[4] मानुष इत्युच्चैर्जुष्टो वाचो भूयासमृचा स्तोममिति द्वाभ्यां वृतो वृतो[5] जुहोति । प्रयाजादिवपान्ते प्रचरिते मार्जयित्वा सुब्रह्मण्य पितापुत्रीयाᳫँ सुब्रह्मण्यामाह्वयेति संप्रेष्यति । पितापुत्रीयात ऊर्ध्वं सुब्रह्मण्या । यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशः । ॥ १७ ॥

---

१ सर्वं R and Vyākhyā; सर्व MLATBV; सर्वे H.

२ मन्त्रणाद्याज्य॰ ATBV; ॰मन्त्रणादाज्य॰ MLH.

३ पृथिव्येत्यृ॰ the Mss.

४ आग्नीध्रादींस्तुतं नाम॰ AHRB; आग्नीध्रादिस्तुतं नाम॰ ML; आग्नीध्रादिस्तुतन्नाम॰ TV.

५ वृतो twice ATV, once MLHRB.

अपराह्णे नवकुम्भं कुम्भीं[१] वादाय[१] चात्वालोत्करयोरन्तरा तीर्थेन निष्क्रम्य यत्र वहन्त्य[२] आपस्तद्गत्वा[३] हविष्मतीरिमा आप इति प्रतीपं तिष्ठन्वसतीवरीर्गृह्णाति । नान्तमा वहन्तीरतीयादित्युक्तं[४] । यस्यागृहीता अभिनिम्रोचेद्यो ब्राह्मणो बहुयाजी तस्य गृहाद्गृह्णीयाद्यदि न विद्यते बहुयाज्यग्निमुपरि धारयन्हिरण्यं वा वहन्तीष्ववधाय वरे दत्ते सशुक्राणां गृह्णाति । यथेतमेत्य सव्ये ऽंसे कृत्वापरेण शालामुखीयं[५] वेद्यां सादयति सुम्नाय सुम्निनीः सुम्ने मा धत्तेति वसतीवरीणां सादनेषु यजमानो जपति । प्राग्वत्प्रभृत्येडान्तः[६] पशुपुरोडाशो । ऽस्तमिते संवादादिना प्रचरति । पत्नीसंयाजान्तः पशुरग्नीषोमीयः । ॥ १८ ॥

निशायां वसतीवरीः परिहरन्नध्वर्युर्न पुरस्ताद्युत्क्रामत[७] मा वो परिहार्षमित्युक्त्वा नादीक्षितमभिपरिहरत्यन्तर्वेदि यजमानः पत्नी चासाते । आदाय कुम्भं सव्ये ऽंसे संनिधायापरेण प्राजहितं परीत्य[८] दक्षिणद्वारोपनिष्क्रम्य दक्षिणेन सदो मार्जालीयं च परीत्येन्द्राग्नियोर्भागधेयी स्थेति दक्षिणस्यामुत्तरवेदिश्रोण्यां सादयत्युक्तं याजमानमादाय कुम्भं दक्षिणे ऽंसे निधाय यथेतं

---

१ कुम्भीं वादाय MALTBV , कुम्भीमादाय H and Vyākhyā.

२ Thus the Vyākhyā ; वहन्त्याप० the Mss

३ तत्र गत्वा ML ; तद्गत्वा THABV.

४ See Taitt. Saṃh. VI. 4. 2. 3.

५ ०खीयं AHB : ०खीय MLTV.

६ Thus the Mss.

७ Thus the Vyākhyā only ; पुरस्ताद्युत्क्रा० the Mss.

८ परीत्य MLTVB ; परिहृत्य H ; परिहृत्य A.

प्रत्येत्योत्तरया द्वारोपनिष्क्रम्योत्तरेण वेदिं गत्वोत्तरेणाग्नीध्रीयं परीत्य मित्रावरुणयोर्भागधेयौ स्थेत्युत्तरस्यामुत्तरवेदिश्रोण्यां सादयति । ॥ १९ ॥

आदाय कुम्भं सव्ये ऽंसे निधाय यथेतं प्रत्येत्य विश्वेषां देवानां भागधेयौ स्थेत्यपरेणाग्नीध्रीयं सादयति । यज्ञे जागृतेति वसतीवरीः सन्ना अभिमन्त्रयते । सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति । पितापुत्रीया सुब्रह्मण्यान्त्र प्रतिप्रस्थातामित्रायै सायंदोहं दोहयति । या यजमानस्य व्रतधुक्तामाग्निरे दुहत या पत्न्यास्तां दधिग्रहाय या घर्मधुक्तां दधिघर्माय तन्नमनातक्तं पयो मैत्रावरुणाय शृतातङ्क्यं दध्यादित्यग्रहाय कुरुतेत्यध्वर्युः[1] संप्रेष्यत्याग्नीध्र एतां रात्रिमृत्विजो ऽलंकृत्य[2] वसन्ति । प्राग्वंशे पत्नी जागर्ति हविर्धाने यजमानो राजानं गोपायन् जागर्ति । महारात्रे बुध्येरन्यथा पुरा शकुनिप्रवादात्प्रातरनुवाको भवति भवति । ॥ २० ॥

॥ इति चतुर्दशः प्रश्नः ॥

---

१ कुरुतेत्यध्व० T; कुरुतेध्वर्यु० LV; कुरुते इत्यध्व० M; कुरुतादित्यध्व० AHB.

२ लंकृत्य MLAV; ०लंकृत्व T; ०लकृत्या B; ०लंकृत्वा H. R probably ०लंकृता.

अथाग्नेयः पशुरेको ऽग्निष्टोम आलभ्यः सवनीयस्तस्य रूपनियमो न विद्यते । दैक्षपशुवत्कल्प्यो । न बर्हिराहरति[1] । प्रस्तरमेव हरेदाज्यग्रहे प्रचरण्यां चतुर्गृहीतं गृहीत्वेतरासु स्रुक्षु पूर्ववद्गृह्णाति । पाणिप्रक्षालनप्रस्तराहरणाद्याज्यसादनान्तं[2] कुर्विति प्रतिप्रस्थातारमुक्त्वाध्वर्युरग्निं नयेत्याग्नेय्यर्चाग्नीध्रमभिमृशेदिदं विष्णुर्विचक्रम इति वैष्णव्या हविर्धानमयमग्निः सहस्रिण इत्याग्नेय्या स्रुचो वायो शतं हरीणामिति वायव्यया वायव्यानीन्द्रं विश्वा अवीवृधन्नित्यैन्द्रिया सदः । प्रजापतिर्मनसान्धो ऽच्छेत इति त्रयस्त्रिंशतं यज्ञतनूराग्नीध्रे जुहोति । प्रथमया यज्ञतन्वा पूर्वां पूर्वां यज्ञतनूमनुद्रुत्योत्तरयोत्तरया यज्ञतन्वा जुहोति । ॥ १ ॥

अग्निर्देवता गायत्री छन्द इत्येतैर्यथालिङ्गं सोमपात्राणि प्रयुनक्ति । कस्त्वा युनक्ति स त्वा युनक्त्वित्यवशिष्टानि । दक्षिणे ऽसे दक्षिणमुपांशुपात्रमुत्तरमन्तर्यामपात्रं । तन्मध्ये व्यानाय त्वेत्युपांशुसवनं जन्तुप्रतिमं ग्रावाणं दक्षिणशीर्षमुपांशुपात्रेण स्पृष्टं प्रयुनक्ति । तदपरेण परितःस्रगङ्कितमैन्द्रवायवपात्रं[3] । तदपरेणाजगावं मैत्रावरुणपात्रं द्विस्रक्त्याश्विनपात्रमपरेण शुक्रामन्थिनोः पात्रे दक्षिणं शुक्रपात्रं बैल्वमुत्तरं वैकङ्कतं मन्थिपात्रमपरेणाश्वत्थे उभयतोमुखे अश्वशफबुध्ने कार्ष्मर्यमये वर्तुपात्रे दक्षिणमध्वर्योरुत्तरं प्रतिप्रस्थातुराग्रयणस्थालीं दक्षिणश्रोण्यामुक्थ्यस्थालीमुत्तर-

---

१ न बर्हिराहरति TV; न बर्हिराहृत्य A; बर्हिर्हरति ML; न वर्हिराहृत्य HB.

२ Thus TVMLR; ०हरणान्याज्यसादनान्ता BH; ०हरणाद्यासादनान्त A.

३ परितस्रुग० TV; परितस्स्रुग० MLB; परितस्रग० A; प्ररिस्रग० H.

स्थामश्मशफबुध्नसुक्थ्यपात्रं च । तन्मध्ये दक्षिणोत्तराण्यतिग्राह्यपात्राण्युत्तरस्मिन् खरांसे दधिग्रहपात्रं चतुस्रक्त्यौदुम्बरं । दक्षिणस्यानसः पूर्वेणोपस्तम्भनमादित्यस्थालीमणुशफबुध्नमादित्यपात्रं चोत्तरस्यानसः पूर्वेणोपस्तम्भनमनुपोप्ते ध्रुवस्थालीमंदण्डस्रुगाकृतिं परिप्लवामुत्तरस्मिन् खरान्ते । रौहीतकान् न्यग्रोधकान्वा दशैकादश वा चमसानत्सरुकान् त्सरुमतो वा यथावकाशम् । ॥ २ ॥

पात्राण्यनुक्तवृक्षाणि वैकङ्कतानि । यान्यहोमार्थानि वारणानि । प्रादेशमात्राण्यूर्ध्वसानून्युपर्यासेचनवन्ति मध्ये संनतानि वायव्यानि । युनज्मि ते पृथिवीं ज्योतिषा सहेति दक्षिणस्यानसो ऽपरेणाक्षमधस्तात्सदशापवित्रं द्रोणकलशं प्रयुनक्ति । युनज्मि वायुमन्तरिक्षेण ते सहेत्युत्तरस्यानसो नीड आधवनीयं । युनज्मि वाचꣳ सह सूर्येण त इति तस्यानसः प्रधुरे पूतभृतं । तदक्षमपरेणाधस्तात् त्रीनेकधनान् घटान्पञ्च सप्त नवैकादश वा । युनज्मि तिस्र इति स्रुचो ऽभिमन्त्र्यापां क्षया ऋतस्य गर्भा इति ग्राव्णश्चर्मान्तः संमुखान् कृत्वाभिमन्त्रयत । आसन्यान्मा मन्त्रात्पाहि कस्यश्चिदभिशस्त्या इति पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात्पञ्चहोतारं च । हृदे त्वा मनसे त्वेति द्वाभ्यामन्तरेणेषे राजानं ग्रावस्तूपावहृत्य पुरा शकुनिप्रवादाद्देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयाग्नीत्सवनीयान्निर्वपेति संप्रेष्यति । ॥ ३ ॥

होता यथोक्तं कृत्वा हविर्धानं प्रविश्यान्तरेण युगधुरौ निरसनोपवेशने कृत्वोपविश्याभिहिंकृत्यापो[1] रेवतीः क्षयथा हि

[1] ०कृत्यापो HATVB; ०कृत्वापो ML.

वस्व इति प्रातरनुवाकमन्त्ये प्रतिपद्यते । ऽध्वर्युस्तिष्ठन्मनसा ते वाचं प्रतिगृह्णामीति होतारमुक्त्वा कर्माण्यनुप्रेक्षमाण आस्ते । इन्द्राय हरिवते धाना निर्वपतीन्द्राय पूषण्वते करम्भं सरस्वत्यै भारत्यै परिवापलाजानिन्द्राय[1] पुरोडाशमष्टाकपालं मैत्रावरुणीमामिक्षां । सवनीयहवींष्येतान्यग्नौ पाणी प्रक्षाल्य[2] पात्राणि यथार्थं शालामुखीये प्रयुनक्ति द्वे भर्जनार्थे कपाले अष्टौ कपालान्यामिक्षार्थं च स्थालीं[3] । प्रोक्षितेषु विभज्यार्धानवहत्यार्धान् लाजार्थान्निधाय ध्रुवमसीति द्वे भर्जनार्थे कपाले उपदधाति पुरोडाशकपालानि च । वरुणप्रघासवदामिक्षां करोति । ॥ ४ ॥

कपालयोर्धानालाजान्भर्जयित्वा निधाय पुरोडाशस्य प्रागलंकरणात्कृत्वा धाना विभज्यार्धान्पिष्टान्येन दध्ना मदन्तीभिर्वा संयौति । स करम्भो । ऽभूदुषा रुशत्पशुरिति होतुरभिज्ञाय शृणोत्वग्निः समिधा हवं म इति प्रचरण्या चतुर्गृहीतमाहवनीये जुहोत्यपरं चतुर्गृहीतं गृहीत्वोदङ् तिष्ठन्दर्भमुष्टिं[4] धारयन्नप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयाग्नीद्धोतृचमसेन वसतीवरीभिश्च चात्वालं प्रत्युपलम्बस्वेति संप्रेष्यति । ॥ ५ ॥

---

१ Thus B; परिवाप लाजानिन्द्राय H and cp. Hir.; परिवापमिन्द्राय AMLTV.

२ Thus B: पाणीप्रक्षाल्य पात्राणि प्रक्षाल्य H; पात्राणि प्रक्षाल्य MLA; पाणी प्रक्षाल्य TV.

३ च स्थालीं AMLBV; चरुस्थालीं THR.

४ Thus (or उदक् ति०) HTV; त्वोत्तिष्ठन्दर्भ० MLAB; cp. Śat. Br. III. 9. 3. 15.

मैत्रावरुणस्य चमसाध्वर्युश्चमसमादायाद्रवत्येकधनिनस्त्ववरानेकधनान् घटानादायाद्रवेयुः । प्रेद्युदेहीति नेष्टा पात्नेजनपात्रमादाय पत्नीमुदानयति । तेनैव मन्त्रेण सा तीर्थेन निष्क्रामति । यत्र प्रातरनुवाकमुपशृणुयात्तत्र वहन्तीष्वप्सु बर्हिः प्रास्य तस्मिन्देवीराप इति तेन, चतुर्गृहीतेनाध्वर्युरभिहुत्य कार्षिरसीति बर्हिषाहुतिमपप्लाव्य समुद्रस्य वो ऽक्षित्या उन्नय इति घृतलिप्ता[1] अभिहुता अपो मैत्रावरुणचमसेन गृह्णाति । ॥ ६ ॥

सोमस्य त्वा मूजवतो रसं गृह्णामीत्येकधना घटैर्गृह्णाति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्य इति प्राङ्मुखी[2] पत्नी पन्नेजनीर्गृह्णाति । यदि दूरे स्युरापो होतुरन्तिकं प्रत्युदूह्य तासु बर्हिः प्रास्याभिहुत्य ग्राह्याः । प्रेद्युदेहीति नेष्टा पत्नीं यथेतं प्रत्यानयति । पूर्वेण द्वारेण सदः प्रविश्य प्रशास्तुर्धिष्णियं परीत्यापरेण नेष्टुर्धिष्णियं वसुभ्यो रुद्रेभ्य इति पत्नी प्राङ्मुखी पन्नजनीः सादयति । चात्वालमितरे प्रतियन्ति । सं वो दधातु वरुण इत्युपरि चात्वाले होतृचमसं मैत्रावरुणचमसं च संस्पर्श्य वसतीवरीर्व्यानयति । समन्या यन्तीति होतुरभिज्ञाय होतृचमसान्मैत्रावरुणचमसे प्रस्कन्दयति मैत्रावरुणचमसाद्धोतृचमसे । सं वो ऽनक्तु वरुण इत्येते द्वे चमसे प्रचरण्या समनक्ति । ॥ ७ ॥

---

१ इति घृतलि० MLTABV; the Vyākhyā points to the same; इत्यघृतलि० H and thus also Hir. VIII. 3.

२ Thus all the Mss.; प्रत्यङ्मुखी the Vyākhyā.

होतुरन्तिकमायन्त्यध्वर्यो[1] ऽवेरपा३[2] इत्यध्वर्युं होता त्रिराहो तेमनन्नमुरिति त्रिः प्रत्याह । प्रचरण्यां चतुर्गृहीतं गृहीत्वा यमग्ने पृत्सु मर्त्यमिति क्रतुकरणं यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ निमार्ष्टि यद्यतिरात्रो यजुरेतदवदन् हविर्धानं प्रपद्यते । दक्षिणस्यानसः प्रधुरे प्रचरण्यौ सादयति । पूर्वेण द्वारेण हविर्धानमपः प्रपादयन्ति । ता यजमानो ऽनुप्रपद्यते । दक्षिणस्यानसो ऽधस्तान्मैत्रावरुणचमसीयाः सादयत्युत्तरस्यां वर्तन्यां पुरस्स्रक्तिं होतृचमसीया उत्तरस्यानसो ऽधस्तात्पुरोऽक्षमेकधना अपरेणाक्षं वसतीवरी निग्राभ्या स्थ देवश्रुत इति होतृचमसीयासु यजमानं वाचयति । ता निग्राभ्या[3] । उपयामगृहीतो ऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीति दधिग्रहपात्रे बर्हिरन्तर्धाय प्राजापत्यं दधिग्रहं गृहीत्वा दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति तमादायोत्थायापेन्द्र द्विषतो मन इति हुत्वा प्राणाय त्वापानाय त्वेति जुहोत्येतत्पात्रं संक्षाल्यान्तःपरिधि निनयत्यत्र यजमानो वरं ददात्यंश्वदाभ्यग्रहयोरप्येतत्समानं पात्रम् । ॥ ८ ॥

अंशुं गृह्णन्राजानमेकग्रहायालमादायोपरे न्युप्य वसतीवरीभिरुपसृज्यावीवृधं वो मनसेत्यभिमन्त्र्य ग्राव्णा हिरण्य-

---

१ ०कमायाश्विन्त्य० MLB, ०कमायात्य० TV; ०कमयन्त्य० A, ०मायं त्व० H.

२ The sign of pluti only in H; written thus: ०पाभ्य; Vyākhyā: ०पाण्य.

३ ? तान्गृहीत्वानुपयाम० M; तान्गृहीतानुपयाम० L; तासु गृहीतास्वुपयाम० TV; तासु निग्राह्या तासुपयम० A (corrected: तासु निगृहीतास्वुपयम०); तानिग्राह्यास्तुरुपयम० HRB (the last only ०ह्यास्तु उपया०). See Hir. VIII. 4.

पाणिः सकृदभिषुत्या मास्कानिति प्रथमस्कन्नमंशुमभिमन्त्रयते । द्रप्सश्चस्कन्देति विप्रुषो ऽनुमन्त्रयते । सर्वत्रैवमभिषवकल्पः । सकृदभिषुतस्य प्राणापान्याप्राणन्मनसा वामदेव्यं गायमानो गृह्णाति कया नश्चित्र आभुवदिति वामदेव्यस्य वर्चा मनसा । यद्यप्राणन् ग्रहीतुं न शक्नुयादा नः प्राण एतु परावत इति हिरण्यं शतमानमभिव्यनेयातामध्वर्युर्यजमानश्च । वरे दत्ते गृहीत्वा हिरण्येन शतमानेन संस्पृश्य[1] तेन तमपिधायेन्द्राग्नी मे वर्चः कृणुतामिति हुत्वा दधन्वे वा यदीमन्वित्यप्राणन्निरुक्तया[2] प्राजापत्यया हिरण्यपाणिः प्राङ्मुखस्तिष्ठन् जुहोति । प्रतिप्रस्थाता हिरण्यपाणिरध्वर्युयजमानौ हिरण्येन संस्पृश्य प्रत्युक्षति । ॥ ९ ॥

अदाभ्यग्रहं । वसवस्त्वा प्रवृहन्त्वित्येतैरुपनद्धस्य राज्ञस्त्रीनंशू-नादायैकैकमंशुमङ्गुल्यन्तरेष्वसंश्लिष्टान्प्रवृह्य दध्नो निग्राभ्याणां[3] पयसो वान्यस्मिन्पात्रे निःषिच्य मान्दासु ते शुक्र शुक्रमाधूनो-मीत्येतैः प्रतिमन्त्रं तस्मिन्नेतानंशूंस्त्रिः प्रदक्षिणमनुपर्यूह्य[4] धूनोति[4] चतुः पञ्चकृत्वः सप्तकृत्व एकादशकृत्वो वा । शुक्रं ते शुक्रेण गृह्णामीत्येतैरुपयामान्तैरदाभ्यग्रहं[5] गृह्णात्यास्मिन्नुग्रा अचुच्यवु-रित्यादाय ककुहꣳ रूपमित्यभिमन्त्र्य हुत्वा सोमः सोमस्य पुरोगा इति जुहोति । ॥ १० ॥

---

१ Thus the Mss , read संस्पर्श्य.

२ ०मन्वित्यप्राणन्निरु० ATBV, मन्वित्यप्राणं निरु० H ०मन्विति प्राणन्निरु० ML.

३ निग्राभ्या० LTV; निग्राह्या० the other Mss. and the Vyākhyā.

४ Thus MLTVAB; ०पर्याधूनोति H.

५ The words एतैरुपयामान्तैर् only in HB; they are supported by the text of Hiraṇyakeśin.

आधवनानंशून्सुरक्षितान्निदधाति । द्वादश धेनूः पष्ठौहोर्वांशुग्रहे दद्यात्यदाभ्ये च । पौर्वापर्यमेतयोर्यथाकामं[1] श्रद्दधानस्य[1] स्वाप्रियस्याध्वर्युणैतावग्राह्यौ[1] । देवस्य त्वेति जन्तुप्रतिमं ग्रावाणमादाय वाचं यच्छत्याग्रयणस्य प्राग्घिंकाराद् । ग्रावासीति तमभिमन्त्र्याधिषवण ऊर्ध्वसानुं निधायेन्द्राय त्वा वृत्रघ्न इति पञ्चभिर्यजुर्भिः क्रयवद्राजानमभिमिमीते पञ्चकृत्वस्तूष्णीं । नोपसमूहत्युपरेकदेशे राजानं व्यूह्यैकग्रहायाप्तमंशूनादायेतरानुपनह्य[2] निधाय तानुपरे[3] न्युप्य श्वात्रा स्थ वृत्रतुर इति होतृचमसीया निःषिच्य यत्ते सोम दिवि ज्योतिरित्यभिमृशति । निःषिक्तेभ्यो ऽंशुभ्यः षडंशूनादायाङ्गुल्यन्तरेषु द्वौ द्वावसंश्लिष्टान्[4] कृत्वा सुरक्षितान्[5] निधायेतरान्होतृचमसे निधायोपरि जन्तुप्रतिमं ग्रावाणं धारयन् प्रागपागुदगिति त्रिः प्रदक्षिणमंशून्परिप्लावयति । स निग्राभः स्यात्तानुपरे न्युप्य वसतीवरीभिः संतर्पावीवृधं वो मनसेत्यभिमन्त्र्यामुष्मा अहं यज्ञं प्रहरामि न तुभ्यꣳ सोमेति द्वेष्यं मनसा ध्यायन् ग्रावाणमुद्यम्य धिषणे वीडू सती इत्यधिषवणफलके अभिमन्त्र्य मा भेर्मा संविक्था मा त्वा हिꣳसिषमिति संहृतं राजानमभिमन्त्र्यानागसस्त्वा वयमिन्द्रेण प्रेषिता उपेति ग्राव्णा यथार्थमभि-

---

१ Thus B; ०काममश्रद्दधानस्य स्वाप्रियस्या० TV; ०कामाश्रद्दधानस्य स्वांप्रियस्या० H; ०कामः श्रद्दधानस्य वाप्रियस्या० A; ०कामि श्रद्दधानस्य स्वाप्रियस्या० ML.

२ Thus TV and the Vyākhya; ०तरंनुपनह्य A; ०तरानुपसमूह्य ML; ०पनह्यति H (what precedes is corrupt); ०तनडुपनह्यति B.

३ Thus AB; तानुपरि LV; तान्नुपरि M; तान् नुपरि T; नुपरे H.

४ Acc. pl. LHTV; Dual. acc. MA; ०ष्टां B.

५ ०क्षितान् MLHTVB; ०क्षितौ A.

षुणोत्या मा स्कानिति स्कन्नमंशुमभिमन्त्रयते द्रप्सश्चस्कन्देति विप्रुषो । ऽष्टौ कृत्वो ऽभिषुणोति । पूर्ववन्निग्राभमुपैति । सुरचितानां षण्णां द्वाभ्यामंशुभ्यामुपांशुपात्रमपिधाय तयोरन्तौ[१] प्रतिप्रस्थातोपयच्छति । वाचस्पतये पवस्व वाजिन्नित्यञ्जलिनाध्वर्युस्तस्मिन्राजानमासिञ्चति । ॥ ११ ॥

एवं द्वितीयतृतीयावभिषवौ । प्रथमावंशू अपोद्धृत्य मध्यमाभ्यां पात्रमपिधाय द्वितीये ऽभिषवे प्रतिप्रस्थातोपयच्छति । देवो देवानामिति रसमध्वर्युरासिञ्चति । तावंशू अपोद्धृत्योत्तमाभ्यां पात्रमपिधाय तृतीये ऽभिषवे प्रतिप्रस्थातोपयच्छति । मधुमतीर्न इषस्कृधीति रसमध्वर्युरासिञ्चति । तत्पात्रमादाय स्वांकृतो ऽसीत्युत्तिष्ठत्युर्वन्तरिक्षमन्विहीति हरत्युत्तरेण होतारमतीत्य मनस्त्वाष्ट्वित्युत्तरतः परिधौ[२] स्पृष्ट्वा दक्षिणाप्राञ्चं स्वाहा त्वा सुभवः सूर्यायेति दीर्घमृजुमविच्छिन्नमास्रावयन् प्रह्वस्तिष्ठन् जुहोति । हुत्वानुप्राण्यात् । प्रथमे परिधौ देवेभ्यस्त्वा मरीचिपेभ्य इति लेपं निमार्ष्टि । हुतशेषं सर्वमाग्रयणस्थाल्यामवनयत्येष ते योनिः प्राणाय त्वेत्युपांशुपात्रं यथायतनं सादयत्युपांशुपात्रे ऽंशुमवास्यत्या तृतीयसवनात्परिशेते । ॥ १२ ॥

महाभिषवाय चतुर्दिशमध्वर्यवश्चत्वारो यथाक्रमं पर्युपविशन्ते[३] । प्रातःसवनायालमुपनद्धस्य[४] राज्ञो ऽर्धमादत्ते[५] ।

---

१ ? तयोरतौ A; तयोरन्ता LTV; तयोरन्तरेण MB; ०पिधायोत्तरेण H and cp. Hir.

२ Thus H; परिधि MLABV; परिधौं T.

३ ०शन्ते MLAHBV; ०शन्ति T.

४ ०सवनायालमुपन० AHB; ०सवनायामुपन० M; ०सवनाया अमुपन० TV; ०सवनाय अमुप० L.

५ आददत TV; आदत AHB; आहवे ML; आदत्ते the Vyākhyā.

इतरमुष्णीषेणोपनह्योद्धृत्य पूर्ववत्सादयत्यर्धमुपरे न्युप्यादाभ्यांशूनां प्रथममुष्णिक् त्वं देव सोमेति प्रातःसवने ऽपिसृज्याभिषुणुयान्माध्यन्दिने मध्यममुत्तमं तृतीयसवने यत्ते सोमादाभ्यं नाम जागृवीति षडंशूनां द्वौ प्रथमौ मध्यमावुत्तमावनुसवनमपिसृजति। तान्सर्वानंशून्वसतीवरीभिः संतर्प्य दक्षिणैः पाणिभिर्ग्रावभिरभिषुण्वन्ति। पूर्ववन्निग्राभमुपयन्त्येवं द्वितीयो ऽभिषवस्तृतीयश्चैवं त्रिरभिषुतमध्वर्युणाञ्जलिसंसिक्तं राजानमुन्नेतान्तरेषे[1] उद्धृत्याधवनीये ऽवनयत्येषो ऽपरयोरुन्नयनयोरुन्नेतुरेवं विहितो द्वितीयस्तृतीयश्च पर्याय। उत्तमे पर्याये सर्वानभिषुतान्संभृत्य दशापवित्रेण प्रपीड्य तमाधवनीये ऽवनयति। ॥१३॥

उपरे[2] ग्राव्णः संमुखीकृत्य तानृजीषमुखान् करोति। प्राङ्मुखं द्रोणकलशं ग्रावस्वध्यूहन्त[3] उद्गातारो ऽधोऽधोऽक्षमुपकर्षन्ति। पवित्रं ते विततमिति द्रोणकलशस्योपरिष्टादुदीचीनं दशापवित्रं वितत्योद्गातारो धारयन्त्येतयैवर्चा यजमानो ऽध्वर्युर्वा पवित्रं विततमनुमन्त्रयते। यजमानो ऽस्य नाभिं करोति। दशापवित्रे होतृचमसेन राजानं संततं धारयन्[4] स्रावयत्युन्नेताधवनीयादुदचनेन[5] होतृचमसे राजानमानयत्यध्वर्युर्धारायां[6] ग्रहान् गृह्णात्युदित आदित्ये ऽन्तर्याममुपयामगृहीतो ऽस्यन्त-

---

१ ०ान्तरेषे ALV; ०ान्तरे T; ०ान्तरेषो H: ०न्तरेषेण MB (but षे is struck off in M).

२ Thus AHRB; उपरि MLTV.

३ ०दूहन्त ARHTVB; ०दूहन्ति ML.

४ धारयन् (धरयं) all.

५ उदचनेन MLAB; उदचनेन H; उदीचीनेन TV.

६ धारायां MLAV; धारयां T; धारया HR; धारय B.

र्यच्छेत्युपांशुग्रहवद्गृह्णाति लेपनिमार्जनशेषावनयनांशुनिधानवर्जं । दक्षिणेन होतारमतीत्य मनस्त्वाष्टिति दक्षिणतः परिधौ[1] स्पृष्ट्वा नैर्ऋत्यादीशानान्तं स्वाहा त्वा सुभवः सूर्यायेति दीर्घमृजुं संततमास्रावयन् जुहोति । ॥ १४ ॥

हुत्वापान्यादेष ते योनिरपानाय त्वेति पात्रं यथायतनं सादयति व्यानाय त्वेति पूर्ववज्जन्तुप्रतिमं ग्रावाणं चान्तर्याममप्यनुदिते गृह्णातीत्येके । रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णाति बृहत्सामा शुक्राग्रान् । ऐन्द्रवायवस्य पात्रमादाया वायो भूषेत्युक्त्वोपयम्योपयामगृहीतोऽसि वायवे त्वेति तस्मिन्धारायां[2] गृहीत्वा तदपयम्येन्द्रवायू इमे सुता इत्युक्त्वा पुनरुपयम्योपयामगृहीतोऽसीन्द्रवायुभ्यां त्वेति तस्मिन्पुनर्गृह्णाति । पवित्रान्तेन तत्परिमृज्यैष ते योनिः सजोषाभ्यां त्वेति यथायतनं यथादेवतं सादयत्येवमूर्ध्वं सर्वग्रहाणां मार्जनसादने भवतः । ॥ १५ ॥

पुरस्तादैन्द्रवायवाद्वे काम्या ब्राह्मणोक्तास्[3] ऐन्द्रवायवे सादिते साद्यन्ते । ऽयं वां मित्रावरुणेति मैत्रावरुणं गृह्णाति । राया वयमिति शृतशीतेन पयसा श्रीत्वैष ते योनिर्ऋतायुभ्यां त्वेति सादयत्ययं वेन इति शुक्रं गृह्णाति । हिरण्येन श्रीत्वैष ते योनिर्वीरतां पाहीति सादयति । तं प्रत्नथेति मन्थिनं गृहीत्वा मनो न येष्विति यवसक्तुभिः श्रीत्वैष ते योनिः प्रजाः पाहीति

१ परिधीन् HB; परिधिं MLATV.

२ धारायां all, only B धारया.

३ See Taitt. Saṃh. VII. 2. 7.

यथायतनं सादयति । य आग्रयणस्थाल्यामवनीतस्तस्य राज्ञ एकदेशमन्यस्मिन्पात्रे समवनीय द्वितीयां धारां कृत्वा ये देवा दिव्येकादश स्थेत्युक्त्वोपयामगृहीतो ऽसि विश्वेभ्यस्त्वा देवेभ्य इत्युपरिष्टादुपयामर्चाग्रयणस्थाल्याग्रयणं द्वाभ्यां धाराभ्यां गृह्णाति । ॥ १६ ॥

आग्रयणो ऽसीति पुरस्तादुपयामेन यजुषा वाग्रयणं गृहीत्वा त्रिर्हिंकरोत्युपांश्वग्रे ऽथोच्चमथोच्चतरं । तथा सोम पवत इत्याहास्मै ब्रह्मणे पवत इति सोममभिमन्त्र्य वाचं विसृज्य स्थालीं परिमृज्यैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्यायतने सादयत्यग्निष्टोमे[1] ऽतिग्राह्यांस्त्रीन् गृह्णात्यग्न आयूंषि पवस इत्याग्नेयमुत्तिष्ठन्नोजसा सहेत्यैन्द्रं तरणिर्विश्वदर्शत इति सौर्यं गृहीत्वा परिमृज्य यथादेवतमायतने सादयत्युपयामगृहीतो ऽसीन्द्राय त्वा बृहद्वत इति पुरस्तादुपयामेन यजुषोक्थ्यं गृह्णाति । ॥१७॥

मूर्धानं दिवो अरतिं पृथिव्या इति ध्रुवस्थाल्या ध्रुवं पूर्णं गृह्णाति । ध्रुवो ऽसीति पुरस्तादुपयामेन वा यजुषा । यजमानो न मेहेदा होमादेष ते योनिरग्नये त्वा वैश्वानरायेत्यायतने हिरण्यं निधाय तस्मिन्सादयत्युपविष्टो दक्षिणे हविर्धाने तमावनयनाद्राजपुत्रो गोपायति । स[2] ध्रुवगोपो । विरमति धारा । पवित्रं प्रपीड्य पूतभृतो बिले वितनोति । मैत्रावरुणचमसीयास्वेकधनैकदेशांश्चाधवनीये ऽवनयति । ततो यावान्प्रातःसवनायालं

---

१ Only AH are in good order and complete. M is confused; LTV omit the atigrāhyas.

२ स ध्रुव० R; सुध्रुव० H; MLAV om. स; सन्ध्रुव० B.

तावन्तं पूतभृति च[1] । पञ्चहोत्रा यजमानः सर्वान् ग्रहानभिमृशति ॥ १८ ॥

द्रप्सश्चस्कन्देत्येतैः प्रतिमन्त्रमध्वर्युप्रस्तोतृप्रतिहर्त्रुद्गातृब्रह्मयजमानप्रतिप्रस्थातारः सप्त यथावेदं वैप्रुषान्सप्तहोतारं च हुत्वा यथोक्तक्रमसमन्वारब्धा अध्वर्युप्रथमाः प्रह्वा उदञ्चो निष्क्रामन्ति । गायत्रः पन्था वागग्रेगा इति द्वाभ्यां बर्हिर्मुष्टिमध्वर्युरीषद्धून्वन्पूर्वं[2] निष्क्रामति । दक्षिणेन चात्वालमन्तर्वेद्युत्तरस्मिन्वेद्यंस उपविश्य चात्वालमवेक्षमाणास्त्रिवृता बहिष्पवमानेन स्तुवते । पवमानस्तोत्राण्युपाकुर्वन्वायुर्हिंकर्तेति प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छत्यन्यानि स्तोत्राण्युपाकुर्वन्नसर्ज्यसर्जीति बर्हिषी प्रयच्छति ॥ १९ ॥

वस्व्यै हिंकुर्विति पुरा बहिष्पवमानाद्यजमानो जपति व्याहृतीर्दशहोतारं च । तत्र पञ्चम्यां प्रस्तुतायां श्येनो ऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेति यथालिङ्गं जपति । तस्मादेवं विदुषा बहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पवयत इत्युक्तमध्वर्युवर्जं[3] । यजमानः स्तुतस्य स्तुतमसीति सर्वं स्तोत्रमनुमन्त्रयते शस्त्रस्य शस्त्रमसीति सर्वं शस्त्रमिन्द्रियावन्त इत्युभयत्रानुषजति । स्तोत्रान्ते ऽध्वर्युस्तिष्ठन्नग्नीदग्नीन्विहर बर्हि स्तृणाहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातः पशुनेहीति संप्रेष्यत्याग्नीध्रीयादाग्नीध्रो ऽङ्गारैर्धिष्णिया-

---

१ च ins. ATV, om. MLHR.—Moreover, as RHB present the reading पूतभृतं, it is possible that a passage corresponding to Āp. XII. 16. 11, where the three pavamānagrahas are treated, has fallen out. At least the Vyākhyā treats of these " grahas "

२ पूर्वं HRM; पूर्ववत् TLABV.

३ See TS. VI. 4. 9. 2.

न्यथान्युप्तं तैरेव मन्त्रैर्द्वे सवने विहरति शलाकाभिस्तृतीयं[1] सवनमध्वर्युर्होतृचमसे परिप्लवया द्रोणकलशाद्राजानं चतुर्गृहीतं प्रचरण्यामाज्यं पञ्चगृहीतं च गृहीत्वा पुरस्तात्प्रत्यङ्ङासीनस्तैरेव मन्त्रैर्यथान्युप्तं धिष्णियान्व्याघारयति सोमेनाहवनीयमाग्नीध्रीयं होत्रीयं मार्जालीयं चाज्येनेतराननतिहाय वषट्करोति । भक्षेह्यश्विनोस्त्वेत्यवेक्षणसंग्रहणावन्येनाह्रियमाणे सोमभक्षे स्वगते तु सोमे नृचक्षसं त्वेत्यवेक्षते । ॥ २० ॥

मन्द्राभिभूतिरिति यथालिङ्गं त्रिषु सवनेषु सर्वसोमान्भक्षयति । वाग्देवी सोमस्य पिबत्विति वा सर्वत्र भक्षयति । हिन्व म इति भक्षयित्वात्मानं प्रत्यभिमृश्य मार्जालीये पात्रं प्रक्षाल्य यथायतनं सादयति । गार्हपत्याद्यज्ञस्य संततिरसीत्याग्नीध्रः संततमनुपृष्ठ्यमाहवनीयाद्बर्हिः स्तीर्त्वा पुरोडाशानलंकरोति । यजमानो वैष्णव्यर्चा पुनरेत्य ग्रहानुपतिष्ठते विष्णो त्वं नो अन्तम इत्येतयैवाध्वर्युः पात्राणि संमृशति । प्रतिप्रस्थाता पशुनेति[2] । या वां कशा मधुमत्यश्विनेत्याश्विनं ग्रहमध्वर्युर्गृह्णाति । परिप्लुना[3] द्विस्रक्तिपात्रे द्रोणकलशादुपस्तीर्य पूतभृत उन्नीय द्रोणकलशादभिघारयत्येवमधाराग्रहाणां सर्वेषां कल्पस्त्रिवृता दैक्षमेव यूपं परिवीयाग्नये त्वा जुष्टमुपाकरोमीति तं सवनीयमुपाकरोति । हुतायां वपायां प्रातःसवनाय प्रसर्पन्ति । द्वौ समुद्राविति ग्रहावकाशैर्ग्रहानवेक्षते ॥ २१ ॥

---

१ तृतीयसव० H; तृतीयं स० MLATBV.

२ पशुनेति AH; पशुनैति LTV; पशुनैत्वीति M; पशुनेत्वीति B.

३ परिप्लुना MAVT; परिप्लवाना L; परिप्लवा B; परिप्लवना H: cp. XV. 27; above (XV. 2) it is called परिप्लवा.

द्वौ समुद्राविति पूतभृदाधवनीयौ । द्वे द्रधसौ इति द्रोणकलशं । परिभूरग्निमिति सर्वं सोमं । प्राणाय म इत्युपांशुग्रहमपानाय म इत्यन्तर्यामं । व्यानाय म इति जन्तुप्रतिमं ग्रावाणं । वाचे म इत्यैन्द्रवायवं । दक्षक्रतुभ्यां म इति मैत्रावरुणं । चक्षुर्भ्यां म इति शुक्रामन्थिनौ । श्रोत्राय म इत्याश्विनमात्मने म इत्याग्रयणमङ्गेभ्यो म इत्युक्थ्यमायुषे म इति ध्रुवं । तेजसे मे वर्चोदा वर्चसे पवस्वेत्याज्यानि । पशुभ्यो मे वर्चोदा वर्चसे पवस्वेति पृषदाज्यं । पुष्ट्यै मे वर्चोदा वर्चसे पवध्वमिति सर्वान्ग्रहान्स्तनाभ्यां मे वर्चोदौ वर्चसे पवेथामित्यृतुपात्रे । वीर्याय म इति षोडशिनं । तेजसे म ओजसे मे वर्चसे म इत्यतिग्राह्यान्विष्णोर्जठरमसीति द्रोणकलशमिन्द्रस्य जठरमसीत्याधवनीयं । विश्वेषां देवानामिति पूतभृतं । वर्चोदा वर्चसे पवस्वेति सर्वत्रानुषजति । को ऽसि को नामेति सर्वं राजानमाहवनीयं वा । बुभूषन्ब्रह्मवर्चसकाम आमयाव्यभिचरन्वा सर्वं राजानमवेक्षेत । ॥ २२ ॥

स्फ्यः स्वस्तिरित्युत्करे निक्षिप्य वेदिकरणानि यथारूपमुपतिष्ठते । यज्ञिया[1] यज्ञकृतः[1] स्थेति सर्वाणि यज्ञोपकरणान्युप मा द्यावापृथिवी इति द्यावापृथिवी । उपास्ताव इति वेद्युत्तरांसबर्हिष्पवमानास्तावमुप कलश इति कलशमुप सोम इति सोममुपाग्निरित्यग्निमुप देवा इति देवानुप यज्ञ इति यज्ञमुप मा होत्रा उपहवे ह्वयन्तामिति होत्रकान् । ह्वयन्तां ह्वयेतां ह्वयतामिति यथारूपं सर्वत्रानुषजति । नमो ऽग्नये मखघ्न

१ Thus HB (cp. TS. III. 2. 4. a); यज्ञाय यज्ञकृतस्थेति AMLTV.

इत्याहवनीयं । नमो रुद्राय मखघ्न इत्याग्नीध्रीयं । नम इन्द्राय मखघ्न इति होत्रीयं । नमो यमाय मखघ्ने नमस्कृत्या मा पाहीति मार्जालीयं । दृढे स्थः शिथिरे समीची इति द्यावापृथिवी अधिषवणफलके वा । सूर्यो मा देवो दिव्यादंहसस्पात्विति सूर्यं । वायुरन्तरिक्षादिति वायुमग्निः पृथिव्या इत्यग्निं । यमः पितृभ्य इति यमं । सरस्वती मनुष्येभ्य इति सरस्वतीं । पात्विति सर्वत्रानुषजति । देवी द्वाराविति सदसः पूर्वद्वारबाहू । नमः सदस इति सदो । नमः सदसस्पतय इति ब्रह्माणं । नमः सखीनां पुरोगाणां चक्षुष इत्यृत्विजो । नमो दिव इति दिवं । नमः पृथिव्या इति पृथिवीमुपस्थाय पूर्वेण ब्रह्मसदनं यजमानसदनमपरेणाहे दैधिषव्येति स्वायतनात्तृणं लोष्टं वा बहिःसदनं[1] निरस्योन्निवत उद्वतश्च गेषमिति यजमान उपविशति । ॥ २३ ॥

पातं मा द्यावापृथिवी इत्युपविश्य जपति । द्यावापृथिवी समीचत इत्येक । आगन्त पितरः पितृमानिति दक्षिणार्धे परेक्षते । ऽध्वर्युः सदसः पूर्वद्वारस्य दक्षिणबाहुमपरेणैव[2] तृणनिरसनादि कृत्वा यजमानवज्जपत्येवं प्रतिप्रस्थाताहवनीयादीनुपस्थायोत्तरेण द्वार्बाहुमुपविश्य तृणनिरसनादि कृत्वा जपति । वषट्कर्तारश्चैवं[3] स्वस्वमेव धिष्ण्यमनूपविश्य[4] जपन्ति । तथोद्गातार औदुम्बरीं पर्युपविशन्ति । एवं ब्रह्मा सदसस्य दक्षिणत

१ ? ०सदसान्निरस्य A; ०सदनं नि० MLTHV; ०सदसो नि० B.

२ ०नैवं AHB; ०नैव MLTV.

३ ०श्चैवं MLTHBV; ०श्चैव A.

४ अनूपविश्य HB; अनुप्रविश्य A; प्रविश्य MLTV.

उदङ्मुखावुपविशतो । ऽत्र पशुं विशास्याधिश्रयति[1] । सर्वाणि सवनानि श्रप्यमाणो भवति[2] । ॥ २४ ॥

अथाग्नीध्रो ऽपरेण गार्हपत्यमुपविश्य पात्र्यां मध्यतः पुरोडाशस्योपस्तृणाति पूर्वेण धानानां दक्षिणेन करम्भस्यापरेण परिवापस्योत्तरेणामिक्षायास्तान्युद्वास्योपस्तीर्णेषु पात्र्यां निधायालंकृत्यादाय निष्क्रम्योत्तरेणाग्नीध्रीयं पर्याहृत्यान्तर्वेद्यासादयति[3] । तैरध्वर्युः प्रचरत्येषां दैवतानि जुह्वामुपस्तीर्यावदायाभिघारयत्येवमुपभृति[4] सौविष्टकृतानि । प्रातः प्रातःसावस्येन्द्राय पुरोडाशानामनुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्राविते प्रातः प्रातःसावस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति संप्रेष्यति । वषट्कृते जुहोत्यौपभृतं जुह्वां विपर्यस्याग्नये ऽनुब्रूहीति स्विष्टकृति[5] संप्रेष्यत्याश्राव्य प्रत्याश्राविते ऽग्नये प्रेष्येति संप्रेष्यति । वषट्कृते हुत्वा प्राशित्रमवदायेडामवद्यति । तां परिहृत्य होत्रे द्विदेवत्यैः प्रचरितुं हविर्धानं गच्छन्वायव[6] इन्द्रवायुभ्यामनुब्रूहीति संप्रेष्यति । तच्छ्रुत्वा प्रतिप्रस्थातादित्यपात्रेणोपयामगृहीतो ऽसि वाक्षसदसीति द्रोणकलशादैन्द्रवायवस्य प्रतिनिग्राह्यं गृहीत्वा न सादयति । ततः परिप्लवया च राजानमध्वर्युरैन्द्रवायवमादत्ते ॥ २५ ॥

प्रतिप्रस्थातोत्तरतः परिधौ[7] स्पृष्ट्वाध्वरो यज्ञो ऽयमस्तु देवा

---

१ ०श्रयति MLATV; ०श्रयन्ति HB.

२ The last two words missing in TL: in V a blank has been filled up with these two words; cp. Hir. VIII. 14, end.

३ ०वेद्यासाद० LH; वेद्या आसाद० M; ०वेद्यां साद० ATBV.

४ एवम् om. H.

५ ०कृति ML; ०कृत H; ०कृदिति TVB (A incomplete).

६ गत्वा H instead of गच्छन्.

७ परिधौ H; परिधि A; परिधिं MLTV; परिधीन् B.

इति परिप्लवयाघारयति । यथोपांशुग्रहो हूयते ऽत्र सर्वाः सोमाहुतीर्जुहोत्याश्राव्य प्रत्याश्राविते वायव इन्द्रवायुभ्यां प्रेष्येति संप्रेष्यति । वषट्कृत उभौ जुहुतः । पुनर्वषट्कृते च यजमानो हूयमाने हुते वा भूरसीत्यादित्यमुपतिष्ठते । यो न इन्द्रवायू अभिदासतीति यदि श्रेयसा स्पर्धेत हुते ऽङ्गुल्याङ्गुष्ठमवबाधते । यदि पापीयसा विपरीतमथ प्रतिप्रस्थाताध्वर्योः पात्रे प्रतिनिग्राह्य-पात्रस्य शेषमवनयत्यध्वर्युश्च प्रतिप्रस्थातुः पात्रे । देवेभ्यस्त्वेति प्रतिप्रस्थातादित्यस्थाल्यामादित्यपात्रेण संस्रावयत्यध्वर्युर्होतारमभ्येत्य[1] मयि वसुः पुरोवसुरित्यैन्द्रवायवं होत्रे भक्षं प्रयच्छत्येतेन यजुषा प्रतिगृह्य होता दक्षिणोरौ निधाय हस्ताभ्यां निगृह्यास्ते । तथोत्तराभ्यां यथादेवतं प्रचरतस्तयोराघारपुनर्वषट्कारौ न भवतः । ॥ २६ ॥

उपयामगृहीतो ऽस्यृतसदसीति मैत्रावरुणस्य प्रतिप्रस्थानग्रहो । मित्रावरुणाभ्यामनुब्रूहि मित्रावरुणाभ्यां प्रेष्येति संप्रैषौ । धूरसीत्यादित्योपस्थानं । यो नो मित्रावरुणावभिदासतीत्यङ्गुष्ठावबाधनं । विश्वेदेवेभ्यस्त्वेत्यवनयनं । मयि वसुर्विदद्वसुरिति प्रदानप्रतिग्रहावुपयामगृहीतो ऽसि ऋतसदसीत्याश्विनस्य प्रतिप्रस्थानग्रहो । ऽश्विभ्यामनुब्रूह्यश्विभ्यां प्रेष्येति संप्रैषौ । विभूरसि श्रेष्ठो रश्मीनां व्यानपा व्यानं मे पाहीत्यादित्योपस्थानं । यो न ऽश्विनावभिदासतीत्यङ्गुष्ठावबाधनं । विश्वेभ्यस्त्वा देवेभ्य इत्यवनयनं । मयि वसुः संयद्वसुरिति प्रदानप्रतिग्रहौ । विष्णुरुरुक्रमेत्युपर्यर्धे सोम आदित्यपात्रेणादित्यस्थालीमपिदधात्या-

१ अभ्येत्य BMVTA; अभ्यत्य L; अभिप्रेत्य H.

धवनीयं पूतभृत्यवनीय दशापवित्रेण कलशं मृष्ट्वा न्युब्जत्युन्नीयमानेभ्यो ऽनुब्रूहि होतुश्चमसमनून्नयध्वमुभयतः शुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो मा त्वमुन्नेष्ठाः प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपलम्बस्वोन्नेतः सोमं प्रभावयेति संप्रेष्यत्या त्वा वहन्तु हरयो वृषणं सोमपीतय इत्युन्नीयमानसूक्तमुपस्थितेषु[1] मैत्रावरुणाद्या होत्रकाश्चमसिनो। होता ब्रह्मोद्गाता यजमानः सदस्य इति मध्यतःकारिणश्चमसिनः। प्रतिपुरुषं चमसाध्वर्यवो भवन्ति। नव दश वा चमसानुन्नयत्यच्छावाकचमसवर्जान्। परिप्लुना[2] द्रोणकलशादुपस्तीर्य पूतभृत उन्नीय द्रोणकलशादभिघारयत्येवं सर्वचमसानां। तेषून्नीतेषु सूक्ते चोपरते सुतो ऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्त्विति शुक्रग्रहमध्वर्युः सावित्रेणादत्ते। सुतो ऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्त्विति मन्थिग्रहं प्रतिप्रस्थाता सावित्रेणादत्ते। चमसांश्चमसाध्वर्यव आददते। प्रोक्षिताभ्यां शकलाभ्यां शुक्रामन्थिनावपिधायापनुत्तौ शण्डामर्कौ सहामुनेत्यप्रोक्षिताभ्यामधस्तात्पांसूनपध्वंसयतः। ॥ २७ ॥

ताभ्यामुपयम्योर्वन्तरिक्षमन्विहीति प्राञ्चौ निष्क्रामतः सुतो ऽसीति वा यथालिङ्गमिन्द्रेण[3] सयुजो वयमित्यान्तादनुवाकस्य शुक्रं यजमानो ऽन्वारभत आ होमादपरेणोत्तरवेदिं ब्रह्म संधत्तं तन्मे जिन्वतमित्यष्टाभिः संधाभिररत्नौ पात्रे वा

१ ? ०सूक्तमुपस्थितेषु AHB; सूक्त उपस्थिते MLTV.

२ Thus (not परिप्लवया) the Mss., cp. XV. 21.

३ Before इन्द्रेण HB ins. अच्छिन्नस्य ते रयिपते सुवीर्यस्य, cp. Hir. X. 13.

संधत्तो । विसृजन्तावुत्तरवेदिश्रोण्यां पात्रे निधत्तो दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थातानाधृष्टासीत्यङ्गुष्ठाभ्यामुत्तरवेदिमवगृह्य व्यपरिफन्ताविवोत्तरवेदिं[1] विपरिक्रामतः । सुवीराः प्रजा इति दक्षिणेनाध्वर्युर्ग्रहं प्राङ्[2] हरति । सुप्रजाः प्रजा इत्युत्तरेण प्रतिप्रस्थाता संजग्मानौ दिव आ पृथिव्याः[3] शुक्रः शुक्रशोचिषेति चाध्वर्युः संजग्मानौ दिव आ पृथिव्या[4] मन्थी मन्थिशोचिषेति च प्रतिप्रस्थातान्तरेण यूपमाहवनीयं चारत्नी पात्रे वा संधत्त आयुः संधत्तं तन्मे जिन्वतमित्यष्टाभिरायुः स्थ आयुर्मे धत्तमिति शुक्रामन्थिनावभिमन्त्रयते । ॥ २८ ॥

संधाभिश्च संधाय व्युत्क्रामतस्तौ देवौ शुक्रामन्थिनावित्यथाप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो निरस्तः शण्डः सहामुनेत्यध्वर्युर्निरस्तो मर्कः सहामुनेति प्रतिप्रस्थातापनुत्तौ शण्डामर्कौ सहामुनेत्यप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतो[5] यं द्विष्यात्तं मनसा ध्यायतो । ऽध्वर्युः शुक्रस्य समिदसि शुक्रैषा ते समित्तया समिध्यस्वेति प्रोक्षितं शकलमभिदधाति । मन्थिनः समिदसि मन्थिन्नेषा ते समित्तया समिध्यस्वेति प्रोक्षितं शकलं प्रतिप्रस्थातै । तस्मिन्काले चमसाध्वर्यवश्चमसानुपोद्यच्छन्ते । दक्षिणेन यूपमध्वर्युः प्रत्यङ् तिष्ठत्युत्तरेण प्रतिप्रस्थातापरेणोत्तरवेदिं प्राञ्चश्चमसाध्वर्यवस्तिष्ठन्त्यध्वर्युः प्रातः प्रातःसावस्य शुक्रवतो

---

१ व्यपरिफन्ता० A; व्यपरिफरिता० M; व्यपरिघन्ता० LTV; HB corrupt. The Vyākhyā periphrases: पीडयन्तौ; cp. Āp. XII. 22. 7.

२ प्राङ् MB; प्रां H; प्राघ्घरति LTV.

३ पृथिवी MLATV; पृथिव्यायुः HB; cp. Hir. VIII. 17.

४ पृथिव्यायुर्मन्थी MLB; पृथिवीं A; पृथिव्या H; पृथिवी TV.

५ Thus the Mss.; read perhaps निरस्य.

मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य मध्यतःकारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृताञ्जुहुत होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपवर्तध्वमिति संप्रेष्यति । ॥ २९ ॥

वषट्कृते युगपत्सर्वे जुह्वत्यनुवषट्कृते न होत्रकाणां चमसाध्वर्यवो जुह्वति । ते चमसेषु द्रोणकलशात्पुनः सोममभ्युन्नीयोपावर्तन्ते । तस्मा इन्द्राय सुतमाजुहोमि स्वाहेत्यध्वर्युस्तस्मै मित्राय सुतमाजुहोमि स्वाहेति प्रतिप्रस्थाता । सूदवच्छुक्रपात्रं सादयत्युत्तरपूर्वस्यां बहिःपरिध्याहवनीयादङ्गारान्निर्वर्त्यैष ते रुद्र भागो यं निरयाचथा इति तस्मिन्नेतं मंथिनः संस्रावं प्रतिप्रस्थाता जुहोति[1] । प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्रयन्तु सदस्यानामिति संप्रेष्यति । मध्यतःकारिणां चमसाध्वर्यवः सदो भक्षान् हरन्ति । पुनरभ्युन्नीतैश्चमसैर्होत्रकानध्वर्युर्याजयति । मैत्रावरुणचमसमादायाश्राव्य प्रत्याश्राविते प्रशास्तर्यजेति संप्रेष्य वषट्कृतानुवषट्कृते च हुत्वा तं चमसाध्वर्यवे प्रयच्छति । स च तं प्रशास्त्रे हरत्येवं ब्रह्मचमसमादायाश्राव्य प्रत्याश्राविते ब्रह्मन्यजेति संप्रेष्यति । पूर्ववद्धुत्वा भक्षं हरत्येवं पोतर्यजेति पोतारं नेष्टर्यजेति नेष्टारमग्नीद्यजेत्याग्नीध्रं संप्रेष्य वषट्कृतानुवषट्कृतेषु हुतेषु भक्षेषु सदो हृतेष्वयाडग्नीदिति होतुराचष्टे । ॥ ३० ॥

स भद्रमकर्यो नः सोमं राजानां पाययिष्यतीतीरे प्रत्याहु।र्न वैश्यराजन्यौ सोमं भक्षयतस्तौ यदि पिपासेते न्यग्रोधस्तिभिनीः संपिष्य रसं दधन्युन्नीय यजमानचमसोन्नयनक्रमे ऽस्माद्यजमानचमसमुन्नयत्यन्येषु[2] सोमचमसेषु ह्रयमानेषु यजमानचमसाद्भ-

---

१ This word seems to be missing in all my Mss.

२ ०क्रमेऽस्माद्यजमान० MLTV ; ०क्रमेद्यस्माद्यजमान० AHB.

तरुणेनोपहृत्यान्तःपरिध्यङ्गारान्व्यस्य तस्मिन्नहं त्वदस्मीति हुत्वा तं यजमानाय भक्षं प्रयच्छेद्द्विदेवत्यान् भक्षयन्ति । होमाभिषवनिमित्तो ऽध्वर्युभक्षो वषट्कारनिमित्तो वषट्कर्तॄणां भक्षः समाख्यानाच्चमसिनां । वषट्कर्ता प्रथमं भक्षयति ततो ऽध्वर्युरथ चमसी[1] । द्विदेवत्यभक्षेषु होताध्वर्युः प्रतिप्रस्थाता चैवमनुपूर्वा भवेयुरन्योऽन्यस्मिन्नुपह्वमिच्छेयुरुपह्वयस्वेत्यनुमन्त्रण उपहूत इति प्रतिवचनो । नानुपहूतेन सोमः पातवै सोमपीथेन ह व्यर्धुको भवतीति विज्ञायते[2] । द्विरैन्द्रवायवं भक्षयतीतरौ सकृत् । पुरस्तादैन्द्रवायवमादाय प्राणेषूपनिगृह्याव्युत्सृजन्तौ पात्रं समुपहूय भक्षयतः । ॥ ३१ ॥

अन्वारब्धे ऽध्वर्यौ होता भक्षयति । तथान्वारब्धे होत्राध्वर्युर्मयि[3] वसुः पुरोवसुरिति भक्षयत्यथ होता भक्षयत्यथाध्वर्युस्तद्धोता[4] सूदवद्यथायतनं सादयत्येवं मैत्रावरुणमादाय चक्षुषोरुपनिग्राह्यमन्वारब्धे ऽध्वर्यौ भक्षयति । तथा होत्राध्वर्युर्मयि वसुः विदद्वसुरिति । तदपि सूदवद्यथायतनं सादयति । सर्वतः परिहारमाश्विनमादाय श्रोत्रयोरुपनिग्राह्यमन्वारब्धे ऽध्वर्यौ होता तथा होत्राध्वर्युर्मयि वसुः संयद्वसुरिति भक्षयति । यथायतनं सूदवत्सादयति । भक्षितानि पात्राणि[5] नोत्सृजत्यावनयनाच्छेषं[5]

---

१ चमसी H (and cp. Hir.); चमसिनो MLATV; चमसीद्वि° B.

२ In the Kāṭhaka, cp. Āp. XIV. 24. 14.

३ Thus TV; होताध्व° MLATB.

४ The words: अथ होता भक्षयति given by AH, are omitted by MLTBV.

५ पात्राणि नोत्सृजत्या° ALTV; पात्राण्यभ्युत्सृ° M; पात्रानभ्युत्सृ° H; पात्रानभ्युत्सृ° B.

होतृचमसे ऽवनीय पुरोडाशशकलमैन्द्रवायवस्य पात्रे ऽवदधाति पयस्यां मैत्रावरुणस्य धाना आश्विनस्य । तानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां सादयत्यां तृतीयसवनात्परिशेरे यज्ञस्य संतत्या इति विज्ञायते[१] । द्विदेवत्यान्भक्षयित्वेडामुपह्वयत । उपह्वयमानामुपोद्यच्छन्ते[२] चमसांश्चमसाध्वर्यवो । होतृचमसमास्पृष्टं[३] धारयत्युपहूतामिडां ब्रह्मा होताध्वर्युरग्नीद्यजमानश्चाग्नीध्रे प्राश्नन्ति । ॥ ३२ ॥

इडाशकलमच्छावाकायाग्नीध्रे निदधाति । सवनीयानां पुरोडाशानां शाखाप्रहरणान्ते कृते वाजिनमासन्नमुत्करादादाय तेन वैश्वदेववच्चरति । सवनीयानां वेदो ऽसि वित्तिरसीति वेदाभिमर्शनादि कर्म प्रतिपद्यते । स्वं स्वं चमसं चमसिनो भक्षयन्ति भक्षमन्त्रेण । सर्वांश्चमसान्प्रथमो होता सकृत्सकृद्भक्षयति । पुनरभ्युन्नीतानध्वर्युस्तैस्तैर्भक्षितान्भक्षयति[४] । तृतीयं होत्रका भक्षयित्वा सर्वेषांश्चमसानाप्यायस्व समेतु त इत्याप्याययन्ति । तान्दक्षिणस्य हविर्धानस्यापरेणाक्षमुदगपवर्गानधो निदधति[५] । ते नाराशंसा भवन्त्यच्छावाको ऽग्रेण स्वं धिष्णियं बहिःसदसमास्त[६] । ऽच्छावाक वदस्व यत्ते वाद्यमिति तस्मै महत् पुरोडाशशकलं प्रयच्छन्नध्वर्युराहोपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्व-

१ See TS. VI. 4. 9. 5.

२ ०ह्वयमानामुपो० H; ०ह्वयमानमुपो० MLATV; उपह्वययजमानमुपो० B.

३ Thus B; होतृचमससमास्पृष्ट्वां A; होतृचमसास्पृष्ट H; होतृचमसमिडास्पृष्टं MLTV.

४ ध्वर्युस्तैस्तैर्भक्षितान्भक्षयति MLTV; ०ध्वर्युभक्षितान्भक्षयति AHB.

५ निदधाति AHB; निदधति MLTV; cp. XV. 36, end.

६ Thus HB; ०सदस आस्त MLTAV.

मित्यनुब्रवत्यच्छावाके प्रत्युपहवमयं[1] ब्राह्मण इच्छते तं होतरुपह्वयस्वेत्याह । तमृचा होतोपह्वयत[2] । उन्नयस्वोभयतःशुक्रं कृणुष्वेति संप्रेष्यति । तथा करोति । तस्मिन्परिहिते ऽच्छावाकचमसमादायाश्राव्य प्रत्याश्राविते ऽच्छावाक यजेति संप्रेष्य वषट्कृतानुवषट्कृते हुत्वा हरति भक्षं । नास्मिन्नुपहवमिच्छते । यद्यस्मिन्नच्छावाक उपहवमिच्छेत भक्षयेत्येव ब्रूयाद्भक्षिताप्यायितमन्तरा नेष्टुराग्नीध्रस्य च चमसौ सादयति । स नाराशंसो भवति । ॥ ३३ ॥

उपयामगृहीतो ऽसि मधुश्चेति प्रतिमन्त्रं पूर्वेण पूर्वेण मन्त्रेणाध्वर्युरुत्तरेणोत्तरेण प्रतिप्रस्थाता ग्रहेण परिगृह्णाति । दक्षिणेन निष्क्रामन्तमितरेण[3] प्रविशन्तं पात्रेण पूर्वस्य पूर्वस्य शेषमुत्तरमुत्तरमभिगृह्णीत । आश्राव्य प्रत्याश्रावित ऋतुना प्रेष्येति त्रिरध्वर्युराह त्रिः प्रतिप्रस्थाता । पात्रयोर्मुखे विपर्यस्याश्राव्य प्रत्याश्रावित ऋतुभिः प्रेष्येति द्विरध्वर्युराह द्विः प्रतिप्रस्थाता । पुनर्मुखे विपर्यस्याश्राव्य प्रत्याश्रावित ऋतुना प्रेष्येति सकृदध्वर्युराह सकृत्प्रतिप्रस्थाता । यस्य त्रयोदशचतुर्दशावृतुग्रहौ[4] गृह्येते तस्योपयामगृहीतो ऽसि संसर्पो ऽस्यंहस्पत्याय त्वेति गृह्णीतः । ॥ ३४ ॥

---

१ ? प्रत्युपह्वव० ALTV; सत्युप० HMB.

२ तमृचा होतोपह्वयते MLTV; तमृचाहोपह्वयस्व(ति) होतारं प्रेष्यत्यु० HAB.

३ निष्क्रामन्तमितरेण प्रविशश्पात्रेण H; निष्क्रामंतरेण प्रविशत्पात्रेण A; निष्क्रामन्तमन्तरेण प्रविशंतं पात्रेण MLTV; निष्क्रामन्तमन्तरेण प्रविशत्पात्रेण B.

४ ? ०चतुर्दशवर्तुग्रहौ TV, ०चतुर्दश वा ऋतुग्रहौ H; ०चतुर्दशग्रहौ M; चतुर्दशर्तुग्रहौ L; ०चतुर्दशातुग्रहेन A; ०चतुर्दश वा ऋतुग्रहेन B.

अध्वर्यू यजतमित्यभिज्ञाय होतरेतद्यजेति संप्रेष्यति स्वयं वा निषद्य यजतो । गृहपते यजेत्यभिज्ञायैवं गृहपतिर्द्विदेवत्यवदध्वर्योः पात्रे प्रतिप्रस्थाता शेषमवनयत्यतिरिक्तस्यैकदेशमध्वर्युः प्रतिप्रस्थातुः पात्रे । यस्य यद्वषट्कारे जुह्वतस्तं तं होतारं पोतारं नेष्टारमाग्नीध्रं ब्राह्मणाच्छंसिनं मैत्रावरुणं प्रतिसंभक्षतो । ऽप्यन्यदेवतमिन्द्रपीतस्येत्येव[1] ब्रूयादृतुना पीतस्येति यथादेवतं वा । विपर्यस्य पात्रं होतारं पोतारं नेष्टारमच्छावाकमृतुभिः पीतस्येति संभक्षयतो । विपर्यस्य होतारं प्रतिभक्षयत ऋतुना पीतस्येति । मार्जालीये प्रतिप्रस्थाता पात्रं प्रक्षाल्यायतने सादयती।न्द्राग्नी आगतꣳ सुतमित्यध्वर्युः स्वेन पात्रेणाभक्षितेनैन्द्राग्नं ग्रहं कलशाच्छ्रवन्तं गृह्णाति । तं सादयित्वा होतुः पुरस्तात्प्राङासीन इडा देवहूरिति शस्त्रं प्रतिगरिष्यन् जपत्यध्वर्यो शोꣳसावोमिति यद्वै होताध्वर्युमभ्याह्वयते तस्मिन्काल उत्तिष्ठन्प्रदक्षिणं पर्यावर्तमानः शोꣳसा मोद इवेति प्रत्याह्वयते । ततो ऽभिमुखस्तिष्ठन्प्रह्वो मोदा मोद इवोमिति त्रिरर्धर्चे प्रतिगृणाति । ॥ ३५ ॥

प्र वो देवायाग्नय इत्यभिज्ञायोथा[2] मोद इवेत्यर्धर्चे ओमोथा मोद इवोमित्यवसाने[3] । नार्धर्चाल्लुप्यते । नाभिप्रतिगृणात्युभयं व्याहावे करोति शोꣳसा मोद इवोथा मोद

१ एवं all the Mss.

२ Thus MLTV; after अभिज्ञाय AB read: तन्नास्ते (तन्नास्ति) प्रतिकरस्त ओ ओथा मोदेवेति द्विरर्धर्चे ओम्; H: तन्नास्ति प्रतिप्रस्थाता ओथा मोदेवेति द्विरर्धर्चे ओम्.

३ After अवसाने BMA ins.: उक्थशा इत्यन्ते सर्वेष्वपिकारेण वा; similarly H.

इवेति । यत्र क्व च होता विरमेदोथा मोद इवेति ब्रूयात्सर्वशस्त्राणामेवं कल्प । उक्थशा इति सर्वशस्त्रान्ते सवनान्ते वा जपति[1] । शस्त्रं प्रतिगीर्य प्राङेत्यैन्द्राग्नं ग्रहमादत्ते तमनूद्यच्छन्ते चमसांश्चमसाध्वर्यव । आश्राव्य प्रत्याश्रावित उक्थशा यज सोमस्येति संप्रेष्यति । वषट्कारादनु जुहोति[2] नाराशंसांश्चानुप्रकम्पयन्ति । ग्रहनाराशंसानामुक्तानि भक्षणाप्यायनसादनान्योमासश्चर्षणीधृत इति शुक्रपात्रेण वैश्वदेवं कलशात्स्तुतशस्त्रवन्तं गृह्णात्य । संर्ज्यसजौति बर्हिर्भ्यां पञ्चदशस्तोत्रमुपाकरोती । डायै हिंकुरु तस्यै प्रस्तुहि तस्यै स्तुहि तस्यै मेऽवरुद्ध्या इति पुरस्तादाज्यानामेकैकस्य स्तोत्रस्य यजमानो जपति व्याहृतीश्च चतुर्होतारं पञ्चहोतारं च । प्रवृत्ते स्तोत्र इडा देवहूरिति पूर्ववज्जपित्वा शस्त्रं प्रतिगीर्य प्राङायन्वैश्वदेवग्रहमादायाश्राव्योक्थशा[3] यज सोमस्येति संप्रेष्य वषट्कारानुवषट्कारे हुत्वानुप्रकम्प्य सर्वभक्षा ग्रहनाराशंसास्तान्मार्जालीये[4] प्रक्षाल्य निदधति[5] । ॥ ३६ ॥

उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेत्युक्थ्यस्थाल्यास्तृतीयं राजानं स्तुतशस्त्रवन्तं गृह्णात्येष ते योनिर्मित्रावरुणाभ्यां त्वेत्यायतने सादयति । पुनर्हविरसीति स्थालीं प्रत्यभिमृशति । मैत्रा-

---

१ Thus MLTV; सर्वत्र प्रातः प्रातः सवने जपति HAB.

२ ? ०कारादनुजुहोति MLA; ०काराग्नुजु० TVB; वषट्कारवज्जुहोति H.

३ ? प्राग्द्या A; प्रद्रायन् H; प्रजायन् ML, प्राजाय् T; प्राजायन् V; प्राङ्द्रायन् B.

४ Thus MLTV; सर्वभक्षान् ग्रहचमसान्न मार्जा० A; समुभक्षयाश्चमसांस्त मार्जा० H; सर्वभक्षाग्रहश्चमसास्तान्मार्जा० I am uncertain about the right reading.

५ निदधति MLA; निदधाति THBV; cp. XV. 33.

वरुणचमसमुख्यान् दश चमसानुन्नयति । पूर्ववत्स्तोत्रमुपाकृत्य स्तुते शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसांश्चमसाध्वर्यव । आश्राव्य प्रत्याश्रावित उक्थशा यज सोमानामिति संप्रेष्यति । वषट्कृतानुवषट्कृते जुहोति । हरन्ति भक्षांस्त्रिषूक्थ्यविग्रहेषु नाराशंसा न भवन्ति । देवेभ्यस्त्वा देवयुवं पृणज्मि यज्ञस्यायुषे जुष्टमिति मैत्रावरुणचमसे ग्रहशेषमवनयति बाह्यतः सद आलभ्य कृतं त्वाकृते ऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्य इति वा । मैत्रावरुणं चमसमध्वर्युरुपह्वय भक्षयति यथाचमसं चमसान्प्रथमो मैत्रावरुणो सकृद्भक्षयति स्वचमसे द्विर्भक्षिते ऽध्वर्युः सकृद्भक्षयति । तृतीयं मैत्रावरुणो ऽन्ततो भक्षयित्वा चमसान्खरे सादयन्ति[1] । प्रतिप्रस्थातैवं[2] विहितावुत्तरौ गणौ । ताभ्यां प्रतिप्रस्थाता चरत्युपयामगृहीतो ऽसीन्द्राय त्वेत्युक्थस्थाल्या अर्धं राजानं स्तुतशस्त्रवन्तं गृह्णाति । ॥ ३७ ॥

एष ते योनिरिन्द्राय त्वेत्यायतने सादयति । पुनर्हविरसीति स्थालीं प्रत्यभिमृशति । ब्राह्मणाच्छंसिचमसमुख्यांश्चमसानुन्नयन्नेकस्मै चमसगणाय राजानमतिरेचयति । न प्रतिप्रस्थाता वायव्यपात्रे भक्षयति । ब्राह्मणाच्छंसिचमसे शेषमवनयत्यच्छावाकस्य चमसमनून्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिचो दशाभिः कलशौ मृष्ट्वा न्युब्जेति संप्रेष्यत्युपयामगृहीतो ऽसीन्द्राग्निभ्यां त्वेत्युक्थस्थाल्याः सर्वं राजानं स्तुतशस्त्रवन्तं गृह्णात्येष ते योनिरिन्द्राग्निभ्यां त्वेत्यायतने पूर्ववत्सादयति । न

---

१ The original reading of this passage is doubtful. AH differ considerably from MLT; cp. Hir., Vol. I, page 900.

२ Could प्रतिप्रस्थाता be interpolated?

स्थाल्यौ प्रत्यभिमृशति । स्तोत्रमुपाकृत्य शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसांश्चमसाध्वर्यव । आश्राव्य प्रत्याश्रावित उक्थशा यज सोमानामिति संप्रेष्यति । वषट्कृतानुवषट्कृताञ्जुकृत्यच्छावाकचमसे[1] ग्रहशेषमवनयति । यथाचमसं चमसान्पूर्ववद्भक्षयत्यग्निः प्रातःसवने पात्वस्मानिति संस्थिते सवनाहुतिं जुहोति । प्रशास्तः प्रसुहीति संप्रेष्यति । सर्पतेत्याह प्रशास्ता । यथेतं निःसृप्य[2] माध्यंदिनाय सवनाय देवौ द्वाराविति यथायतनं सर्वे संप्रसर्पन्ति संप्रसर्पन्ति । ॥ ३८ ॥

इति पञ्चदशः प्रश्नः ॥



१ ०कृते जु० MLTV; ०कृता जु० AH; ०कृताञ्जुहोति B.
२ निःसृप्य LATV; प्रसृप्य HMB.

अथ प्रस्थाप्याध्वर्युः संप्रस्थानभिषोतृनाग्नीध्रं ग्रावस्तुतं चाभिज्ञायाभिषोतारो ऽभिषुणुत ग्रावस्तुद्ग्राव्णो ऽभिष्टुह्यग्नीत्सवनीयान्निर्वपेति संप्रेष्यति। होतृचमसे वसतीवरीभ्यो ऽपो निःषिच्य तास्तथा निग्राभ्याः[1] कृत्वोपांशुसवनादन्यं ग्रावाणमादत्ते। विस्रस्य[2] राजानं ग्रावाणभि मिमीते पञ्च कृत्वो यजुषा मिमीते पञ्च कृत्वस्तूष्णीं। दश कृत्वो मिमानः सर्वं राजानं मिमीत। एवं मानादि माध्यंदिनं सवनं यथा प्रातःसवनमद्भिरभ्युक्ष्य ग्रावस्तुते सोमोष्णीषं प्रयच्छति। प्रारब्धे ऽभिषवे ग्रावस्तुद्ग्रावस्तोत्रीया अन्वाह। द्विदेवत्यर्तुग्रहैन्द्राग्नवैश्वदेवदर्विहोमास्तु[3] न विद्यन्ते। तथा मितं राजानं होतृचमसीयाभिः संतर्पयत्यदाभ्यांशुमुपांशुपावनौ[4] च मिते राजन्यपिसृज्याभिषुण्वन्तीहा[5] इहा[5] इहेति संराधयन्तः प्रथमपर्यायस्य प्रथमे ऽभिषवे ऽभिषुण्वन्तीहा[5] इहा[5] इहा[5] इहेति द्वितीये ऽभिषव इहा[5] इहा इहा[5] इति तृतीय। उत्तमस्य पर्यायस्य मध्यमे ऽभिषवे हृहदृहदित्यभिषुण्वन्त्युत्तमे वा। ततो ऽभिषुतं दशापवित्रेण प्रपीड्याधवनीये ऽवनीय पूर्ववदृजीषमुखान् ग्राव्णः करोति। ॥ १ ॥

देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुरिति प्रतिप्रस्थाता ग्राव्णो ऽनुमोदत। एकादशकपालं पशुपुरोडाशं निरुप्यामित्रावर्जं

१ निगाभ्याः MLTV; निग्राह्याः ATB and the Vyākhyā.

२ विस्रस H (विस्रस्य the Vyākhyā); विसृज्य MLTABV.

३ Read prob. with Hir.: ०वैश्वदेवा द०.

४ ०पांशुपावनौ LTVB, ०पांशुपावकौ पावनौ M; ०पांशवाचनौ AH; पांशसावनौ the Vyākhyā; cp. XVI. 10.

५ Instead of इहा probably each time इहा ३ is to be read.

सवनीयान्निर्वपति नास्य[1] पशुपुरोडाश इत्येके । ऽलंकृतेषु सवनीयेषु द्रोणकलशं ग्रावस्वध्यूहन्त उद्गातारो ऽधोऽधोऽक्षमुपकर्षन्ति[2] । धाराग्रहकाले[3] शुक्रामन्थिनावाग्रयणमुक्थ्यं च चतुरो ग्रहान् गृहीत्वाग्रयणं तिसृभ्यो धाराभ्यो गृहीत्वान्यात्र[4] तृतीयां धारां करोति मरुत्वन्तं वृषभमित्यृतुपात्रेणाध्वर्युर्मरुत्वतीयं गृह्णातीन्द्र मरुत्व इत्यृतुपात्रेण द्वितीयं प्रतिप्रस्थातात्र धारां विरम्य प्रपीड्य पवित्रं पूतभृति वितनोति । प्रसिद्धमेकधनानामाधवनीये ऽवनयनं । [5]राजानमतिपावयति । यावन्माध्यंदिनाय[6] सवनायालं तावन्तं पूतभृत्यवनीय[5] पवमानग्रहान् कलशं शुक्रामन्थिनावाग्रयणमुक्थ्यं च ग्रहावकाशैरुपस्थाय पूर्ववद्धुत्वा समन्वारब्धा माध्यंदिनाय पवमानाय निष्क्रामन्ति । त्रैष्टुभः पन्था रुद्रा देवता वागग्रेगा इति द्वाभ्यां दर्भमुष्टिमध्वर्युरोषद्धून्वन्पूर्वो[7] निष्क्रामत्युत्तरेण हविर्धाने गत्वोत्तरेणाग्नीध्रीयं धिष्णियं परीत्य पूर्वया द्वारा सदः प्रविश्याग्रेण होतारं ब्रह्मयजमानाध्वर्यवो ऽवतिष्ठन्ते । ॥ २ ॥

दक्षिणेनोद्गातारः प्रशास्तुर्धिष्णियं परीत्य माध्यंदिनेन पवमानेन पञ्चदशेन स्तुवते । ऽत्र सर्वे यथायतनमुपविशन्ति ।

---

१ नास्य LTV, नस्य AB, नस्या H (M defective).

२ ०मपकर्षन्ति HAB; ०चद्रुक० MLTV; cp. XV. 13.

३ धाराग्रह० MH; धाराग्राह० LTV; ०ग्रहण० AB.

४ ?? ०न्यागच्छ ML; ०न्याच TV, ०धिष्ण्यस्य AB; आश्राव्य च H. The Vyākhyā: धाराद्वयं प्रागुक्तवत् तृतीया तदन्तेन (?).

५ In AHB the words राजानमतिपावयति ... पूतभृत्यवनीय are inserted before अत्र धारां विरम्य.

६ R probably यावान् i.e. यावन्, cp. XV. 18 (end).

७ MLV ins. ऊर्ध्वं before धून्वन्.

ज्योतिषे हिंकुर्विति यजमानो जपति प्राक् स्तुतेः व्याहृतीश्चतुर्होतारं च । तस्यामष्टम्यां प्रस्तुतायां सुपर्णोऽसि त्रिष्टुप्छन्दा इति जपति[1] । स्तुतेऽध्वर्युरग्नीदग्नीन्विहर बर्हिं स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातर्दधिघर्मेणोदेहीति संप्रेष्यत्युक्तं धिष्णियानां व्याघारणं । पूर्वया द्वारा हविर्धानं प्रविश्य विष्णो त्वं नो अन्तम इति ग्रहानुपतिष्ठते पात्राणि च संमृशति । प्रतिप्रस्थाता ज्योतिरसि वैश्वानरं पृश्नियै दुग्धमिति दधिघर्ममवेक्ष्यौदुम्बर्यां स्रुचि कंसे चमसे वोपस्तीर्य यावती द्यावापृथिवी इति दधि गृहीत्वाभिघार्य वाक्च त्वा मनश्च श्रीणीतामित्याग्नीध्रीये ऽधिश्रित्य होतर्वदस्वेति संप्रेष्यति । यदि श्रातो जुहोतन यद्यश्रातो ममत्तनेति होतुरभिज्ञाय श्रातꣳ हविरिति प्रत्युक्त्वाहवनीयं गत्वाश्राव्य प्रत्याश्राविते दधिघर्मस्य यजेति संप्रेष्यति । यमिन्द्रमाहुर्वरुणं यमाहुरिति वषट्कृते जुहोति । ॥ ३ ॥

स्वाहा वडिन्द्रायेत्यनुवषट्कृते तूष्णीं वा हुत्वा हरति भक्षं । यावन्तः प्रवर्ग्यस्यर्त्विजस्तेषूपहवमिष्ट्वा भूर्भुवः सुवर्मयि त्यदिन्द्रियं महदिति यजमान एव प्रत्यक्षं भक्षयति सर्वे वाप्रवर्ग्ये सोमे दधिघर्मो न स्यान्मित्रो जनान्प्र स मित्रेति नाभिदेशमभिमृशन्ते । ऽत्र पूर्ववत्सवनीयप्रचारो । माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामनुब्रूहीति संनमति तथा माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति । वषट्कृते हुत्वा जुह्वामौपभृतं समो-

1 After जपति MBA and H ins. चतुर्होतारं व्याचष्टे, these words are not found in TLV.

प्याग्नये ऽनुब्रूह्यग्नये प्रेष्येति स्विष्टकृति संप्रेष्य हुत्वा प्राशित्रमवदायेडामवद्यती।डां होत्रे हृत्वाधवनीयं पूतभृत्यवनीय दशाभिः कलशं मृष्ट्वा न्युब्जत्यु।न्नीयमानेभ्यो ऽनुब्रूहि होतुश्चमसमनून्नयध्वमुभयतः शुक्रान् कुरुध्वमच्छावाकस्य चमसाध्वर्यो त्वमप्युन्नयस्व प्रतिप्रस्थातश्चतुर्भिः शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपलम्बस्वोन्नेतः सोमं प्रभावयेति संप्रेष्यति। होतृचमसमुख्यान् दशैकादश वा चमसानुन्नयति। ॥ ४ ॥

संप्रेषितं हुत्वाश्राव्य प्रत्याश्राविते माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य मध्यतःकारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृताञ्जुहुत होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमिति संप्रेष्यति। वषट्कृते हुत्वा प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्रयन्तु सदस्यानामिति संप्रेष्यति। प्रयन्त्येते मध्यतःकारिणां चमसा भक्षाय। पुनरभ्युन्नीतेषु सोमेषु होत्रकाः[1] प्रसर्पणमन्त्रैः प्रसृप्य यथायतनमुपविश्य पुनरभ्युन्नीतान्यजन्त्य।याडग्नीदिति होतुराख्यायेडामुपह्वयमानामुपोद्यच्छन्ते ॥ ५ ॥

चमसांश्चमसाध्वर्यवो। रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इति भक्षमन्त्रं संनमति। नाच्छावाकाय शकलं भवति। सन्नेषु नाराशंसेषु गवां द्वादशशतं सहस्रमपरिमितं सर्वस्वं वा शतं षष्टिश्चतुर्विंशतिरेकविंशतिर्द्वादश सप्त तिस्रो वा मन्थोदनं तिला माषा हिरण्यं वासश्चेति।

---

१ होत्रकाः AHB; होत्र (or तृ) कादि MLTV.

दक्षिणासु दक्षिणेन वेदिं तिष्ठन्तीषु वैसर्जनहोमवद्दाक्षिणानि जुहोत्युदु त्यं चित्रमिति सौरीभ्यां गार्हपत्ये जुहोत्याग्नीध्रीयं गत्वा चतुर्गृहीतं गृहीत्वाग्ने नयेति नयवत्यर्चाग्नीध्रीये जुहोति । दिवं गच्छ सुवः पतेति हिरण्यं हुत्वोद्गृह्णाति । यजमानो हिरण्यमुद्गृहीतमादाय रूपेण वो रूपमभ्यैमीति दक्षिणाः प्रदक्षिणमभ्येति । तुथो वो विश्ववेदा विभजत्विति गवां मध्यं प्रविश्य कृष्णाजिनेन संत्रास्य चतुर्धा विभजति । तांश्चतुरो भागान्महर्त्विग्भ्यो ददाति । ॥ ६ ॥

यावन्महर्त्विग्भ्यो ददाति तस्यार्धं द्वितीयेभ्यस्तस्य तृतीयं तृतीयेभ्यश्चतुर्थं चतुर्थेभ्य । एतत्ते अग्ने राध इति सदो ऽभ्येति । विभक्ता दक्षिणा नयत्यृतस्य पथा प्रेत चन्द्रदक्षिणा इति । गार्हपत्यं सदश्चान्तरेण दक्षिणेनाग्नीध्रीयं तीर्थेनोदीचीरुत्सृजति । ब्राह्मणमद्य राध्यासमिति हिरण्यं दक्षिणाभागं चादायाग्नीध्रं गत्वा तेनैव मन्त्रेणाग्नीध्रे ददाति । वि सुवः पश्य व्यन्तरिक्षमिति सदः प्रेक्षते ऽस्माद्दात्रा देवत्रा गच्छतेति दक्षिणाः । पूर्वया द्वारा सद आगत्याग्रेण सद आसीनायात्रेयाय ब्राह्मणमद्य राध्यासमिति हिरण्यं दद्यात्तदभावे ऽनूचानाय । महर्त्विग्भ्यो दक्षिणा मनोवाक्प्राणचक्षुषामनुदिशति[1] । ब्रह्मन्मनस्ते ददामि तदनेन निष्क्रीणामीति ब्रह्मणे ब्रह्मसदन आसीनाय ददाति । यद्दास्यन्भवति तत्तस्यानुदिशत्येवमितरेभ्यो यथायतनमासीनेभ्यो होत्रकसदस्यचमसाध्वर्युप्रसर्पकेभ्यश्च श्रोत्रात्माङ्गलोम्नामेवमनुदिशति[1] । ॥ ७ ॥

---

१ Note the genitive!

न देयं बहिर्वेदि नाब्राह्मणाय ब्राह्मणायाप्यविदुषे न कण्वकश्यपेभ्यो ऽप्यब्राह्मणाय वेदविदे दद्याद्यदा मरुत्वतीयाय प्रेष्यत्यथ न देयं न प्रतिग्राह्यं । यदि दद्यादनूबन्ध्यावपायां हुतायां दद्यात्प्रतिगृह्णीयाद्वोदवसानीयायां पूर्णाहुत्यां वा । यद्यनो रथो वा दीयते नयवत्यां हुतायां वनेषु व्यन्तरिक्षं ततानेति द्वितीयामाहुतिं जुहोति । यद्यश्वो पुरुषो हस्ती वा दीयते प्रजापते न त्वदेतानीति तृतीयां । दक्षिणासु नीतासु हरिणस्य रघुष्यत इति कृष्णविषाणाग्रन्थिं विस्रस्यानु[1] त्वा हरिणो मृग इति चात्वाले प्रास्यत्यथाध्वर्युर्यज्ञपतिमृषय एनसाहुरिति पञ्च वैश्वकर्मणान्याग्नीध्रे जुहोतीन्द्राय मरुत्वते ऽनुब्रूहीत्यध्वर्युः प्रतिप्रस्थाता च स्वं स्वं मरुत्वतीयमादाय दक्षिणतस्तिष्ठन्नध्वर्युराश्राव्य प्रत्याश्रावित इन्द्राय मरुत्वते प्रेष्येति संप्रेष्यति । वषट्कृतानुवषट्कृत उभौ[2] हुत्वर्तग्रहवच्छेषमवनयतो ऽननुवषट्कारौ वा । प्रतिप्रस्थानेन[3] भक्षयन्ति[3] द्विर्होता सकृदितरौ । मार्जालीये पात्रं प्रक्षाल्य होतुरग्रे निदधाति । ॥ ८ ॥

मरुत्वाँ इन्द्र वृषभो रणायेति स्वेनर्तुपात्रेण तृतीयं मरुत्वतीयं कलशाच्छुक्रवन्तं गृहीत्वर्तुपात्रमालभ्यैन्द्राग्नवच्छस्त्रं प्रतिगृणात्युक्थं वाचीति माध्यंदिनसवनशस्त्रं प्रतिगीर्य जपति । ग्रहमादत्ते चमसांश्चमसाध्वर्यव । आश्राव्य प्रत्याश्रावित उक्थशा यज सोमस्येति संप्रेष्यति । वषट्कृतानुवषट्कृते जुहोति पूर्ववद्धि-

---

१ विसृज्य MLATVB (in H this kh. is missing), विस्रस्य the Vyākhyā.

२ वषट्कृतानुवषट्कृते उभौ M; ०ट्कृत उभौ LTV; वषट्कृते सहोभौ AB.

३ प्रतिप्रस्थातेन भक्षयंति A; प्रतिप्रस्थाता भक्षं हरति MLTV; प्रतिप्रस्थातानेन भक्षयन्ति B.

द्भिर्नाराशंसाननुप्रकम्पयन्त्युक्तो भक्षमन्त्रो । यथाचमसं चमसिनो भक्षयन्त्याप्यायननिधाने च नाराशंसानां । महाँ इन्द्रो य ओजसा महाँ इन्द्रो नृवदित्यन्यतरयर्चा शुक्रपात्रेण माहेन्द्रं कलशात्स्तुतशस्त्रवन्तं गृह्णाति । परिमृज्य सादयित्वा पृष्ठस्तोत्रमुपाकरोति । यजमानो रथन्तरे वरं ददाति । स्तोत्रे वृत्ते[1] शस्त्रमुपाकृत्य प्रतिगीर्याध्वर्युर्ग्रहमादत्त इतरे नाराशंसांश्चातिग्राह्यांश्च सहैवाध्वर्युणाग्नेयं प्रतिप्रस्थातैन्द्रं नेष्टा सौर्यमुन्नेताश्राव्य प्रत्याश्रावित उक्थशा यज सोमस्येति संप्रेष्यति । हुते माहेन्द्रे ऽग्ने तेजस्विन्निन्द्रौजस्विन् सूर्य भ्राजस्विन्नित्येतैरतिग्राह्याननुजुह्वति । ॥ ९ ॥

तेजोविदस्योजोविदसि सुवर्विदसीत्येतैस्तान्हुताननुमन्त्रयते । सदसि प्रत्यञ्चो मयि मेधामित्येतैः प्रतिमन्त्रं भक्षयन्ति । सर्वभक्षाश्चमसा । उपयामगृहीतो ऽसीन्द्राय त्वेति त्रिभिरुक्थ्यविग्रहैः पूर्ववत्प्रचरतो । विश्वे देवा मरुत इति संस्थिते जुहोति[2] । प्रशास्तः प्रसुहीति संप्रेष्यति सर्पतेत्याह प्रशास्ता । यथेतं निःसृप्य[3] तृतीयसवनाय देवीद्वारौप्रभृति यथावज्जपन्तः[4] सर्वे प्रसर्पन्त्यध्वर्युरभिषोतृनाग्नीध्रं प्रतिप्रस्थातारमाशिरं[5] चाभिज्ञायाभिषोतारो ऽभिषुणुताग्नीत्सवनीयान्निर्वप परिश्रयणमाहर

---

१ नुवृत्ते A; सुवृत्ते HB; वृत्ते MLTV; read probably उपवृत्ते.

२ यथावेदमितरे ins. MAHB, not TLV. The Vyākhyā makes no mention of these words.

३ निः (or नि)सृप्य MLHV, प्रसृप्य AHB.

४ तथाव० AHB.

५ The insertion of आ शिरम् here is rather strange. It is not mentioned in the Vyākhyā. Probably it is inserted wrongly, see the immediately following sampraiṣa.

प्रतिप्रस्थातराग्निरं शृतातङ्क्यं दध्यादित्यग्रहायाहरेति संप्रेष्यति होतृचमसे वसतीवरीभ्यो ऽपो निःषिच्य निग्राभ्यं[1] कृत्वादाभ्यांशुमुपांशुपावनौ[2] यश्चोपांशुपात्रे ऽंशुस्तानृजीषे ऽपिसृज्य प्रातःसवनवन्महाभिषव ऋजीषमेव तूष्णीमभिषुण्वन्त्या मित्रावर्जमग्नीत्सवनीयान्निर्वपति । द्वादशकपालो ऽत्र पुरोडाशो । हविर्धानस्योभे द्वारे परिश्रयति । ब्रह्माध्वर्युर्यजमानः प्रतिप्रस्थाताग्नीध्र उन्नेता पत्नी च हविर्धानस्यान्तर्भवन्त्यध्वर्युरादित्यपात्रमादाय कदा चन स्तरीरसीत्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वेत्यादित्यस्थाल्या आदित्यं[3] गृह्णाति । ॥ १० ॥

कदा चन प्रयुच्छसीत्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वेति शृतातङ्क्येन दध्ना श्रीणाति । यज्ञो देवानामित्यनुद्रुत्योपयामगृहीतो ऽस्यादित्येभ्यस्त्वेत्यादित्यस्थाल्याः सर्वं राजानं गृह्णाति । विवस्व आदित्येत्युपांशुसवनेनैनं मेचयित्वा या दिव्या वृष्टिस्तया त्वा श्रीणामीति शृतातङ्क्येन दध्ना पयसा वा वृष्टिकामस्य श्रीत्वा ग्रावाणमुद्गृह्णात्यत्र विज्ञानमुपैति । यद्युद्गृहीतस्य ताजग्बिन्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरमवर्षुको । न सादयति । यदि कामयेत गर्भान्पशवः श्रीव्येयुरित्युद्गृह्यादित्यमवेक्षेत । दशापवित्रेणोपांशुसवनं परिवेष्ट्य तेनाधः पात्रमुपयम्या समुद्रादिति दर्भानन्तराच्छाद्य हस्तेन दर्भैश्चापिदधात्यहं परस्तादित्येनमा होमाद्यजमानो ऽन्वारभते । ऽध्वर्युः सूर्यो मा देवेभ्यः पात्वित्युत्तिष्ठत्यविषिञ्चन्नुपांशुसवनं दशापवित्रेण

१ Thus V; निग्राभ्यां L; भिग्राभ्यां T; निगाह्यं HAMB.
२ MLVTB (not AH) ins. यश्चोपांशुपावनौ (cp. Āp. XIII. 10. 5).
३ आदित्यग्रहं H only.

परिमृज्य ग्रावस्वपिसृजति। विवृण्वन्ति द्वारौ। कविर्यज्ञस्य वितनोति पन्थामित्यादित्यं हरति। ॥ ११ ॥

आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महास्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्येति संप्रेष्य यास्ते विश्वाः समिधः सन्त्यग्न इत्याहवनीये दर्भानधिप्रास्यानन्वीक्षमाणो[1] वषट्कृत आदित्यं जुहोत्युन्नम्भय पृथिवीमिति वृष्टिकामस्य जुहुयान्न हुत्वान्वीक्षेत नानुवषट्करोति न भक्षयति। सूदवदादित्यपात्रं सादयति। प्रस्तोता प्रतिहर्ता वा पवित्रं वितत्य माध्यंदिनवदाग्रयणमेव चतसृभ्यो धाराभ्यो गृह्णात्यादित्यपात्राच्चतुर्थीं धारां करोत्याग्रयणं गृहीत्वा राजानमतिपावयति[2] यावान्तृतीयसवनायालमुक्थ्यो यज्ञश्चेदुक्थ्यमेव[3] गृह्णाति। धारां विरम्य प्रपीड्य पवित्रं निदधाति। यत्प्राक् पवमानग्रहेभ्यस्तस्मिन् कृत आग्नीध्रे पत्न्याशिरं मथित्वापरया द्वारा हविर्धानं प्रपादयति। पूर्वया गतश्रियः। पूर्वया यजमानः प्रपद्यते। ऽस्मे देवासो वपुषे चिकित्सतेति चतसृभिः प्रतिमन्त्रमाशिरं यजमानः पत्नी च तिरः पवित्रं पूतभृत्यवनयतो। द्वौ पवमानग्रहौ गृह्णातीत्येके। पवमानग्रहान् कलशानाग्रयणं च ग्रहावकाशैरुपस्थाय निःसर्पन्तः समन्वारभन्ते। तृतीयसवने ग्रहावकाशैर्नोपतिष्ठत इत्येके। पूर्ववद्धुत्वान्वारभ्य आर्भवाय पवमानाय निष्क्रामन्ति माध्यंदिनपवमानवज्जागतः पन्था आदित्या देवता वागग्रेगा इत्यादि माध्यंदिनवदायुषे हिंकुरु

१ ०अतिप्रास्य MLTV ; ०अधिप्रास्य AB ; ०अधीःप्रास्य H.
२ After ०पवमानवत् AHB ins. जुहुते.
३ ०मेव BH ; ०मव V ; ०मपि ML.

तस्यै प्रस्तुहि[1] तस्यै स्तुहि तस्यै मे ऽवरुद्ध्या इति व्याहृतीः पञ्चहोतारं च पुरस्तादार्भवपवमानाद्यजमानो जपति । तस्य नवम्यां प्रस्तुतायां सघासि जगतीच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेत्यनुमन्त्रयते । ॥ १२ ॥

अग्नीच्छलाकान्विहर बर्हिः स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्वेति स्तुते ऽध्वर्युः संप्रेष्यति । पूर्वया द्वारा हविर्धानं प्रविश्य विष्णो त्वं नो अन्तम इति ग्रहानुपतिष्ठते पात्राणि च संमृशति । विहृतांच्छलाकान्व्याघारयति यथा पुरस्ताच्छृतं हविः शमितरिति संवादादिना पशुतन्त्रेण प्रचरतीडान्तः पशुर्नात्र पुरोडाशः स्यादत्र पूर्ववत्सवनीयप्रचारस्तृतीयस्य सवनस्येन्द्राय पुरोडाशानामनुब्रूहीति तथा तृतीयस्य सवनस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति च । वषट्कृते हुत्वौपभृतं समोप्याग्नये ऽनुब्रूह्यग्नये प्रेष्येति स्विष्टकृतं[2] हुत्वा[2] प्राशित्रमवदायेडामवद्यतीडां होत्रे हृत्वाधवनीयं पूतभृत्यवनीय दशाभिः कलशं मृष्ट्वा न्युब्जत्युन्नीयमानेभ्यो ऽनुब्रूहि होतुश्चमसमनून्नयध्वं तीव्राꣳ आशीर्वतः कुरुध्वमच्छावाकस्य चमसाध्वर्यो ऽपि त्वमुन्नयस्वोन्नेतः सोमं प्रभावयेति संप्रेष्यति । प्रचरणकाले होतृचमसमध्वर्युरादत्ते चमसांश्चमसाध्वर्यव । आश्राव्य प्रत्याश्राविते तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राꣳ आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्य मध्यतःकारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृताञ्जुहुत होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयो-

१ प्रष्टुहि (originally the right reading) MB only.

२ Thus MLATVB; प्रेष्येति स्विष्टकृति संप्रेष्यति स्विष्टकृतिं हुत्वा H.

पावर्तध्वमिति संप्रेष्यति । श्येनाय पत्वने स्वाहेति वषट्कृते ऽध्वर्युर्जुहोति । ॥ १३ ॥

इतरे तूष्णीं जुह्वति । वट् स्वयमभिगूर्ताय नमः स्वाहेत्यनुवषट्कृते महर्त्विजां यजमानस्य च चमसाध्वर्यवो जुह्वति । प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्रयन्तु सदस्यानामिति संप्रेष्यति । प्रयन्त्येते मध्यतःकारिणां चमसा भक्षाय । होत्रकाणां चमसैरध्वर्युः प्रचरति । मैत्रावरुणचमसमादायाश्राव्य प्रशास्तर्यजेति संप्रेष्यत्येवमितरान्विष्टम्भाय धर्मणे स्वाहेत्येतैः प्रतिवषट्कारं प्रतिमन्त्रं जुहोति वट् स्वयमभिगूर्ताय नमः स्वाहेति सर्वत्रानुवषट्कृतौ । तृम्पन्ताꣳ होत्रा इति हुतान्सर्वाननुमन्त्रयते[1] । प्रसिद्धो भक्ष । आदित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इति विशेषो । न भक्षयतीडां[2] । सन्नेषु नाराशंसेषु स्वं स्वं चमसमनु न्यन्ते[3] । ॥ १४ ॥

त्रींस्त्रीन्पुरोडाशशकलान्प्राचीनावीतिनः पिण्डदानमन्त्रैर्दक्षिणतो यजमानपितृभ्यो निवपतीत्येवमादिप्रत्यायनान्तान्[4]

---

१ इति सर्वाननु म० MLTV; इति हुता सर्वहोत इति म० A; इति हुता सर्वत्र होता इति म० H; B useless.

२ This sentence is given by MA and, in corrupted state by HB; it is omitted in TLV.

३ चमससमनुन्यंते TV; चमससमनुमन्यते HRBLAM; cp. Āp. XIII. 12. 9. The sentence runs on at the end of this khaṇḍa.

४ The expression प्रत्यायनान्तान् is taken over from Hiraṇyakeśin, it is not in harmony with the description of the Piṇḍapitryajña acc. to the Vaikhānasīyas. The verb, belonging to the subject expressed at the end of the preceding khaṇḍa, is not निवपति (mark इति) but जपन्ति. The Sūtrakāra does not express his thought very clearly.—Cp. XVI. 21.

पिण्डपितृयज्ञस्य मन्त्रान्सर्वे जपन्ति । षड्ढोतारं यजमानो जपत्युपांश्वन्तर्यामपात्रयोरन्यतरेण वाममद्य सवितरिति सावित्रं[1] ग्रहमाग्रयणाद्गृहीत्वा न सादयत्युपनिष्क्रम्य देवाय सवित्रे ऽनुब्रूहीति संप्रेष्यत्याश्राव्य प्रत्याश्राविते देवाय सवित्रे प्रेष्यति संप्रेष्यति[2] । वषट्कृते जुहोति नानुवषट्करोति[3] न च भक्षयत्येतेनैव पात्रेणोपयामगृहीतो ऽसि सुशर्मासि सुप्रतिष्ठान इति वैश्वदेवं ग्रहं पूतभृतः शुक्रवन्तं गृह्णात्येकया च दशभिश्च स्वभूत इत्यभिज्ञाय प्रातर्युजौ विमुच्येथामिति द्विदेवत्यपात्राणि विमुच्य प्रतिप्रस्थाता मार्जालीये प्रक्षाल्यायतने सादयति । प्र द्यावा यज्ञैः पृथिवी ऋतावृधेत्यभिज्ञाय मदा मोद इव मोदा मोद इत्युभयतो मोदं प्रतिगृणात्या व्याहावात् ॥ १५ ॥

अथ यत्र होतुरभिजानाति तद्राधो अद्य सवितुर्वरेण्यमिति मदा मोद इव मोदा मोद इवेत्यन्यतरतोमोदं प्रतिगृणात्या व्याहावादुक्थं वाचीन्द्रायेति तृतीयसवने जपति । शस्त्रं प्रतिगीर्य प्रातःसवने वैश्वदेववद्ग्रहा नाराशंसाः । सौम्यश्चरुर्भवति । व्याख्यातस्तस्य कल्पश्चरुमासाद्याग्नावैष्णव्यर्चोपांशुयाजवद्घृतस्य प्रयजति । प्राचीनावीती हस्तेन सौम्यस्य प्रथममवदानमवदाय मेक्षणेन द्वितीयमवद्यति । दक्षिणतो ऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन्नाश्राव्य सौम्यस्य यजेति वषट्कृते दक्षिणार्धपूर्वार्धे जुहोति । पुनः पूर्ववद्घृतस्य यजति । विष्णो त्वं

---

१ सावित्र्याग्रयणाद्गृ० MLTV.

२ संप्रेष्यति om. MLTV.

३ नानुवषट्करोति only in TV and somewhat corrupt in AHB.

नो अन्तम इति वैष्णव्यर्चा स्रुवाहुतिमभिजुहोति । प्रत्याक्रम्य चरावाज्यमानीयोद्गातृभ्यो हरन्ति । ॥ १६ ॥

सचो त एतद्यद् त इहेत्युद्गातारो ऽवेक्षन्ते । य आत्मानं न परिपश्येदितासुः स्यादित्युक्तमाज्येन सो ऽभिदर्दिं कृत्वा यन्मे मनः परागतमित्यवेक्षेत । पुनराग्नीध्रः शलाकाभिर्धिष्णियान् विहरत्यध्वर्युर्नवगृहीतमाज्यं गृहीत्वा यथान्युप्तं व्याघारयत्याग्नीध्रीयमादितो ऽन्ततश्च । शेषमाज्यस्य करोति । ध्रियन्ते धिष्णिया । उपांशुपात्रमादायोपयामगृहीतो ऽसि बृहस्पतिसुतस्य त इत्याग्रयणात्पात्नीवतं गृह्णाति । न सादयत्याज्यशेषेण श्रीत्वात्याक्रम्याश्राव्य[1] प्रत्याश्रविते ऽग्नीत्पात्नीवतस्य यजेति संप्रेष्यत्यग्ना३ इ[2] पत्नीवा३ः[2] सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेति । वषट्कृत उत्तरार्धे जुहोत्युपांश्वनुवषट्करोति । हुत्वा हरति भक्षं । यद्याग्नीध्र उपहवमिच्छते भक्षयेत्येव ब्रूयात् । ॥ १७ ॥

अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोन्नेतर्होतुश्चमसमनून्नय होतृचमसे ध्रुवायावकाशं कुरूद्गात्रा पत्नीं संख्यापय सर्वंश एव राजानमुन्नय मातिरीरिचो दशभिः कलशौ मृष्ट्वा न्युब्जेति संप्रेष्यत्युत्तरासु संस्थासु सर्वंश एव राजानमुन्नयेति[3] प्रैषशेषं तत्तत्संस्थाचमसगणानामुत्तममुन्नयन्संप्रेष्यत्यन्तरा नेष्टारं

---

१ श्रीत्वात्याक्रम्य TV; श्रीषात्यत्याक्र० HAB; श्रीत्वा प्रत्याक्र० ML.

२ The signs of pluti are only given for the first word and only in some of the Mss.

३ ०मुन्नयति H, but cp. the Vyākhyā: उत्तरासन्ध्यादिसंस्थासु सर्वंश एव राजानमित्यादि प्रैषांश उत्तम एव चमसगणे स्यात् T or the rest, instead of प्रैषशेषं, A reads प्रतिप्रैषशेष and HB प्रष्टृतिप्रैषशेष.

धिष्णियं चाग्नीध्रो व्यवसृप्याग्निपीतस्येति भक्षमन्त्रं संनम्य भक्षयति । नोपस्थ आसीत क्लीबः स्यादिति । होतृचमसमुख्यांश्चमसानुन्नयन्सर्वंश्च एव राजानमुन्नीय दशाभिः कलशौ मृष्ट्वा न्युब्जत्युत्तरवेद्यां चमसान्संसाद्य यज्ञायज्ञियस्तोत्रमुपाकरोति[1] । दीपयन्ति धिष्णियान्विसृज्य[2] नीवीं[3] कर्णप्रावृता आविरिव नाभिं कुर्वाणा भवन्ति[4] । ये सदस्याः सन्त ऋत्विजो यजमानस्य[5] ते सर्वे ऽग्निष्टोममुपगायेयुः । सकर्णमकर्णं वा प्रोर्णुत्य[6] यज्ञायज्ञियैः स्तुवते । सप्तहोतारं यजमानो व्याचष्टे । प्रस्तुते साम्नि हिंकारमनु विश्वस्य ते विश्वावत इति नेष्टा पत्नीमुद्गात्रा संख्याप्य वाचयति । यद्येनामुद्गातोपमीवति[7] तदेषा[8] पत्यगन्देवान्यज्ञ इति नग्नंकृत्य वङ्क्षणावाविष्कृत्य स्वाहाकृताः समुद्रेष्ठा गन्धर्वमित्यस्या अन्तरमूर्वोः पत्नेजनीरुदीचीर्दक्षिणेनोरुणा संवर्तयत्यां तृतीयाया स्तोत्रीयायाः संख्यापनोपप्रवर्तने भवतः । ॥ १८ ॥

अपवृत्ते ऽग्निष्टोमीयस्तोत्र आग्निमारुतं शस्त्रमुपाकरोत्यभ्यग्रे[9] प्रतिगृणात्यापो हि ष्ठा मयोभव इत्यभिज्ञायापो विषिञ्चन्प्रतिगृणाति । स्वादुष्किलायं मधुमाꣳ उतायमित्यभिज्ञायो-

---

१ ०यस्तोत्र० THBV; ०य स्तोत्र० MLA.

२ विसृज्य TV; विहृज्य MLAB; H corrupt.

३ नीविं TV; नीवीं ML.

४ भवंति H; भवति MLATBV.

५ यजमानस्येत्येक AHB.

६ प्रोर्णुत्य HAB; प्रोर्णयति ML; प्रोर्णुता TV.

७ उपमीवति TV; उपमवति L; उपमीयति AHB; उपवदति M.

८ तदेषा MTL; तद्वेषा ABV; तद्दोषो H.

९ ०भ्यग्रे HA; ०त्यग्रे B; ०भ्यग्रं T; missing in ML; शस्त्रमभ्यग्रं V.

भयतोमोदं प्रतिगृणाति मदा मोद इव मोदा मोद इवेत्याव्याह्वावात्तन्नुं तन्वन्नजस इत्यभिज्ञाय प्रतिप्रस्थाता ध्रुवं भूतमसि भूते मा धा इत्यभिमन्त्र्य द्यावापृथिवीभ्यां त्वा परिगृह्णामीति परिगृह्णाति । सादनादि[1] ध्रुवस्य यजमानो न मूत्रं करोत्यावनयनाद्विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्त्विति ध्रुवस्थानाच्च्यावयति । दिवि देवान्दृꣳहेति हुत्वा ध्रुवं ध्रुवेण हविषेत्यान्तादनुवाकस्य पुरस्तात्प्रत्यङ्ङासीनो होतृचमसे ध्रुवमवनयति ।॥१९॥

पुरस्तादुक्थस्यावनीय इत्युक्तमुत नो ऽहिर्बुध्न्यः शृणोत्वज एकपादिति वोक्थं वाचीन्द्रायेति तृतीयसवने ग्रस्तं प्रतिगीर्य होतृचमसमध्वर्युरादत्ते चमसानितरांश्चमसाध्वर्यव । आश्राव्य प्रत्याश्रावित उक्थशा यज सोमानामिति संप्रेष्यति । वषट्कृतानुवषट्कृते च[2] सर्वांश्चमसान् जुह्वत्यथ सर्वभक्षाश्चमसाः सुभूरसि[3] श्रेष्ठो रश्मीनां प्रियो देवानामिति होतृचमसमध्वर्युः प्रतिभक्षयति । यथा त्वꣳ सूर्यासीत्यादित्यमुपतिष्ठते यजमान आयुर्मे इन्द्रियं धेहीष्टं म आगच्छत्वित्याहवनीयमग्नीदौपयजानित्यादि पाशुकेन प्रचरति । प्रहृतेषु परिधिषु संस्रावेणाभिहुत्योपयामगृहीतो ऽसि हरिरसीत्युन्नेता द्रोणकलशेन सर्वमाग्रयणं हारियोजनं ग्रहं गृह्णाति । हरी स्थ हर्योर्धाना इति बह्वीभिर्धानाभिः श्रीणात्यथैनमादायोपोत्तिष्ठन्निन्द्राय हरिवते धानासोमानामनुब्रूहीति संप्रेष्योपनिष्क्रम्य शीर्षन्नधि निधाय

१ सादनादि MLTV; सादनानि AHB. The grammatical sense is not quite clear.

२ च given by LTAHV; om. by MB.

३ सुभू० the Vyākhyā; विभू० MLTV, and prob. H, A incomplete.

विक्रम्याश्राव्य प्रत्याश्राविते इन्द्राय हरिवते धानासोमान्प्रस्थितान्प्रेष्येति वषट्कृते सहसोमा इन्द्राय स्वाहेति जुहोति । ॥ २० ॥

अनुवषट्कृते हुत्वा हरति भक्षमपरेणाहवनीयं द्रोणकलशमवस्थाप्योतन्नेर्युपहवमिष्ट्वेष्टयजुषस्ते देव सोमेति यावन्त ऋत्विजस्ते सर्वे भक्षयन्ति । दद्भिरसंभिन्दन्तो[1] निर्धयन्त इव निरिव धयन्तस्त्रिस्त्रिषाकारं भक्षयन्तः । कृष्यै क्षेमाय रय्यै पोषायेति जपित्वोत्तरवेद्यामापूर्या स्था मा पूरयतेति निष्ठीव्योपवपन्ति । स्फ्यमुदपात्रं बर्हिरित्येतत्समादाय जघनेन दक्षिणेन हविर्धाने परीत्य दक्षिणेन मार्जालीयं धिष्णियं स्फ्येनोपहत्यावोक्ष्य दक्षिणाग्रं बर्हिः स्तीर्त्वाद्भिर्मार्जयति मार्जयन्तां पितरः सोम्यास इत्येतैः प्रतिमन्त्रमथ तिस्रो धाना ददात्येतत्ते ततासौ ये च त्वामन्वित्येतदादिप्रत्यायनान्तान्[2] पिण्डपितृयज्ञमन्त्रान् जपित्वा षड्ढोतारमनूच्य यथेतमेत्याग्नीध्रीये यन्म आत्मनः पुनरग्निश्चक्षुरिति द्वे मिन्दाहुती जुहोति । ॥ २१ ॥

एकधनपरिशिष्टा अपः स्वे स्वे चमसे निःषिच्य प्रस्नाय तीव्रीकृताभिर्दूर्वाभिः सरसा अप्सु धौतस्य सोम देव त इत्यपरेण चात्वालमास्तावे वा प्रत्यञ्चस्त्वमसिनो भक्षयित्वा समुद्रं वः प्रहिणोम्यच्छायं वो मरुत इति चात्वाले निनीयाग्नीध्रे दधिक्राव्ण इति दधिद्रप्सान्भक्षयन्त्युभा कवी युवाना सत्येति

---

1 Thus TV only; दद्भिः संभि० or संक्ष्नि० MLAHB; Vyākhyā: दन्तैर्न धानाः संभिन्दन्ति; after ०भिन्दन्तो HAB ins. धाना.

2 Cp. XVI. 15, where, however, the wording is a little different.

तनूनप्त्रिणः सख्यविसर्जनं जपन्त्यपाम सोममम्मृता अभूमेत्यादित्यमुपतिष्ठन्ते। देवकृतस्यैनसो ऽवयजनमसि स्वाहेति सप्तभिराहवनीये शकलानभ्यादधत्यभिमृष्टे वेदे पत्नीः संयाजयन्ति। स्तीर्णे वेदे ध्रुवामाप्याय्य धाता रातिः सवितेत्यन्तर्वेद्यूर्ध्वस्तिष्ठन् संततं जुह्वा नव समिष्टयजूंषि जुहोति षड्गृग्मियाणि[1] यजूंष्यत्र विषाणकृष्णाजिनयोः[2] प्राशनमेकेषामग्निना देवेनेन्द्रेण देवेन विश्वेभिर्देवेभिरिति त्रिभिर्विष्णुवतिक्रमैर्यजमानस्त्रीन्विष्णुवतिक्रमान् कृत्वा दक्षिणेनाहवनीयं तिष्ठन्सर्वेभिर्देवेभिरिति चतुर्थं विष्णुवतिक्रमं जपतीन्द्रेण सयुजो वयमित्याहवनीयमुपतिष्ठते। ऽध्वर्युरिदं तृतीयꣳ सवनं कवीनामिति संस्थिते सवनाहुतिं जुहोति[3]। प्रशास्तः प्रसुहीति संप्रेष्यति। सर्पतेत्याह प्रशास्ता। संतिष्ठते तृतीयसवनम्। ॥ २२ ॥

आग्रयणोक्थ्यादित्यध्रुवस्थालीभ्यश्चतसृभ्यो ऽन्यत्रापराः[4] स्थालीश्चात्वाले प्रास्यौदुम्बरीमधिषवणचर्मफलके[5] ग्राव्णो वायव्यानि चमसान् द्रोणकलशं खरपांसूनन्यदन्यत्सोमलिप्तं सुरक्षितं कृत्वा वेदं[6] कृत्वाग्निपरिस्तरणादि प्रतिपद्य प्रणीतावर्जं पात्राणि प्रयुज्य निर्वपणकाले वारुणमेककपालं निरुप्य पुरोडाशं यजुरुत्पूताभिरद्भिः[7] संयुत्याप्यलेपं निनीय प्रोक्षणीरासाद्य स्रुवं च

---

१ AHB ins. after ०याणि : उत्तराणि०, V: ०याण्युयजू०.

२ Thus (not विषाणा०) all the Mss.

३ HAB ins. यथावेदमितरे, cp. XVI. 10.

४ न्यत्रपरां स्थालीं A; ०न्यत्रापरां H; न्यत्रपरस्थाली० MLTV; ०न्यत्रपरा... मस्थालीं B.

५ ०दुम्बरीमधि० MLTV; ०दुम्बर्यामधि० AHB.

६ वेदं कृत्वा only in H, वेदिं कृत्वा B.

७ अद्भिः given by VHT, om. MLAB.

स्रुचश्च संमृड्ढ्याज्येनोदेहीति संप्रेष्यत्याज्यानि चतुर्गृहीतानि । वारुणं पुरोडाशमलंकृत्योत्तरेऽंसे सादयत्यन्तरेण चात्वालोत्करावौदुम्बरीमासन्दीं निधाय तत्र[1] सुरचितानौदुम्बर्यादीन् सादयति[2] । ॥ २३ ॥

आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यन् जुहुयान्नमो रुद्राय वास्तोष्पतय इति च । वारुणं पुरोडाशं स्रुवमाज्यस्थालीं स्रुचो बर्हिः सोमोष्णीषं सोमोपनहनं सोमपरिश्रयणं चेत्येतत्समादाय प्रस्तोतः साम गायेति संप्रेष्यति । साम्नि प्रस्तुत उरुं हि राजा वरुणश्चकारेति तीर्थेन निष्क्रामन्ति । साम्ना प्रस्तोतान्ववैति । सह पत्न्या सर्वे साम्नस्त्रिर्निधनमुपयन्ति । सर्वा दिशो ऽवभृथायाभ्यवयन्ति । यां दिशं गच्छेयुस्तयामुखाः प्रचरेयुरित्येके । वहन्तीनां स्थावरा अभ्यवेत्यास्तदभावे यथाकामं । मध्ये प्रस्तोतः साम गायेति द्वितीयं संप्रेष्यति । तथा निधनमुपयन्त्यपो दृष्ट्वा शतं ते राजन्निति जपत्युदकान्ते तृतीयं प्रस्तोतः साम गायेत्यादि पूर्ववदुदकान्ते स्तरणान्तां वेदिं कृत्वा तस्यां हवींषि सादयत्यपि वा न वेदिरभिष्ठितो वरुणस्य पाश इत्यपामधितिष्ठति[3] । प्रति ते जिह्वा घृतमुच्चरण्येदिति बर्हिः प्रहृत्य स्रुवेणाभिजुहोति[4] । विगाह्य तिष्ठन्तो ऽवभृथेन चरन्ति । ॥ २४ ॥

---

१ ततः VTML.

२ औदुम्बर्यादीन् सादयति VTMAB; ०बरान् सादयति L; औदुंबर्यासंसंदीन् सादयति H.

३ The genitive अपाम् is incomprehensible. The original text should have been: अपामन्तमभितिष्ठन्ति.

४ Thus MLTV; AHB have स्रुचा कृत्वाभिजुहोति instead of बर्हिः प्रहृत्य स्रुवेणाभि०.

अप[1] उपवाज्य स्रुवाघारमाघार्याग्नीदपस्त्रिः[2] संमृड्ढीति संप्रेष्यत्यापो वाजजितो वाजं वः सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यपो ऽन्नादा अन्नाद्यायेति मार्जनमन्त्रं संनमत्यग्नेरनीकमप आविवेशेति स्रुचमाघारयति । वागस्याग्नेयीत्यनुमन्त्रयते यजमानस्तिष्ठ होतरित्येतावान्प्रवरो ऽपबर्हिषः प्रयाजान्यजत्यप्सुमन्तावाज्यभागावप्स्वग्ने सधिष्टवाप्सु मे सोमो अब्रवीदित्यनूच्येत[3] । पुरोडाशस्यावदाय वरुणं यजति । कृत्स्नं पुरोडाशमवदायाग्नीवरुणौ स्विष्टकृतौ यजत्यग्नीदपः सकृत्संमृड्ढीति संप्रेष्यत्यपबर्हिषावनूयाजौ यजति । देवौ यजेति प्रथममनूयाजं संप्रेष्यति यजेत्युत्तरमेतावत्क्रियते । समुद्रे ते हृदयमप्स्वन्तरित्यप्सु स्रुचं प्रतिष्ठाप्य सं त्वा विशन्त्वोषधीरुताप इति स्रुचमद्भिः पूरयित्वा यज्ञस्य त्वा यज्ञपते हविर्भिः सूक्तवाके नमोवाके विधेम स्वाहेत्यप्सु वा जुहोत्युपतिष्ठते वावभृथ निचङ्कुणेति यत्किंचित्सोमलिप्तमवभृथे संप्रकिरति । सुमित्रा न इत्यञ्जलिनाप उपहरन्ति[4] । दुर्मित्रास्तस्मै भूयासुर्यो ऽस्मान्द्वेष्टि यं च वयं द्विष्म इति द्वेष्यदिशि निरस्यति । ॥ २५ ॥

यत्ते ग्राव्णा चिच्छिदुः सोम राजन्निति दशभिः सोमद्रप्सवतीभिर्दर्भौदुम्बरशाखयर्जीषं प्रोक्षति प्रहृत्य वाभिजुहुयादेकादशभिर्नवभिः सप्तभिः पञ्चभिस्तिसृभिर्वा । स्रुचमृजीषेण पूरयित्वा समुद्रे ते हृदयमप्स्वन्तरित्यप्सूपमारयति । देवीराप

---

1 Before अप AHB ins. जहातु देवतासु.

2 स्रुवाघार० AHB ; स्रौवाघार० MLTV.

3 इत्यनूच्येत B ; इत्यनुच्येत MLTAV. The word is not clear.

4 उपहरंति AB ; उपहरति MLTV ; पहरंति H. Read with Baudh. VIII. 20 : उपहन्ति.

इत्युपतिष्ठते । यो बिन्दुरत्स्नुतस्तमप्सु धौतस्येत्युपस्पृशेद्‌वजिघ्रेद्वानुपमज्जन्तौ दम्पती सशिरस्कौ स्नात्वान्योऽन्यस्य पृष्ठं चालयतो । वि ते मुञ्चामीति यजमानो मेखलामुन्मुञ्चतीमं विष्यामीति योक्त्रं पत्नी । दीक्षितवसने मेखलां जालं चावभृथे प्रास्य यजमानः सोमोपनहनं परिधत्ते पत्नी सोमपरिश्रयणमुन्नेतरुन्नयेत्युन्नेतारं प्राह्योद्वयं तमसस्पर्युदुत्यं चित्रमिति तिसृभिरुद्वतीभिरुन्नेता यजमानप्रथमान्होतृप्रथमान्वावभृथादुन्नयति । ॥ २६ ॥

प्रतियुतो वरुणस्य पाश इत्यपामन्तं प्रतियौति प्रत्यस्तो वरुणस्य पाश इत्यपामन्तं प्रत्यस्यति । पुरस्कृत्योन्नेतारं समित्पाणयो ऽपाम सोममिति महीयां जपन्तो ऽप्रतीक्षमागत्यैधो ऽस्येधिषीमहीत्याहवनीये समिधमाधायापो[1] अन्वचारिषमित्युपतिष्ठन्ते तथा गार्हपत्ये पत्नी । प्राग्वंशे प्रायणीयवदुदयनीयेष्टिरिध्मे ऽनूयाजसमिधमुपसंनह्य सक्षामकाषायां प्रायणीयस्थाल्यामुदयनीयं चरुं श्रपयति । पत्नीं संनह्यति । न जुह्वामाज्यं गृह्णाति । न प्रयाजा । आज्यभागानां पथ्यां स्वस्तिमुत्तमां यजति । याः प्रायणीयस्य याज्या इत्युक्तं । यास्ते विश्वाः समिधः सन्त्यग्न इति पुरस्तात्स्विष्टकृतः स्रुवाहुतिं जुहोति । शंय्वन्त उदयनीयः संतिष्ठते । मैत्रावरुणीं वशां गामनूबन्ध्यामालभते । हुतायां वपायां दक्षिणस्यां वेदिश्रोण्यां यजमानः केशश्मश्रु वपते । वरं न ददात्यनूबन्ध्यायाः पशुपुरोडाशं निरुप्य देविकाहवींषि निर्वपति । धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुं राकायै चरुं सिनीवाल्यै

---

१ समिध आधाया० TVB.

चरुं कुर्के चरुमिति । तासु सोमस्थालीष्वेतांश्चरून् पयसि[1] श्रपयति[1] । ॥ २७ ॥

पशुपुरोडाशस्य देविकाहविषां च समानं स्विष्टकृदिडमनूयाजान्ते स्वरुं जुहोति हृदयशूलमुद्वासयत्यनूबन्ध्यायाः स्थाने मैत्रावरुणीमामिक्षां कुर्वन्ति । सेडान्ता संतिष्ठते । सदोहविर्धानानां पूर्वसुरचितान् ग्रन्थीन्विस्रस्योदीचो हविर्धाने बर्हिर्वेदि निर्वर्त्य यत्कुसीदमप्रतीत्तमित्याहवनीयादुल्मुकमादाय वेदिमुपोषति । यदि मिश्रमिव चरेदञ्जलिना सक्तून्प्रदाव्ये विश्वलोपेति जुहुयाद्यजमानो ऽयं नो नभसा पुर इत्यग्निमुपतिष्ठते । यदाकूतादिति तिसृभिर्धूममनुमन्त्रयते । ऽक्तां विधान्यामित्युक्तमन्त्रैर्वेद्यासीनो ऽतिमोक्षाञ्जपत्यत्र विष्णुक्रमानेके समामनन्ति । प्राजहितं शालामुखीयं पृथगरण्योः समारोपयति । प्राङुदङ् वोदवसाय देवयजनमध्यवस्य मथित्वाग्नीन्विहृत्याष्टगृहीतेन वा स्रुचं पूरयित्वोरु विष्णो विक्रमस्वेदं विष्णुर्विचक्रम इति वोदवसानीयां वैष्णवीं पूर्णाहुतिं जुहोति । स्वायतने ऽग्निं प्रतिष्ठापयति । तदानीमेव सायमग्निहोत्रं जुहोति । काले प्रातरग्निहोत्रं जुहुयात्संतिष्ठते ऽग्निष्टोमो । यदि राजन्यो ऽग्निष्टोमेन यजेत सो ऽत्र षोडशिनं ग्रहं गृह्णीयादेष एवात्यग्निष्टोमो ऽत्यग्निष्टोमः । ॥ २८ ॥

## इति श्रौतसूत्रे षोडशः प्रश्नः ॥

---

१ एतांश्चरून् पयसि श्रप० AHB ; एतांश्चरूंच्छ्रप० MLTV.

अथोक्थ्यप्रभृतिसंस्था व्याख्यास्यामस्ता अग्निष्टोमकल्पास्तद्गुणविकारास्तृतीयसवने पशुकाम उक्थ्यं ग्रहं गृह्णीयात्पञ्चदशच्छदिः सदः। क्रतुकरणेनोक्ते होममार्जने। द्वितीयः पशुरैन्द्राग्नः सवनीय आलभ्यो। ऽग्निष्टोमचमसगणादुपरि माध्यंदिनवत्त्रिभिरुक्थ्यविग्रहैः प्रचरतीन्द्रावरुणाभ्यां त्वेति प्रथमे ग्रहणसादनाविन्द्राबृहस्पतिभ्यां त्वेति द्वितीय इन्द्राविष्णुभ्यां त्वेति तृतीये। ऽग्नीदौपयजानित्यादि पाशुकं सिद्धं सर्वसंस्थासु। ॥१॥

षोडशिना वीर्यकामो यजेताधिलोककर्णया[१] शुण्ठ्या राजानं क्रीणाति। सदः सप्तदशच्छदिर्भवति। खरस्योत्तरें ऽसे खादिरं चतुःस्रक्ति षोडशिपात्रं[२] प्रयुनक्ति। क्रतुकरणं कृत्वा तेनैव द्रोणकलशं स्पृशति। यूपं परिवीयैन्द्रं वृष्णिं तृतीयं सवनीयमालभते। तृतीयसवने प्रचरित उक्थ्यविग्रहैरातिष्ठ वृत्रहन्निति मन्त्रेणोक्थ्यादाग्रयणाद्वा षोडशिनं ग्रहं गृह्णाति। धाराग्रहाणामुत्तमं षोडशिनं। सवने सवने ऽभिगृह्णातीत्येके[३]। यस्मान्न जात इति चतसृभिराच्छिद्रकोभिः[४] षोडशिनं सन्नमभिमन्त्रयते[५]। ॥२॥

---

१ With क the Mss. (अधीलोध Āp. Hir.); cp. Journal of the Germ. Or. Soc., Vol. 72, page 4.

२ Emended; षोडशिन MATVH; षोडशं L.

३ ? मन्त्रेणोक्थ्याग्रामा(थ्यमा०)ग्रयणाद्या (द्वा)षोडशिनं ग्रहं गृह्णाति धाराग्रहाणामुत्तमं षोडशिन सवने सवने ऽभिगृह्णातीत्येके HRB; A: मंत्रेणाग्रेणात्षोडशिनं ग्रहं गृह्णाति धाराग्रहणामुत्तमं षोडशिनं सवने सवने भिगृ० etc., as HR; मन्त्रेणाग्रयणाद्वा षोडशिनं ग्रहं गृह्णातीत्येके M; TV: मन्त्रेणाग्रयत्षोडशिन ग्रहं etc., as M; L: मन्त्रणग्रयत्षोडशिनं etc., as M.

४ आछिद्रकोभिः RB; H corrupt (आछिका only); आछिद्रिकोभिः TV; आच्छिद्रिकाभिः A; आच्छिद्रोभिः ML. This designation of these verses is unknown from elsewhere.

५ षडशिनं सन्नमभि० R; षोडशिनं संनभि० H; षोडशिनं सन्नभि० AB; षोडशिनं स्तोत्रमुपाकरोतीति सन्नभि० MLVT.

उत्तमादुक्थ्यपर्यायात्पुरस्तादुक्थ्ये षोडशिनं गृह्णीयाद्वा समयाविषिते सूर्ये हिरण्येन षोडशिनं स्तोत्रमुपाकरोति श्वेतमरुणपिशङ्गं वाश्वं पुरस्तात्स्थापयन्ति । हरिवच्छस्त्रं भवत्य।परिष्टात्स्तोत्रीयानुरूपादानुष्टुभ्य ओथा मोद इव मदे मदा मोद इवोमथेति व्यत्यासमुभयतोमोदं प्रतिगृणाति । शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसांश्चोक्थशा यज सोमानामिति संप्रेष्यतीन्द्राधिपते ऽधिपतिरिति वषट्कृते षोडशिनं जुहोती।न्द्रस्य सम्राडिति षोडशिनं भक्षयति । पूर्ववच्चमसानां भक्षमन्त्रमनुष्टुप्छन्दस इति संनमत्य।रुणपिशङ्गो ऽश्वो दक्षिणातिरात्रेण ब्रह्मवर्चसकामो यजेत । सद एकविंशतिच्छदिर्भवति । क्रतुकरणयजुर्वेदकविधाने प्रपद्यते[1] न तेन जुहोति न स्पृशति । ॥ ३ ॥

यूपं परिवीय सारस्वतीं मेषीं चतुर्थीं सवनीयामालभेत मेषं वा । षोडशिचमसैः प्रचर्य रात्रिपर्यायैस्त्रिभिस्त्रिषु यामेषु प्रचरत्य।पयामगृहीतो ऽसीन्द्राय त्वापिशर्वरायेति होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकचमसमुख्यान् क्रमेण प्रथमे यामे दश चमसानुन्नयति । प्रतिचमसगणोन्नयनं । स्तुतशस्त्रे भवतश्चतुर्षु चमसगणेषु प्रथमाभ्यामध्वर्युः प्रचरत्युत्तराभ्यां प्रतिप्रस्थातैष प्रथमः पर्याय । एवं विहितो द्वितीयस्तृतीयश्च रात्रिपर्यायः । प्रतिप्रस्थाताश्विनं द्विकपालं निर्वपति । श्रपयित्वासाद्य होतृचमसमुख्यान् संधिचमसानुन्नयन्सर्वं राजानमुन्नयति । ॥ ४ ॥

त्रिवृद्राथंतरं संधिस्तोत्रमाश्विनं शस्त्रं परःसहस्रमुदित आदित्ये तस्मिन्परिहिते होतृचमसमध्वर्युरादत्त इतरांश्चमसा-

---

१ प्रतिपद्यते all the Mss.

ध्वर्यवः । पुरोडाशं प्रतिप्रस्थाता सोमैः सह सर्वहुतं जुहोति पङ्क्तिच्छन्दस इति भक्षमन्त्रं संनमति । यस्मात्पशवः प्र ग्रेव भ्रंशेरन्सो ऽप्तोर्यामेण यजेत । चत्वारश्चमसगणा आग्नेयैन्द्रवैश्वदेववैष्णवा[1] यथैको रात्रिपर्यायः । संधिचमसवत्तेषां प्रचरणमतिच्छन्दस इति भक्षमन्त्रं संनमत्यग्नीदौपयजानित्यादि समानम् । ॥ ५ ॥

यः स्तोमभागान्विद्यात्स ब्रह्मा[2] भवति[2] । होत्रध्वर्यूद्गातृभिः क्रियमाणे कर्मणि तावत्तस्मिन्यज्ञाः संचरन्ति । तथा छिद्रापिधानाय[3] यज्ञेशं विष्णुमहं[4] ध्यायीत । सर्वेषु यदि प्रमत्तो व्याहरेत् त्रीणि पदा विचक्रमे तदस्य प्रियं ते ते धामानीत्यृचो वैष्णवीर्जपेद्व्याहृतीश्च । ब्रह्मन् स्तोष्यामः प्रशास्तरित्यभिज्ञाय देव सवितरेतत्ते प्राहेत्यनूच्य रश्मिरसि क्षयाय त्वा क्षयं जिन्वोꣳ स्तुतेति प्रथमेन स्तोमभागेन बहिष्पवमानस्तोत्रं प्रसौत्येवमनूच्य सर्वस्तोत्राणामुत्तरेणोत्तरेण स्तोमभागेन प्रसौत्यग्निष्टोमे द्वादश स्तोमभागास्त्रयोदशात्यग्निष्टोमे पञ्चदशोक्थ्ये षोडश षोडशिनि सप्तदश वाजपेय एकोनविंशदतिरात्रे त्रयस्त्रिंशदप्तोर्यामे संख्यानि तत्र तत्रोक्तान्येवं सर्वसंस्थासु ब्रह्मत्वम् । ॥ ६ ॥

वाजपेयेन ब्राह्मणो राजन्यो वृद्धिकामो यजेत । नित्यवद्वा । तस्य सर्वे[5] सप्तदश संख्या भवति । षोडशिवत्कल्पो । वसन्तादिषु

---

१ आग्नेन्द्र० MLTHBV; आहेन्द्र० A.

२ Thus V only; ब्रह्म भवति MLTA; स ब्रवीति B; सब्राति H.

३ Thus B only; छिद्रपि(वि)धा० the other Mss.

४ Thus all the Mss.! only B; विष्णुमहन्ध्या०.

५ सर्वः HTAV; सर्वं M; पर्वः LB.

चतसृष्वृतुषु पुरस्तात्पौर्णमास्यै दीक्षेत । त्रयोदश दीक्षास्तिस्र उपसदः सप्तदशीं प्रसुतो ऽपिवा सप्तदश दीक्षास्तिस्र उपसद एकविंशीं प्रसुतो ऽपिवा तिस्र एव दीक्षास्तिस्र उपसदः सप्तमीं प्रसुतः । सप्तदशारत्निर्यूपश्चतुरश्रिर्गोधूमचषालो । बैल्वो वा यूपः खादिरः पालाशो वा । शतेन राजानं क्रीणाति । सप्तनवतिर्गावो हिरण्यं वासो ऽजा च त्रीण्येतच्छतं । सप्तदशेन वा । प्रागुपसद्भ्यः कृत्वा पूर्ववत्सुरां संदधाति । खरकाले प्रतिप्रस्थाता दक्षिणस्यानसो ऽधस्तात्पश्चादक्षं सुराग्रहणार्थं द्वितीयं खरं करोति । ॥ ७ ॥

रशनापरिव्याणे[1] प्राङ्मुखः सप्तदशभिर्वसोभिरुदीचीनदशं[2] वेष्टयत्यग्नीषोमीयं पशुपुरोडाशमनु देवसुवां हवींषि निर्वपत्यग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणामिति यथासमाम्नातानि हवींषि । पुरोडाशस्यैषां हविषां समानं स्विष्टकृदिडं । सवने सवने पुरस्ताद्देव सवितः प्रसुव यज्ञमिति सावित्रं जुहोत्यत्रैतान्दुन्दुभीननुदिशमासञ्जयति पञ्च दक्षिणायां श्रोण्यां पञ्चोत्तरस्यां चतुरो दक्षिणे ऽंसे त्रीनुत्तरे । तथा ह्यस्मै दिग्भ्यो वाचमवरुन्धते । वसतीवरीः परिहृत्य या यजमानस्य व्रतधुक् तामाग्निरे दुहतेत्येवं संप्रेष्योपवसन्त्यृत्विजो हिरण्यस्रजः सुत्ये ऽहनि प्रचरन्ति । पात्राण्यासादयन्नैन्द्रातिग्राह्यपात्रस्य स्थाने पञ्चैन्द्राण्यासादयति । तेषामैन्द्रवत्प्रचारः । ॥ ८ ॥

---

१ R. परिव्ययणे ?

२ ०दीचीनं दशं MAHB; ०दीचीनः दशं LTV.

षोडशिपात्रमासाद्य सप्तदश प्राजापत्यानि सोमग्रहपात्राण्यासादयति। तानि षोडशिपात्रसदृशाण्यपरस्मिन्खरे प्रतिप्रस्थाता सप्तदश मृन्मयानि सुराग्रहपात्राण्यासादयत्य।तिरात्रवत्क्रतुकरणमै।न्द्रमतिग्राह्यं गृहीत्वोपयामगृहीतो ऽसि नृषदं त्वा द्रुषदमित्येतैः पञ्चभिः प्रतिमन्त्रं पञ्चैन्द्रानतिग्राह्यान्गृह्णाति। पुनातु ते परिस्रुतमिति यजुषाध्वर्युवत्प्रतिप्रस्थातोदीचीनदशेन वालमयेन सुरां पुनात्य।या विष्ठा जनयन्कर्वराणीत्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये त्वा जुष्टं गृह्णामीत्यध्वर्युः पूर्वो वायव्येन द्रोणकलशात्सोमग्रहान्सप्तदश प्राजापत्यान् गृह्णात्येष ते योनिः प्रजापतये त्वेति परिमृज्य स्वायतने सादयति। ॥९॥

कुविदङ्ग यवमन्त इति परिमृज्य स्वायतने सादयत्य।थ वा सोमग्रहान् कुविदङ्ग यवमन्त इत्यनुद्रुत्योपयामगृहीतो ऽसि प्रजापतये त्वेति सुराग्रहान्सोमग्रहमन्त्रेण पश्चात्तदवमध्वर्युप्रतिप्रस्थातारौ[1] व्यतिषज्य गृह्णीतः। पशूपाकरण आग्नेयमैन्द्राग्नमैन्द्रं मारुतीं वशां सारस्वतीं मेषीमपन्नदतीमुपाकृत्य सप्तदश प्राजापत्याञ्श्यामानेकरूपान्सारस्वतमेषमुखानुपाकरोति। सर्वान्पर्यग्निकृत्य भिन्नदेवतानालभते समानदेवतान् सारस्वतादीन् ब्रह्मसाम्नि। सर्वेषां बर्हिर्वपाश्रपणीकुम्भीहृदयशूलप्लक्षशाखा भिद्यन्ते। पुरस्तादग्नेर्हरणमध्रिगुः प्रयाजाः परिवप्यौ संज्ञप्तहोमो रशनोदसनं वपाश्रपण्यनुप्रहरणमभिहोमो मार्जनं वरदानं च तन्त्रं[2]। भिन्नदेवतानां तु प्रतिपशु संस्काराः प्रत्यहार्या

---

१ ? पश्चात्तदवमध्वर्यु० ML; पश्चातदवमध्वर्यु० TV; पश्चाध्वर्युः AHB.

२ तत्र all the Mss.

आवर्तन्ते । यथादैवतं मन्त्राणामूहो । भिन्नदेवतानां पृथग्वपादि[1] प्रातःसवने प्रचरति ॥ १० ॥

पूर्ववदुद्द त्वं चित्रमिति दाक्षिणहोमान्तं कृत्वेन्द्रस्य वज्रो ऽसि वार्त्रघ्न इति रथवाहनाद्रथमुपावहृत्य वाजस्य नु प्रसवे मातरं महीमिति धूर्गृहीतं रथमन्तर्वेद्यामावर्तयन्नप्स्वन्तरमृतमप्सु[2] भेषजमित्यश्वानप्सु स्नापयति वायुर्वा त्वा मनुर्वा त्वेति प्रष्टिवाहिनं देश्चरथमश्वं युनक्ति[3] । तथा दक्षिणमुत्तराश्वमपां नपादाशुहेमन्नित्येषां ललाटानि संमार्ष्ट्येष यजुर्युक्तो रथो ऽध्वर्यवे देयः । षोडशसु रथेषु तूष्णीमश्वान्युनक्त्यनांसि रथान् हस्तिनो ऽश्वान्निष्कानजा दासीर्वासांस्यवीर्गवां शतानि सप्तदश सप्तदशानि ददात्येष एवाजाविवासोवर्जदक्षिणो दुन्दुभ्यधिक आप्तो वाजपेय । एकवयःप्रभृत्या पञ्चमवर्षेभ्यो वयसो वयसः सप्तदश सप्तदशानि ददात्येष कुरुरजसप्तदशैव सो ऽपि कुरुः[4] । शिपिविष्टवतीषु बृहता स्तुवतः पञ्चदशस्तोमेन सप्तदशेन वा प्रकृति-

---

१ पृथग्वपादि ML; पृथग्वपादित्प्रा० TV; प्रथपादि पूर्ववत्प्रा० AB; पृथपादिः पूर्ववत्प्रा० H.

२ अन्तर्वेदि AB instead of ०वेद्याम्, perhaps preferable, cp. Baudh.

३ ? ०न देशिरथ० H; ०नदेश्चरथ० ML; ०नं देश्चरथ० TV; ०नं देवशरथ० A; ०नन्देशिरथ० B.

४ A difficult passage; एष कुरुरज सप्तदशैव सोम कुरुः ML and TV (which last two only have: कुरुरजस्सप्त०); एष कुरुजसप्तदशैव सोपि कुरुः A; एष कुरुराज० H, further as A. Here the Kuruvājrapeya is described, cp. Āp. XVIII. 3. 7, Śāṅkh. XV. 3. 17, Lāṭy. VIII. 11. 18.

दक्षिणः संस्था वाजपेयः[1] । पूर्वेणाहवनीयं प्राचः सप्तदश रथानवस्थापयन्ति । ॥ ११ ॥

तेषां दक्षिणे[2] यजुर्युक्तः । पूर्वेणाग्नीध्रं राजपुत्रो ऽवस्थाय सप्तदश प्रव्याधानिषून् प्राचीनानुदीचीनान्वा क्षिपति । यत्रोत्तमो निपतति[3] तत्रौदुम्बरं काष्ठं लक्षणं करोति । प्राङ् माहेन्द्रात्कृते नैवारं सप्तदशशरावं बार्हस्पत्यं पयसि चरुं चतुर्धा विभज्य प्रतिप्रस्थाता निर्वपत्येतत्पुरोडाशाः प्राजापत्याः पशवस्त्रिचतुः-शरावान्मन्त्रेण पञ्च शरावान् तूष्णीं । सिद्धं चरुं सुरक्षितं सर्पिर्मिश्रं चात्वाले ऽतिनदधाति[4] । तं राजपुत्रो गोपायति । चात्वाले रथाक्षं निमिनोति । तस्मिन्रथचक्रमौदुम्बरं सप्तदशारं प्रतिमुञ्चति । विष्णोः क्रमो ऽसीति यजमानो यजुर्युक्तं रथमभ्येत्याङ्क्तौ न्यङ्काविति रथपक्षसी अभिमृशति । ॥ १२ ॥

देवस्याहमिति ब्रह्मा चात्वाले रथचक्रं निमितमारोहति देवस्याहमिति यजुर्युक्तं यजमान । इन्द्राय वाचं वदतेति दुन्दुभीन् समाघ्नन्ती।तरान् षोडश रथानन्ये पुरुषा आरोहन्ति । वाजिनो वाजजित इति युग्मावश्वौ नैवारं चरुमवघ्रापयति । प्रप्रोथयोर्लेपं[5] निमार्ष्टि । विष्णोः क्रमो ऽसीति यजमानारूढं

---

१ I have accepted the reading as presented in H, with which A nearly agrees. In MLTV, there is a long dittography and at the end of the Khaṇḍa the text misses some words, which are partly incorporated in this dittography.

२ दक्षिणेन VT only; read probably दक्षिणे.

३ नुपतति MLTV; क्षपति (!) AHB.

४ It is only M that has not ऽति.

५ Thus emended; प्राप्तयो० T; प्रात्तयो० V; प्राक्तात्तयो ML; पाकयो० AB; पाद्दया० H.

रथमध्वर्युरारुह्याश्वाजनीत्यश्वाजनीमादायार्वासि सप्तिरसीत्यश्वान् प्रतियौति । स रथः प्राक् पूर्वं यातीतरे[1] ऽनुयान्ति । वाजिनो वाजं धावतेति चतसृभिर्धावत उपतिष्ठते । ब्रह्मा त्रिः परिवर्तमाने चक्रे वाजिनां साम गायते । ऽग्निरेकाक्षरेण वाजमुदजयदिति सप्तदशोज्जितीर्यजमानं तदा[2] वाचयति । लक्षणं गत्वा यथेतं प्रदक्षिणमावर्तन्ते । ॥ १३ ॥

ते नो अर्वन्त इति चतसृभिराधावत उपतिष्ठत । आ मा वाजस्येत्यागतेषु जुहोती।यं वः सा सत्या संधाभूदिति दुन्दुभिविमोचनीयं[3] सेवान्वोपस्पृशति[3] । वाजिनो वाजजित इति पूर्ववदश्वावघ्राप्यलेपं निमार्ष्टि । कृष्णलं कृष्णलं वाजसृद्भ्यः पुरुषेभ्यः प्रयच्छति । तानि प्रत्यादायैकधा ब्रह्मण उपहरति मधुपूर्णं हिरण्यपात्रं[4] शतमानं । तद्ब्रह्मा प्रतिगृह्य रथचक्रादुपावहरते[5] । क्षत्रस्योल्बमसीति तार्प्यं वासो यजमानः परिधत्ते क्षत्रस्य योनिरसीति दर्भमयं पत्नी । जाय एहि सुवरिति यजमानः पत्नीमामन्त्रयते । रोहाव रोहाव हि सुवरिति पत्नी प्रत्याह । त्रिरामन्त्रयते त्रिः प्रत्याहाहं नावुभयोः सुवो रोक्ष्यामीत्याह यजमानस्त्वं हि नावुभयोः सुवो रोहेति पत्नी प्रत्याह । वाजस्य प्रसवस्येति द्वादश वाजप्रसवीयानि जुहोति । ॥ १४ ॥

---

१ यातेतिमितरे M; यादितिमितरे LTV; पूर्वयातेतितरे H; A is hopelessly corrupt; यावेतितनोति B.

२ तदा VTHAB; तथा ML.

३ ०नीयसेवान्वोपस्पृ० MLTV; AHB wholly corrupt; cp. Āp. XVIII. 5. 2-3.

४ च ins. AHB.

५ उपावहरते LTHVB; उपाहरते M; उपवहन्ते A.

आयुर्यज्ञेन कल्पतामिति दशभिः कल्पैः सरजसि यूपमधिरोहेणाभ्यन्तं[1] गत्वा सुवर्देवाꣳ अगन्मेति बाहू उद्गृह्णीत[2]। समहं प्रजया सं मया प्रजेतीमं लोकं प्रत्यवेक्षेत। यजमानमाश्वत्थैरासपुटैरूषपुटैरुभयैर्वा दीर्घवंशेषु प्रबध्यान्नाय त्वेति चतुर्भिः प्रतिमन्त्रं वैश्याः पुरस्तात्प्रत्यञ्चं घ्नन्ति। हन्तारं हन्तारमभिपर्यावर्तते यजमानो। यन्ताराड्[3] यन्तासि यमनो धर्तासि धरुणः कृष्यै क्षेमाय त्वेति प्रत्यवरोहते ऽग्रेण यूपमासन्दीं निधाय तस्यां[4] बस्ताजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तेजो ऽसीति तस्मिन् शतमानं हिरण्यं निधायामृतमसीति रुक्मे दक्षिणं पादं प्रतिष्ठापयति पुष्टिरसि प्रजननमसीति बास्ते सव्यमथ माहेन्द्रस्य स्तोत्रमुपाकरोति। ॥ १५ ॥

दध्नाज्येन संयुतात्स्रुवेणौषधादादाय वाजस्येमं प्रसवः सुषुवे अग्र इति सप्तान्नहोमान् जुहोत्यभिषेकाय होमोच्छेषणं परिशिष्यानभिषिच्य यथाग्निचित्ये सरजसि काले माहेन्द्रेण स्तुवत उक्थ्यस्य मध्यमे पर्याये ब्रह्मसाम्न्युपाकृते सारस्वतप्रमुखेषु प्राजापत्येष्वालब्धेष्वनभिघारिताभिश्चरति। सारस्वतस्य वपया चरित्वा प्राजापत्यानां वपाभिः समवदाय चरति। पुरोडाशस्थाने नैवारेण चरतीडान्तेन[5]। भिन्नदेवतानां[5] पशूनां

---

१ ०धिरोहेणनाभ्यतं AHB; ०धिरोहेणारुणाद्दा (or ह) भ्यन्तं MLTV.

२ Thus B; बाभ्र उद्गृह्णीत A; बाहू उद्गीत H; चोद्गृह्णीत M; चाद्गृह्णीत TLV.

३ The mantra must be corrupt, cp. Āp. XVIII. 5. 20.

४ प्रतिदिशं ins. MAHB.

५ ०डान्तेनाभिन्न० AHB; ०डान्ते भिन्न० MLTV.

हविर्भिः पृथक् चरति । षोडशिचमसैः प्रचर्य बृहत्स्तोत्रायातिरिक्ताय होतृचमसमुख्यांश्चमसानुन्नयति । वैष्णवीषु शिपिविष्टवतीषु स्तुवते । ॥ १६ ॥

शस्त्रं प्रतिगीर्य प्राजापत्यानां मुख्यमध्वर्युर्ग्रहमादत्त इतरे ऽन्यान् । सुराग्रहाणां मुख्यं प्रतिप्रस्थातादत्ते वाजसृत इतरानाददते चमसांश्चमसाध्वर्यवः । संपृचः स्थ सं मा भद्रेण पृङ्क्तेत्यध्वर्युप्रमुख्याः प्राञ्चः सोमग्रहैराहवनीयमुद्यन्ति । विपृचः स्थ वि मा पाप्मना पृङ्क्तेति प्रतिप्रस्थातृप्रमुखाः प्रत्यञ्चः सुराग्रहैर्मार्जालीयमुद्यन्ति । प्रजापतये ऽनुब्रूहि प्रजापतये प्रेष्येति संप्रेष्यति । वषट्कारानुवषट्कारेण सोमग्रहैर्जुह्वति । सुरग्रहाननुप्रकम्पयन्ति[1] । ॥ १७ ॥

विराट्छन्दसः[2] प्रजापतिना पीतस्येति भक्षमन्त्रं संनमति । सर्वेषां पशूनामवदानीयानि सोमग्रहांस्त्वृत्विग्भ्य उपहरन्त्यनवदानीयानि सुराग्रहांश्च वाजसृद्भ्यस्ते ऽपि विमथीकुर्वाणा[3] वाजसृतो दक्षिणस्यां वेदिश्रोण्यां सुराग्रहान् भक्षयन्ति । यत्र भिन्नदेवतानां वपाभिश्चरति तत्र सारस्वतादीनां प्राजापत्यानां[4] वपभिश्चरति[5] । यत्र भिन्नदेवतानां हविर्भिस्तत्रेतरेषां हविर्भिरित्येकेषां । संतिष्ठते वाजपेयस्तेनेष्ट्वा सौत्रामण्या यजेता-

---

१ ०कम्पयन्ति H; ०कम्पयति MLTABV.

२ ०छन्दः the Mss.

३ ०द्भ्यस्तेदिविमानाधिकुर्वाणा ML; ०द्भ्यस्तेपि विमानाधिकुर्वाणा TV, जसृदेपि माकुर्वाणा A; वाजसृद्देपिमायकुर्वाण RHB.

४ च ins. MLTV, om. AB, HR corrupt.

५ वपाश्चरति VMLTAB; HR corrupt.

मित्रया च[1] मैत्रावरुण्यासौ [2]छत्रवृत्तिं [2]वर्तयन्नवरोहणाभिवादने जघन्यसमसमानासनानुचरणानि[3] वर्जयेद्‌। यथाग्निष्टोमेन[4] बृहस्पतिसवेन प्रत्यवरोहणीयेनेष्ट्वा छत्रवृत्तिं निवर्तयेद्‌। रुक्मकुण्डली श्वेतच्छत्री च भवति भवति। ॥ १८ ॥

इति सप्तदशः प्रश्नः ॥



१ Thus the Mss., read वा .

२ सौत्रवृ० LV; सौत्रवृ० ML; सौत्रत० RAB; सौत्रन० H; cp. Lāṭy. VIII. 12. 1, 2.

३ ? जघन्यसमासमासनानु० T; the same MV but with जघन्येन०; जघन्येन समानानु० L; जघन्यसमास्तानु० RH; जंघनेसमास्तानु० A. Perhaps जघन्यसमासना० would be right.

४ ०ष्टोमेनानुवृत्त० MLT.

अग्निं व्याख्यास्यामो । यो ऽग्निं चिनुते तस्य सर्वं सुकृतं भवति । सर्वेषु निष्कृतिं करोत्यपि ब्रह्महत्यायास्तस्मादग्निचिन्नाभिचरितवै । प्रत्यगेनमभिचारः स्तृणुत इति विज्ञायत[१] । एष नारकीं पीडां न जानाति । सो ऽग्निरुत्तरक्रत्वर्थो ऽन्यत्र साद्यस्क्रेभ्यो वाजपेयात्षोडशिनः सारस्वताच्च सत्त्रात्प्रथमयज्ञे चेत्येक । अग्निं चेष्यमाणो ऽमावास्यायां पौर्णमास्यामापूर्यमाणपक्षे[२] पुण्ये नक्षत्रे वैकाष्टकायां वोखां संभरत्याषाढामधिकृत्येत्येके[३] । व्याख्यातमृत्विग्वरणं । बृहस्पतिपुरोहिता देवा देवानां देवाः प्रथमजा देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशास्त्रिस्त्रयस्त्रिꣳशा अनु व आरभ इदꣳ शकेयं यदिदं करोमि स्वाहेति जुहोति । चतुर्गृहीतेनाष्टगृहीतेन वा स्रुचं[४] पूरयित्वा युञ्जानः प्रथममित्यन्तर्वेद्यूर्ध्वस्तिष्ठन्सावित्राणि यजुरन्तमान्यष्टावनुद्रुत्य जुहोत्यृचा स्तोमꣳ समर्धयेति चतुर्गृहीतेनोत्तरया नवम्या जुहोत्युखाः संभरिष्यन्देवस्य त्वेति चतुर्भिः पर्यायैरभ्रिमादत्ते । सा व्याख्याता प्रवर्ग्यसंभरणे । इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते प्रतूर्तं वाजिन्नाद्रवेति रशनयाश्वमभिदधाति । तूष्णीं गर्दभरशनमादाय युञ्जाथाꣳ रासभं युवमिति गर्दभमभिदधाति । योगे योगे तवस्तरमिति तिसृभिरश्वप्रथमाः प्राञ्चो गच्छन्ति । पृथिव्याः सधस्थादिति वैश्यं

---

१ Partly a variant on TBr. I. 7. 7. 5.

२ After पौर्णमास्याम् AHB ins. वा.

३ आषाढामधिकृत्येत्येके MTV and L (which reads आषाढमधि०); आषाढायामित्येके H; आषाढ्यामित्येके AB.

४ स्रुचं MLTV; स्रुवं AHRB.

प्रदक्षिणीकुर्वते । स वै पुरुषांस्तान् किमच्छेतेति[1] पृच्छति । तमग्निं पुरीष्यमङ्गिरस्वदच्छेम इति ब्रूयुरग्निं पुरीष्यमङ्गिरस्वदच्छेहीति यदि द्वेष्येण संगच्छेत[2] तं जघन्यः सुनिर्दिशत्यग्निं[3] पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीकवपां सूर्यस्योदयनं प्रति नायकमुद्धृत्योपतिष्ठेरन्नन्वग्निरुषसामग्रमख्यदिति[4] वल्मीकवपायाः प्रक्रामत्यागत्य वाज्यध्वन आक्रम्य वाजिन्निति द्वाभ्यामश्वं मृदमाक्रमयति । द्यौस्ते पृष्ठमित्यश्वस्य पदेऽप उपसृजति । स्रुचि चतुर्गृहीतं गृहीत्वा दक्षिणेऽवान्तरशफे हिरण्यमवधाय परिस्तीर्य जिघर्म्यग्निं मनसेति जुहोत्येवमा त्वा जिघर्मीत्युत्तरस्मिन्नवान्तरशफे । जिघर्म्यग्निमा त्वा जिघर्मीति मनस्वतीभ्यामेकामाहुतिं जुहोतीत्येके । ऽपोद्धृत्य हिरण्यं परि वाजपतिरिति तिसृभिस्तयाश्वपदं मृत्खनं परिलिखति । गायत्र्या परिलिखतीत्युक्तं[5] । देवस्य त्वा सवितुः प्रसवे ज्योतिष्मन्तं त्वेति द्वाभ्यां खनत्युत्तरतः संभाराणि प्राचीनाग्रान्दर्भान् संस्तीर्य तेषु प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्यापां पृष्ठमसीति पुष्करपर्णमाहरत्युपरिष्टात्कृष्णाजिने ऽधस्ताद्दण्डमुत्तानमास्तृणात्यपां पृष्ठमसीत्येतयैव विवेश्य शर्म च स्थो वर्म च स्थः संवसाथाꣳ सुवर्विदेति द्वाभ्यां कृष्णाजिनपुष्करपर्णे अभिमृशति । पुरीष्यो ऽसि विश्वभरा इति मृत्खनमभिमन्त्र्यापोद्धृत्य पुष्करपर्णे त्वामग्ने

१ R; किमच्छेथेति, cp. Baudh.

२ Emended; ०गच्छे the Mss.

३ सुनिर्दिशति LBTAHV; सुविनिर्दि० M.

४ ? नायक० MLTV; नाक० AHB.—उपतिष्ठेत TV; उपतिष्ठे L; उत्तष्ठेरन् ML; उपतिष्ठेरन् HB.

५ See TS. V. 1. 3. 5.

पुष्करादधीति तिसृभिश्चतसृभिर्वा गायत्रीभिर्ब्राह्मणस्य कृष्णाजिने मृदं संभरत्युत्तराभिस्त्रिष्टुब्भी राजन्यस्य जगतीभिर्वैश्यस्य। यं कामयेत वसीयान्स्यादित्युभयीभिस्तस्य संभरेदित्युक्तं[1]। पुरीष्यो ऽसि विश्वभरा इत्यादिभिश्चतसृभिर्गायत्रीभिस्त्रिष्टुब्भिस्त्वाष्टाभिरेकैकं पिण्डमपि वैकैकया। जनित्वा हि जेन्य इति मृदमभिमृशतीत्येके। ऽथ पदं[2] विश्वलोपेन पूरयित्वा सं ते वायुरित्यद्भिरुत्सृजति। पुष्करपर्णमुपरिष्टान्मृदं निधाय कृष्णाजिनस्यान्तान्मौञ्जेनार्कमयेण वा योक्त्रेण त्रिवृता सुजातो ज्योतिषा सहेत्युपनह्योदुत्तिष्ठ[3] स्वध्वरोर्ध्व ऊ षु ऊतय इति सावित्रीभ्यामुत्तिष्ठति। स जातो गर्भो असि रोदस्योरिति हरति। स्थिरो भव वीड्वङ्ग इति गर्दभ आसादयति। शिवो भव प्रजाभ्य इत्यासन्नमनुमन्त्रयते। प्रैतु वाजी कनिक्रददित्यश्वं पूर्वं नयन्ति। नानद्रासभः पत्वेत्यन्वञ्चं गर्दभमृतँ सत्यमृतँ सत्यमिति द्यावापृथिवी समीक्षते। वैश्यं प्रदक्षिणीकुर्वते। पुरुषाः किं भरथेति स पृच्छत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इतीतरे प्रब्रूयुरुत्तरेण विहारं परिश्रित्यौषधयः प्रतिगृह्णीताग्निमेतँ शिवमायन्तमोषधयः प्रतिमोदध्वमिति द्वाभ्यामोषधीषु पुष्पवतीषु फलवतीषु पुरीषमुपावहृत्याभ्युद्धृत्याश्वगर्दभावुत्सृजन्त्यथोपनद्धां[4] मृत्तिकां वि पाजसेति विस्रंसयत्यापो हि ष्ठा

---

१ See TS. V. 1. 4. 5.

२ अथ पदं TV; अध पदं L; अथवा पदं MAHB.

३ ०पनह्योदुत्तिष्ठ TB; उपनह्योवतिष्ठ ML; उपनह्योरभिद्र H; ०पनह्योदुत्तिष्ठ० V.

४ Thus T only, all the other Mss. are more or less corrupt.

मयोभुव इति तिसृभिरनुच्छन्दसमप उपसृजति । मित्रः सꣳसृज्य पृथिवीमयक्ष्माय त्वा सꣳसृजामीति द्वाभ्यां पिष्टाभिर्मकपालशर्कराभिरजकृष्णाजिनलोमभिश्च वेण्वङ्गारैर्व्रीहितुषैः पलाशकषायेणान्येन च दृढार्थैन संसर्जनैः संसृजति कृष्णाजिने । रुद्राः संभृत्य पृथिवीं बृहदिति मृदं॰ संभरति । मखस्य शिरो ऽसीति पिण्डं करोति । यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यामुपनिगृह्णाति । तृतीयं मृदो ऽपच्छिद्य त्रीन पिण्डान् सꣳसृष्टां वसुभिरित्येकमुखाकृते प्रयच्छति । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वत्पृथिव्यसि ध्रुवासीति छन्दसा यजमानः क्रियमाणामनुमन्त्रयते । सिनीवाली सुकपर्देति मृदो ऽर्धं प्रयच्छति । रुद्रास्त्वा कृण्वन्त्विति क्रियमाणामुखां करोतु शक्त्येति सर्वामन्ततः प्रयच्छत्यादित्यास्त्वा कृण्वन्त्विति क्रियमाणां । विश्वे त्वा देवा वैश्वानरा इति च । त्र्युद्धिं करोतीत्युक्तं[1] । चतुर्भिश्छन्दोभिर्मह्युखां करोत्यदितिस्ते बिलं गृह्णात्विति वेणुपर्वणा बिलं करोति । कृत्वाय सा महीमिति खरे निदधात्येवं द्वितीयां करोत्येवं तृतीयां । मित्रैतां त उखां परिददाम्यभित्त्या एषा मा भेदीति मित्राय परिददाति । य उखां करोत्येषो ऽषाढामेतस्या एव मृदस्तूष्णीं चतुरश्रामिष्टकां त्रियालिखितां[2] पञ्च ऋषभांस्तिस्रो मण्डलेष्टका । या मृदति-

---

१ See TS. V. 1. 6. 4.

२ त्रियालि॰ TV; त्रिधालि॰ the other Mss.

ग्रिव्यते तया[1] प्रवाते प्रतिलेपमुपवातयत्यश्वशकमादीप्य[2] वसवस्त्वा धूपयन्त्विति सप्तभिर्मुख्यामुखां धूपयति वृष्णो अश्वस्य[3] वा । धूपितां कृत्वैवं द्वितीयां धूपयत्येवं तृतीयां तूष्णीमिष्टका । अदितिस्त्वा देवीत्युत्तरतः शालामुरुबिलमिवावटं खानयति । तं पचनेनावस्तीर्य देवानां त्वा पत्नीर्देवीरिति मुख्यामुखां प्रवृणक्त्येवं द्वितीयामेवं तृतीयां तूष्णीमिष्टकास्ताः प्राचीरुदीचीर्वायातयति । पचनेनोपरिष्टात्संपरिच्छाद्य मृदालिप्य धिषणास्त्वेति प्रतिदिशमुपोषति । धिषणास्त्वादेवीरिति पुरस्ताद् ग्नास्त्वा देवीरिति दक्षिणतो वरूत्रयस्त्वेति पश्चाज्जनयस्त्वेत्युत्तरतो । मित्रैतामुखामिति परिददाति । ॥ १ ॥

पक्वेष्वभीमां महिना दिवं मित्रस्य चर्षणीधृत इति द्वाभ्यां सोपकरणोऽभ्येति । तिसृभिर्मैत्रीभिरुपचरेदित्येके । धृष्टिमादाय देवस्त्वा सवितोद्वपत्विति मुख्याया उखाया अङ्गारानवयौत्युत्तिष्ठ[4] बृहती भवेत्येनामुच्छ्रयत्यपद्यमाना पृथिव्याशेत्युत्तरतः सिकतासु प्रतिष्ठापयति संदंशेन परिगृह्य । सते ऽवधाय वसवस्त्वोच्छृन्दन्त्विति चतुर्भिश्छागापयसाच्छृणत्ति । स्वाच्छृतां कृत्वा गोपयसाभिविष्यन्दयत्येवमितरे तूष्णीमिष्टका । उपरते श्वसथे खार्यामवधाय कृष्णाजिनेन प्रच्छाद्योत्तरे शालखण्डे

१ पिय H; पिया B, या the other Mss.

२ ०लेपमुपपातयति H; ०लेपं विपातयति the other Mss., cp. Baudh. X. 6.

३ The unclassical sandhi is due to the Brāhmaṇic source, see Āp. XVI. 5. 6.

४ ? अवयौम्युत्तिष्ठ T; अवयाम्युत्तिष्ठ VML; AB and H are useless; R: अवधाग्वयौत्युत्तिष्ठ.

शिक्य आसज्या कालात्परिशेते । ऽथास्मिन्नेव[1] पूर्वपक्षे नक्षत्रे[2] वायवे नियुत्वते श्वेतमजं तूपरमालभते । ॥ २ ॥

एतद्व्याख्यातमुत्तरं परिग्राहं परिगृह्य संप्रैषेण प्रतिपद्य स्रुवं स्वधितिं स्रुचश्च संमृड्ढि तूष्णीं पृषदाज्यग्रहणीं पत्नीं संनह्याज्येन च दध्ना चोदेहि प्रतिप्रस्थातः पशुशीर्षाणि विद्धीत्यध्वर्युरेव पशुना प्रचरति । प्रतिप्रस्थाता सप्तैकविंशतिं वा माषान्येन चार्थस्तमादाय पशुशीर्षाण्यभ्येति । वैश्यस्य राजन्यस्य वेषुहतस्याशनिहतस्य वा पुरुषशिरो दक्षिणत उपशेते ऽग्रेणेतराणि । प्राचीनावीतं कृत्वा सप्त माषानुपन्युप्यायं[3] यो ऽसि यस्य त इदं शिर इति शिरः प्रच्छिद्यैतेन त्वममुष्मिन् लोके शीर्षण्वानेधीति सप्तधा वितृण्णां वल्मीकवपां शिरःस्थाने प्रतिदधाति[4] । यो ऽस्य कौष्ठ्य जगत इति तिसृभिर्यामगाथाभिः परिगायति । परिव्याहरन्[5] जपतीत्येके । ॥ ३ ॥

अपि वाहरहर्नयमान इति पलाशशाखया त्रिः परिकर्षत्यपरान्सप्त माषान् न्युप्य वैवस्वते विविच्यन्त इति द्वितीयं परिकर्षत्यपरान्सप्त माषान् न्युप्य ते राजन्निह विविच्यन्त इति तृतीयमत्र प्रतिनिधानमेकविंशतिमाषांस्त्रींस्त्रीन्सप्तस्विन्द्रियेषु न्युप्यापच्छिद्य शिरो वल्मीकवपाप्रतिनिधानमेक आमनन्ति । शिरः प्रक्षाल्य प्राणानपहाय मृदावलिम्पति । प्रोक्षणकाल एतानि

---

१ Thus HRB; तथा० the other Mss.

२ पुण्ये नक्षत्रे HR.

३ उपन्यप्य LT; उपन्यस्य MV; उपन्कुर्य H; AB worthless.

४ R प्रतिनिदधाति, cp. the next khaṇḍa.

५ परिव्याहरन् MLTB; परिव्याहारं HA.

च प्रोक्षत्यपि वेदमस्माकं भोगाय भुजे भूयादिति पुरुषग्निर आदायोदेह्यग्ने अधि मातुः पृथिव्या इत्याहृत्य परि त्रिविष्ट्यध्वरं परि वाजपतिः कविरिति द्वे परि प्रागाद्देवो अग्नी रक्षोहामीवचातनः । सेधन्विश्वा अप द्विषो दहन्रक्षांꣳसि विश्वहेति तिसृभिः पर्यग्नि कृत्वापहाय प्राणान्मृदा प्रलिप्य निदधात्यत्रैके पश्वालम्भं[1] ब्रुवते । ऽग्निभ्यः कामाय पशूनालभते ऽश्वमृषभं वृष्णिं बस्तं प्राजापत्यमजं तूपरं मुष्करानपि वा प्राजापत्यप्रथमानेकविंशतिं चतुर्विंशतिं वा पराचीः सामिधेनीरन्वाहैकादश प्राकृतीः समास्त्वाग्न इति दशाग्निकीस्तासां ज्योतिष्मतीमुद्धृत्य नव धाय्यालोके दधाति । पृथुपाजवत्यौ युक्ष्वा हि देवहूतमानित्येकां दधाति । ताः पराचीरनूच्यमानाश्चतुर्विंशतिः प्रतिपद्यन्ते[2] । ज्योतिष्मत्या परिदधात्यपि वा रायो अग्ने महे त्वा दानाय समिधीमहे । ईडिष्वा हि महे वृषन्द्यावा होत्राय पृथिवीमिति यद्येकविंशतिरुपेमसृक्षि वाजयुर्वचस्यां चनो दधीत नाद्यो गिरो मे । ॥ ४ ॥

अपां नपादाशुहेमा कुवित्स सुपेशसस्करसि ज्योतिषद्भिः समन्या यन्तीत्येषापां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वः स्वयशा उपस्थे । उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन्निति तिस्रो ऽप्सुमतीर्यदि चतुर्विंशतिरमुत्रभूयादित्यामयाविनः कुर्यात् । बृहस्पते सवितर्बोधयैनमित्यन्येषां । हिरण्यगर्भः समवर्तताग्र इति स्रुच्यमाघारयत्यूर्ध्वा अस्य समिधो

---

१ पश्वालंभं H; उपालंभं MLTV; B useless.

२ Thus all the Mss. instead of संपद्यन्ते.

भवन्तीति द्वादश प्रयाजानामाप्रियो भवन्त्यत्रिवसिष्ठकण्वकश्यपशुनकसंकृतिराजन्यवध्र्याश्वानां नाराशंसिनां[1] मध्वा यज्ञं नक्षस इत्याप्रीर्भवति[2] । तनूनपादसुरो विश्ववेदा इत्यन्येषा गोत्राणामग्ने नय सुपथा प्र वः शुक्राय भानवे भरध्वमच्छा गिरो मतयो देवयन्तीरग्ने त्वमस्मद्युयोध्यमीवा अग्ने त्वं पारया नव्यो अस्मान् प्र कारवो मनना वाच्यमाना इति[3] सूक्तेनाग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्याद्यः प्राणतो य आत्मदा इति प्राजापतस्य । यदि वा सर्वेषां स्थाने प्राजापत्य एव भवति यदि वा वायव्यः पशुरेव भवति पीवो ऽन्नाꣳ रयिवृधः सुमेधा इति वायुमत्यः श्वेतवत्यो याज्यानुवाक्या भवन्ति । वायव्यः कार्या३ः प्राजापत्या३ इत्युक्तं[4] । तस्याग्नये वैश्वानराय द्वादशकपालं पशुपुरोडाशं निर्वपति । यः कश्चाग्नौ पशुरालभ्यते वैश्वानर एवास्य पशुपुरोडाश इत्येके । ॥ ५ ॥

तेनेष्ट्वा संवत्सरं न मांसमश्नीयान्न स्त्रियमुपेयान्नोपरि शयीत । पशुशीर्षाण्यैन्द्रः प्राण इत्यत्र छित्वा मृदाभिलिप्य शिक्य आसज्जति पुरुषशिरश्च । यदि वायव्य एव तस्य शिरः सर्वशिरःस्थाने भवतीत्येके । ऽथापरपक्ष आग्निकाः संभाराः संभरणीया औदुम्बर्यास्यासन्दी प्रादेशमात्रपदारत्निमात्रशीर्षण्यानूच्या मौञ्जीभी रज्जुभिरेकसराभिर्युता[5] फलकास्तीर्णा

---

१ नाराशंसिनां THV; नाराशंसीना MLAB.

२ आप्रीर्भवति LV; आप्री भ० H; आत्रिर्भ० T; आप्रीता भवति MAB.

३ See TBr. II. 8. 2. 3–5.

४ See TS. V. 5. 1. 3.

५ Read probably with Baudh. व्यूता instead of युता.

वा मृदावलिप्ता षडुद्यामं द्वादशोद्यामं वा मौञ्जं शिक्यं क्रुमुकमाज्यसंयुतं[1] शकलमेकविंशतिनिर्बाधं रुक्ममित्याग्निकानि सर्वोपकरणानि । यत्प्राग्दीक्षणीयायास्तत्कृत्वा त्रिहविषं दीक्षणीयां निर्वपति द्विहविषं वाग्नावैष्णवमेकादशकपालमाग्नावैष्णवं वा घृते चरुमादित्यं च घृते चरुं वैश्वानरं द्वादशकपालं तृतीयं पुरस्तादासंवत्सरभृतो । ऽथ यत्प्रागाध्वरिकीभ्यस्तत्कृत्वा[2] पश्चाध्वरिकीर्जुहोत्याकूतिमग्निमिति षडाग्निकीर्विश्वे देवस्य नेतुरिति सप्तमीं पूर्णामाज्यस्य[3] स्रुचमौद्ग्रहणं जुहोति । संवत्सरं दीक्षित उख्यं बिभर्ति त्र्यहं षडहं द्वादशाहं वाग्नेर्वै दीक्षया देवा विराजमाप्नुवन्नित्युक्तम्[4] । ॥ ६ ॥

यावन्मुष्टिकरणं तावत्कृत्वोखायां शकृत्पिण्डान्पूतितृणानीति[5] संप्रकीर्याज्यस्रुवं[6] प्रत्यस्य मा सु भित्था मा सु रिषो दृंहस्व देवि पृथिवीति द्वाभ्यामाहवनीयस्यान्तमेष्वङ्गारेषु प्रवृणक्ति । मित्रैतामुखामिति परिददाति । यदि भिद्येत तैरेव कपालैः संसृजेत्सैव ततः प्रायश्चित्तिर्यो गतश्रीः स्यान्मथित्वा तस्यावदध्याद्यो भूतिकामः स्याद्य उखायै संभवेत्स एव तस्य स्यादित्युक्तं[7] । स य[8] एवैष संतापाज्जायते या ते अग्न ओजस्विनी

---

१ क्रामु० TV; क्रमु० MLAB; क्रुमु० H; read perhaps क्रौमु०.
२ तत् is missing in all the Mss., exc. in BV.
३ Thus V only; पूर्णम् instead of पूर्णाम् all the other Mss.
४ See TS. V. 6. 7. 1.
५ Thus HAB (and cp. Baudh. X. 12); ०मुंजतृणा० MLTV.
६ स्रुच the Mss.
७ See TS. V. 1. 9. 4.
८ य supplied by me.

तनूस्त्वां त एतेनावजे स्वाहेति तस्मिन्मुञ्जकुलायमवदधाति यं कामयेत भ्रातृव्यमस्मै जनयेयमित्युक्तं[1] । कुसुममुल्लिखितमवदधाति । प्रदाव्यादाहरेद्यं कामयेत शूरो मे राष्ट्र[2] आजयेतेति[2] यं वा प्रस्यन्दिन्यां भूम्यामस्य राष्ट्रं जायुकं स्यादिति कामयेत । वृक्षस्याग्राज्ज्वलतो ब्रह्मवर्चसकामस्य । न काम्यमग्निं कुर्वाण आहवनीये प्रवृञ्ज्याज्जात उख्ये ऽनुगमयत्याहवनीयं । परस्या अधि संवत इति वैकङ्कतीं समिधमादधाति । परमस्याः परावत इति शमीमयीं । विपरीतमेके समामनन्ति । सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुख्यमुपतिष्ठते । यदग्ने यानि कानि चेति पञ्चभिः पञ्चौदुम्बरीः समिधो ऽपरशुवृक्णा आदधाति तैल्वका अभिचरतः । कृणुष्व पाजः प्रसितिमिति पञ्चर्चेन राक्षोघ्नेनोख्यमुपतिष्ठते[3] । तिस्रो नानावृक्षीयाः समिध आदधाति दꣳष्ट्राभ्यां मलिम्लुनित्याश्वत्थीं ये जनेषु मलिम्लव इति वैकङ्कतीं यो अस्मभ्यमरातीयादिति शमीमयीं । तस्मादग्निचितः पापं न कीर्तयेन्नाग्निं बिभ्रतो नाग्निविदः । सꣳशितं मे ब्रह्मोदेषां बाहू अतिरमित्युत्तमे यजमानं वाचयन् तूष्णीमौदुम्बरीयौ समिधावादधाति । मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनौ भरिष्यत्युखा । तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा युनक्त्विति मौञ्जे षडुद्यामे द्वादशोद्यामे वोखामिण्ड्वाभ्यां[4] परिगृह्य शिक्ये स्थापयित्वासन्द्यामासादयति ।

---

१ See TS. V. 1. 9. 4.

२ Thus B; मे रांचा आजा॰ A; मे राजाजा॰ MLTV.

३ रक्षोघ्ने॰ the Mss. (राराक्षो॰ V only).

४ वोखामिद्वाभ्यां परि॰ AHB; ॰वोखां परिगृह्य MLTV.

दृशानो रुक्म उर्व्येत्येकविंशतिनिर्बाधं रुक्मं सूत्रोतमासीनो ऽन्तर्निर्बाधं प्रतिमुच्य बहिर्निर्बाधं कुरुते। विश्वा रूपाणि ॥ ७ ॥

नक्तोषसेति द्वाभ्यां शिक्यपाशं प्रतिमुञ्चते तूष्णीं कृष्णाजिनमुत्तरं। सुपर्णो ऽसि गरुत्मानित्यग्निमवेक्षते। सुपर्णो ऽसि गरुत्मान्दिवं गच्छ सुवः पतेत्युद्यच्छत। ऊर्ध्वं नाभेर्धारयमाणो विष्णोः क्रमो ऽसीति चतुरो विष्णोः क्रमान् क्रामति त्रीन्वाच विष्णुक्रमे तृतीये चतुर्थमनुवर्तयति। न चतुर्थाय प्रक्रामत्यक्रन्ददग्निरित्युख्यमनुमन्त्रयते। ऽग्ने ऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येति चतसृभिरभ्यावर्तिनीभिः प्रदक्षिणमावर्तत। उदुत्तमं वरुण पाशमस्मदित्युदङ् पर्यावृत्य कृष्णाजिनमुन्मुच्य शिक्यपाशमुन्मुञ्चत। आ त्वाहार्षमन्तरभूदग्ने[1] बृहन्नुषसामिति द्वाभ्यां स्वस्थानमुख्यमाहरति[2]। यं कामयेत राजन्यं राष्ट्रं स्यादित्युक्तं[3]। यथाहृतं प्रतिपर्याहृत्यान्तर्वेद्यासन्द्यां[4] सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्हंसः शुचिषदित्यतिच्छन्दसोत्तमया सहोख्यं सादयति। तिसृभिः शर्करायां सादयति हंसवत्योपतिष्ठत इत्येके। ॥ ८ ॥

मुष्टिकरणप्रभृतिकर्माणि प्रतिपद्यते। ऽस्मै व्रतं प्रदास्यन्नन्नपते ऽन्नस्य नो देहीति समिधमादधाति जपेद्वा। येन देवा ज्योतिषोर्ध्वा उदायन्निति प्रादेशमात्रैः काष्ठैरुख्यमुपसमिन्द्धे। यावत्कालो ऽस्य व्रतं प्रदास्यन्भवति देवस्य त्वेत्यनुद्रुत्य गायत्रेण

---

१ ०भूद० (not ०भूर्) all the Mss., only B ०भूर०.

२ उखाम् ML; उख्यम् AHB; उख्याम् TV.

३ See TS. V. 2. 1. 4.

४ सादयति ins. ML.

छन्दसाहरिष्टकामुपदधे तथा देवतयाङ्गिरस्वद् ध्रुवा सीदेति सायं समिधमादधाति । तथा प्रातस्त्रैष्टुभेन छन्दसा रात्रिमिष्टकामिति मन्त्रं संनमत्युदित आदित्ये विसृष्टायां वाचि दिवस्परि प्रथमं जज्ञे अग्निरिति वात्सप्रेणैकादशर्चेन स्वो भूत उपतिष्ठत । एवं पूर्वेद्युः प्रक्रामत्युत्तरेद्युरुपतिष्ठते । ऽथोपवसथीये ऽहन् वात्सप्रं संपद्यत आ क्रयाद्यदहः सोमं क्रीणीयात्तदहरुभयं समस्येत्प्र च क्रामेदुपतिष्ठेताच्च[1] मुष्टिकरणमेके । यद्युख्ये भ्रियमाणे ऽयं देवः प्रजा अभिमन्यते भिषङ् म अग्न आवह स्वरूपं[2] कृष्णावर्तने[3] ॥ ९ ॥

असि होता न ईड्यः ॥ त्वं नो अग्ने भिषग्भव देवेषु हव्यवाहनः । देवेभ्यो हव्यवाडसि ॥ भिषजस्त्वा हवामहे भिषजः समिधीमहि भिषग्देवेषु नो भवेत्येताभिर्भिषग्वतीभिस्तिसृभिस्तिस्रः समिध आदध्याद्यदि कामयेत वर्षेदिति सूर्यो अपो विगाहते रश्मिभिर्वाजसातमः । बोधा स्तोत्रे वयोवृधः ॥ परि यो रश्मिना दिवो ऽन्तान्ममे पृथिव्याः । उभे आ प्रप्रौ[4] रोदसी महित्वा ॥ वहिष्ठेभिरिति सौरीभी रश्मिवतीभिस्तिसृभिस्तिस्रः समिध आदध्याद्यदि कामयेत न वर्षेदित्यदृश्रमस्य केतवस्तरणिर्विश्वदर्शतो दिवो रुक्म उरुचक्षा उदेतीति तिसृभिर्भ्राजवतीभिस्तिस्रः समिध आदध्याद्यदि यजमानस्य किंचि-

---

१ क्रामेदु० the Mss.

२ स्वं रूपं AB.

३ Thus HB; ०वर्त्मने the other Mss.

४ Corrupt in all the Mss., emended by me.

न्वध्येदग्ने ऽभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सह रय्येत्यभ्यावर्तिनीभिस्तसृभिरुपतिष्ठते । विन्दत्येवेति विज्ञायते । ॥ १० ॥

यद्युख्ये म्रियमाणे दीक्षितप्रयोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते संसृजति व्रते संबध्नन्ति व्रतदुहयोर्वत्सावादधात्यन्यच्च यदाधेयं[1] भवति नीडे गार्हपत्यं प्रउग आहवनीयमुदु त्वा विश्वे देवा इत्युख्यमुद्यच्छते । सीद त्वं मातुरस्या उपस्थ इति चतसृभिः सहंसाभिः । प्रउग उख्यमासादयत्युखासन्दीं बध्नात्यपि वारण्योरग्नीन्समारोपयति । भद्रादभि श्रेयः प्रेहि प्रेदग्ने ज्योतिष्मान्याहीति द्वाभ्यां प्रयाति । यद्यन उत्सर्जत्यक्रन्ददित्यन्वाह । समिधाग्निं दुवस्यतेति घृतानुषिक्तामवसिते समिधमादधाति । गायत्र्या ब्राह्मणस्येत्युक्तं[2] । प्रप्रायमग्निरिति त्रिष्टुभा राजन्यस्येन्धनव्रतनाध्यवसानसंनिपाते घृतानुषिक्तां पूर्वमादधात्युख्यायां भस्म यद्यतिवर्धते यत्रापस्तद्यन्ति । संदंशेनाग्निमादाय सते निधायायोदव्यापो देवीः प्रतिगृह्णीत भस्मैतदप्स्वग्ने सधिष्टव गर्भो अस्योषधीनामिति तिसृभिरप्सु भस्म प्रवेशयति । किंचित्प्रविष्टभस्मादाय प्रपीड्य प्रसद्य भस्मना योनिं पुनरासद्य सदनमिति द्वाभ्यां ज्योतिष्मतीभ्यामुखायां प्रत्यवदधाति । पुनरूर्जा सह रय्येति पुनरुदैति । पुनस्त्वादित्या रुद्रा वसवः समिन्धतामिति पुनरुख्यमुपसमिन्द्धे । बोधा स बोधीति बोधद्वतीभ्यां[3] यजमानः स्वायतने तिष्ठन्नुपतिष्ठते[4] ।

१ Thus V; to this reading point AHB; यथाधेय MLT.

२ See TS. V. 2. 2. 4.

३ बोधद्वतीभ्यां AHTV; बोधन्वतीभ्यां M; बोधस्वतो० L, बोधयद्वतित्यां B.

४ ? यजमानत्वायतनस्थमुपति० MLT; यजमानः स्वायतने तिष्ठते HAB; यजमानस्त्वायतनस्थमुपति० V.

यावत्कालो भस्मातिवर्धत एवमेवैतत्सर्वं करोति कृतास्विष्टकासु । पुरीषे पशुकामः कुर्वीताप्सु यायावरः प्रवपेद्दी । क्षितस्येष्टकाः करोति मासप्रभृतिषु दीक्षाकल्पेष्वदीक्षितस्य पूर्वेषूपरिष्टात्प्राजापत्यान्मृन्मयीरिष्टकाः पादमात्र्यो ऽरत्निमात्र्य ऊर्वस्थिमात्र्यो ऽणूकमात्र्यश्चतुरश्रा अप्यृजुलेखा[1] दक्षिणावृतः सव्यावृतस्त्र्यालिखिताश्च । निर्मन्थ्येनेष्टका लोहिनीः पचन्त्यखण्डा अकृष्णा अलक्ष्मणा । अथामृन्मय्यः । पुष्करपर्णं रुक्मं पुरुषो हिरण्मयः स्रुचौ सप्त स्वयमातृण्णास्त्रयोदश हिरण्येष्टका पञ्च घृतेष्टका दूर्वास्तम्बः कूर्म उलूखलमुसले पशुशिरांसि सर्पशिरश्च यावदाम्नाता मन्त्रा यथार्थं लोकंपृणा । जानुदघ्नं साहस्रं[2] चिनुते ॥ ११ ॥

प्रथमं चिन्वानो । नाभिदघ्नं द्विषाहस्रं द्वितीयमास्यदघ्नं त्रिषाहस्रं तृतीयं । महान्तं बृहन्तमपरिमितं स्वर्गकामश्चिन्वीतेति । नित्यकामश्चतुर्थप्रभृतिष्वाहारेषु नित्यमिष्टकापरिमाणमुत्तरान्ज्यायसश्चिन्वीतापवृत्ते दीक्षापरिमाणे प्रथमायामुपसदि महारात्रे बद्ध्वा देवस्य त्वेत्युपस्थाय पुरोदये[3] वाचंयम उदिते वाचं विसृज्य विष्णुक्रमवात्सप्रोपस्थाने कृत्वा सोमं परिविवेष्टि । गार्हपत्यचितेरायतनं व्यायाममात्रं परिमण्डलं वोद्धृत्य हरिण्या पलाशशाखया शमीशाखया वा संमृज्यापेतेत्यध्यवसाय व्युदस्य शाखां शं नो देवीरित्यवोक्ष्याग्नेर्भस्मासीति

१ अप्यृजुलेखा MLTAV; अपिवा मण्डलेषस्रा H; अपिणा ऋजुलेखा R; B useless.

२ सहस्रं the Mss.

३ Thus the Mss.; पुरोदये B only.

सिकता न्युप्य संज्ञानमसीत्यूषान्सं या वः प्रिया इति संमृज्यैकविंशत्या शर्कराभिर्गार्हपत्यचितेरायतनं परिवपति चितः स्थ परिचित इति तिस्रस्तिस्रः पुरस्तादारभ्य प्रदक्षिणमोत्तरतो[1]। व्रजं कृणुध्वꣳ स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि। पुरः कृणुध्वमायसीरधृष्टा[2] मा वः सुस्रोच्चमसो दृꣳहता तमिति पर्युप्ताः शर्करा अभिमन्त्रयते। ऽयꣳ सो अग्निरिति चतस्रः प्राचीरिष्टका उपदधाति। गार्हपत्यचिताविडामग्ने ऽयं ते योनिरिति द्वे पुरस्तात्समीची उपदधाति[3] चिदसीति द्वे पश्चात्[4] समीची। त्रयोदश लोकंपृणा उपदधाति। लोकं पृण छिद्रं पृण ता अस्य सूददोहस इति द्वाभ्यां द्वाभ्यामेकैकां लोकंपृणामुपदधाति। सर्वत्रेष्टकासु तयादेवतमन्ततो दधाति। कृष्णमश्वमभिमृश्य पृष्टो दिवीति वैश्वानर्यर्चा तनुपुरीषमुपदधाति। तयादेवतं करोति। पञ्चचितीकं चिन्वीत प्रथमं चिन्वानस्त्रिचितीकं द्वितीयमेकचितीकं तृतीयमेकचितीकानेवात ऊर्ध्वं। यदि चितवत्यादित्यो[5] ऽभ्युदियाद्वाचंयमो ऽध्वर्युं यजमानो ऽन्वारभत। उख्यमेवाध्वर्युरादत्ते प्रतिसमेधनीयं प्रतिप्रस्थाताजीजनन्नमृतमिति गार्हपत्यचितिमभिमृश्य तौ प्रत्यञ्चौ समितमिति चतसृभिः संनिवपतः। साकꣳ हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि। ॥ १२ ॥

---

१ ०क्षिणमौत्तरतो MLAB; ०क्षिणतोत्तरतः TV.

२ Thus, or अस्पृष्टा, the Mss.

३ ? समीचीन दधाति or ०चीनञ्च दधाति the Mss.

४ Thus B; पुरस्तात् the other Mss.

५ चितवत्या० MT; चिति० LAV; चितवति loc. sing. from participle चितवान्० cp. Baudh. X. 21: 19. 17.

विद्वाꣳ अस्य व्रता ध्रुवा वया इवानुरोहस[1] इति न्युप्तावभिमन्त्र्य मातेव पुत्रमिति शिक्यादुखां निरूहति । न रिक्तामवेक्षते । तस्यामन्यत्रेक्षमाणो द्विषन्तं शुचि[2] । निदधामीति दधिद्रप्सं प्रास्यति । सिकताभिः पूरयित्वा दध्नोपरिष्टात्संप्रच्छाद्य प्रज्ञातं निदधात्येवं द्वितीयां पूरयत्येवं तृतीयां । ता आ कालात्परिशेरते । यदस्य पारे रजस इति वैश्वानर्यर्चा शिक्यमादत्ते । नैर्ऋतीरिष्टकाः कृष्णास्तिस्रस्तुषपक्वा आसन्दीं रुक्मसूत्रमुदपात्रमित्यादाय दक्षिणापरमवान्तरदेशं हृत्वा स्वकृत इरिणे प्रदरे वा पराचीनपाशं[3] शिक्यं न्यस्यति नमः सु ते निर्ऋते विश्वरूप इति पराचीर्नैर्ऋतीरसंसृष्टा[4] दक्षिणापवर्गा उपदधाति । ॥ १३ ॥

यत्ते देवी निर्ऋतिराबबन्धेति द्वितीयां यस्यास्ते अस्याः क्रूर इति तृतीयां । शिक्यजालेनैनाः प्रच्छाद्य रुक्मसूत्रमासन्दीं च परस्तान्निधायापास्मदेतु निर्ऋतिर्नेहास्या अपि किंचन । अगोतां नाश्नां पाप्मानꣳ सर्वं तदपहन्महे ॥ अपास्मन्नैर्ऋतान्पाशान्मृत्यूनेकशतं नये । अपास्य ये[5] सिनाः[5] पाशान्मृत्यूनेकशतꣳ[6] सुवे ॥ ये ते पाशा एकशतं मृत्यो मर्त्याय हन्तवे । तान्यज्ञस्य मायया सर्वानवयजामहे ॥ देवीमहं निर्ऋतिं

१ Thus the Mss.

२ Before द्विष० A ins. सु, which perhaps points to ऽसुं; cp. Baudh. X. 12 : 20. 4.—शुचि A only, शुचि ML; शुचं TV; शुभ B.

३ परिचीन० AB; प्रतीचीन० MLTV.

४ ०सृष्टा all the Mss.

५ Thus TV; येसिनां AB; एसिनाः ML.

६ मृत्यू एक० the Mss.

बाधमानः पितेव पुत्रं दसये वचोभिः । विश्वस्य या जायमानस्य वेद शिरः शिरः प्रति सूरी विचष्ट इत्येताभिस्तदृग्भिरुपहिता अभिमन्त्र्य यदस्य पारे रजस इति वैश्वानर्यर्चा परिषिच्य भूत्यै नम इत्युपस्थाय पराश्य पात्रमप्रतीक्षमायन्ति । शं नो देवीरभिष्टय इति मार्जयित्वोर्जं बिभ्रद्वसुवनिः सुमेधा गृहानैमि मनसा मोदमानः सुवर्चाः[1] । अघोरेण चक्षुषाहꣳ शिवेन गृहाणां पश्यन् वय उत्तिराणि[2] ॥ गृहाणामायुः प्र वयं तिरामो गृहा अस्माकं प्रतिरन्त्वायुः । गृहानहꣳ सुमनसः प्रपद्ये ऽवीरघ्नो वीरवतः सुवीरानिति गृहानभ्येति[3] । निवेशनः संगमनो वसूनामिति शालामुखीयं गार्हपत्यमुपतिष्ठते[4] । राज्ञो निवपनादिकर्म प्रतिपद्यते । प्रायणीयेन चरित्वा वेदिं विमिमीते ऽथ पदेन चरति । राजानं क्रीत्वोह्यातिथ्येन चरित्वा प्रवर्ग्योपसद्भ्यां प्रचर्याग्निकं स्थण्डिलमुत्तरवेदिस्थाने विमिमीते । समूलं हरितं दर्भस्तम्बमाहृत्य मध्ये ऽद्भिरुदकमासिच्य वाक् त्वा समुद्र उपदधात्विति[5] तस्मिन्दर्भस्तम्बं निखाय[6] जुह्वां पञ्चगृहीतं गृहीत्वा सजूरब्दो ऽयावभिर्घृतेन स्वाहेति पञ्चभिः समुद्गृह्णन्दर्भस्तम्बे पञ्चाहुतीर्जुहोति । सजूरुषा अरुणीभिर्घृतेन स्वाहेति द्वितीयेत्येवं[7] पञ्च ।

---

१ ARHB read this passage as follows: ऊर्जं बिभ्रद्वसुवनिरित्यृचमनुद्रुत्याघोरेण etc.

२ उत्तराणि the Mss.

३ Thus MLT; ARHB; गृहानह सुमनस प्रपद्य इति च प्रतीक्षा (or ०क्षे or क्षो) यथेतं गृहानभ्येति

४ ०तिष्ठते all exc. A which has the plural.

५ Cp. Baudh. X. 24 : 23. 9.

६ निखाय ML; निधाय TV; निखनोपधाय AH; निखननोपधाय B.

७ Thus TV; द्वितीय इत्येवं ML; द्वितीयादित्येवं AB; द्वितीयादित्येभिर् H.

यावान्पुरुष ऊर्ध्वबाहुस्तावता वेणुना पुरुषमात्रेणाग्निं विमिमीते प्राचस्त्रीन्पुरुषांश्चतुर उदीचः पुरुषमात्राणि पक्षपुच्छान्यात्मा चतुःपुरुषो ऽरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्धयत्येवमुत्तरत उत्तरं पक्षं प्रादेशेन वितस्त्या वा पश्चात्पुच्छं प्रवर्धयति । सप्तविध एव प्रथमो ऽग्निस्तस्मात्सप्तविधमेवाग्निं चिन्वत[१] । ऊर्ध्वमेकशतविधादेकोत्तरान् चिन्वीत । स्योना पृथिवि बडित्था पर्वतानामिति द्वाभ्यां विमितमग्निमाक्रमते । कार्ष्णाजिनीरुपानह उपमुञ्चन्ते चिते स्थेत्यध्वर्युराचिते स्थेति प्रतिप्रस्थाता मनश्चिते स्थेति ब्रह्मा तपश्चिते स्थेति यजमानश्चिते स्थेति वा सर्वे तूष्णीं वा । मयि गृह्णामि यो नो अग्निरिति द्वाभ्यामात्मन्यग्निं गृह्णीत अध्वर्युयजमानौ[२] । यास्ते अग्ने समिधो यानि धामेति स्वयंचितिं जपतो ऽश्वावभितस्तिष्ठेतां कृष्ण उत्तरतः श्वेतो दक्षिणतस्तावालभ्येष्टका उपदध्यादित्युक्तं[३] । प्रजापतिस्त्वा सादयतु तया देवतयेत्यन्तःशर्करमिमामुपदधात्यन्तरेण यूपाहवनीयं तिष्ठन्ननुरधिज्यं कलायत्यान्तःशर्करमिषुं निहन्तीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः । यो नः पुरस्तादित्यावृह्याश्मानमुपदधाति । दक्षिणे पक्षान्ते ऽन्तःशर्करमिषुं निहत्यावृह्य तथेन्द्रस्य वज्रो ऽसीत्याश्मानमुपदधाति यो नो दक्षिणतो ऽघायुरिति मन्त्रं संनमय्यापरस्मिन्पुच्छान्त इषुं निहत्यावृह्य तथाश्मानमुपदधाति यो नः पश्चादघायुरिति मन्त्रं संनमति । ॥ १४ ॥

१ चिन्वत ऊ० MTV; चिन्वेत ऊ० L; चिन्वीत ऊ० H.

२ गृह्णीत अध्व० ML; गृह्णीताध्व० TV; गृह्णातेध्व० HB; गृह्णातिवे अध्व० A.

३ See TS. V. 7. 1. 2.

एवमुत्तरस्मिन्यवान्ते यो न उत्तरतो ऽघायुरिति मन्त्रं संनम्य तया देवतया ता अस्य सूददोहस इति च करोति' स ईं पाहीन्द्रं विश्वा अवीवृधन्नित्यन्यतरयैन्द्रियर्चाक्रमणं प्रतीष्टकामुपदध्याद्‌च वा दर्भस्तम्बं निखनति पुरस्तात्पश्चाद्धूतीश्चायने ते परायणे दूर्वा रोहन्तु पुष्पिणीः । उत्सो वा तत्र जायतै[1] ह्रदो वा पुण्डरीकवानिति दूर्वेष्टकामुपदधत्यग्न आयाहि वीतय इति दक्षिणे ऽंसे विभक्तिमुपदधाति' षड्गवं द्वादशगवं वोदुम्बरयुगलाङ्गलं पुरस्तात्कारितं सं वरत्रा दधातनेति संप्रेष्यति' निष्कृताहावमवटमित्यध्वर्यवो ऽवटाद्वरत्रैरुदकमुत्तर्याहावेष्वनुसंभरति[2]' खनत्याहावानित्येके' तत्रोद्रिणꣳ सिञ्चे अक्षितमिति तेषूदकमुत्सिञ्चति' तेषु बलीवर्दान्याययत्युद्योजनमन्त्यामिमीषां खगल्यं शफम् । अह्नां तालं प्रतिनाहमुभौ मण्डूक्यौ युजाविति युगलाङ्गलं संप्रसारयति' सीरा युञ्जन्ति कवयो युनक्त[3] सीरा वि युगेति द्वे पूषा युनक्तु सविता युनक्तु बृहस्पतिस्त्वा युनक्त्वग्निस्तेजसा सूर्यस्य वर्चसेति तिसृभिरुद्योजनादिभिस्त्रियुगादिकं सीरं युनक्त्युष्टारयोः पिल्वयोरथो आबन्धनीययोः । सर्वेषां विद्म वो नाम वाहाः कीलालपेशस इति युक्तानभिमन्त्रयत' उदस्याद्गोजिद्धनजिदश्वजिद्धिरण्यजित्सूनृतया[4] परिवृतः । एक-

---

१ जायतै MLTV; जायत A; जायते B, the Ath Saṃh. VI. 106. 1 has जायतां, Baudh. X. 14: जायातै.

२ ? ०संभरति M; ०संचरति L; ०न सचति TV: A, partly indistinct, reads at the end सिचति; B incomplete. After अध्वर्यवः we expect a plural.

३ युनक्त the Mss. only B युनक्त.

४ उपस्याद् instead of उदस्याद् the Mss.

चक्रेण सविता रथेनोर्जो भागं पृथिवीमेत्वापृणन्निति लाङ्गलमुच्छ्रयति। ब्रह्म जज्ञानमित्येषानाष्टा या वः प्रथमा यस्यां कर्माणि कृण्वते। ॥ १५ ॥

वीराणो अत्र मा दभंस्तद्व एतत्पुरोदधे ॥ पर्यू षु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः। द्विषस्तरध्या ऋणया न इयते[1] ॥ सहस्रधारे ऽवते समस्वरन्दिवो नाके मधुजिह्वा असश्चतः। अस्य स्पशो[2] न निमिषन्ति भूर्णयः[3] पदे पदे पाशिनः सन्ति सेतव इति ब्रह्मवर्माणि जुहोति। मलिम्लुचो नामासि त्रयोदशो मास इन्द्रस्य वर्मासीन्द्रस्य शर्मासीन्द्रस्य वरूथमसि तं त्वा प्रपद्ये ॥ गायत्रीं लोमभिः प्रविशामि त्रिष्टुभं त्वचा प्रविशामि जगतीं मांसेन प्रविशाम्यनुष्टुभमस्थ्ना प्रविशामि पङ्क्तिं मज्ज्ञा प्रविशाम्यैन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति शूराः। तन्नस्त्रायतां तन्नो विश्वतो महदायुष्मन्तो जरामुपगच्छेम देवा इति विमितमग्निमाक्रमन्ते। लाङ्गलं पवीरवमिति द्वाभ्यां कृषति। कीनाशा बलीवर्दानाजन्ति। पुच्छाच्छिरो ऽधि कृषति। कामं कामदुघे धुक्ष्वेति प्रदक्षिणमावर्तयंस्तिस्रस्तिस्रः संहिताः सीताः कृषति। मध्ये संभिन्ना[4] भवन्ति। दक्षिणात्पश्चादुत्तरमुत्तरस्माद्दक्षिणं दक्षिणायै श्रोणेरुत्तरमंसमुत्तरायै दक्षिणं। विमुच्यध्वमघ्निया देवयाना अतारिष्म तमसः पारे[5] अस्य ज्योतिरापाम सुवरगन्मेति दक्षिणे ऽंस उत्तरे

---

१ इयते TLV; इरते M; ईय० B.
२ स्वशो LTAV; स्वश्वो M.
३ Thus (with न) the Mss.
४ Thus V; संछिन्ना the other Mss.
५ पारे LTMV.

वा बलीवर्दान्विमुच्याध्वर्यवे ददाति । पञ्चदशोदपात्रान्निनयति द्वादश कृष्टे । या जाता ओषधय इति चतुर्दशभिरोषधीर्वपत्यनुसीतमित्युक्तं[1] । सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे । मा नो हिंसीज्जनिता यः पृथिव्या इति चतसृभिर्दिग्भ्यो लोष्टान्समस्यति बहिर्विधमापन्नान् । घृतेन सीतेत्युत्तरवेदिमभिमृश्योत्तरवेदिमुपवपति यावानग्निर्व्याघारनान्तं कृत्वाग्ने तव श्रव इति षड्भिः सिकता न्युप्य चितः स्थ परिचित इत्यपरिमितशर्कराभिश्चितं परिश्रयति यथा गार्हपत्यमाप्यायस्व समेतु त इति सिकता व्यूहत्युत्तरया त्रिष्टुभा राजन्यस्य जगत्या वैश्यस्याग्रेण प्राग्वंशं चर्मणि तिस्रः स्वयमातृण्णास्तिस्रश्च विश्वज्योतिषस्ता । दर्भाग्रमुष्टिनाज्येनावोक्ष्य चित्यग्निभ्यः प्रणीयमानेभ्यो ऽनुब्रूहीति संप्रेष्यति । यदि होता नानुब्रूयाद्यजमान एव पुरीष्यसो अग्नय इत्येतां त्रिरन्वाह । त्रिरनूक्तायामभ्यस्थाद्विश्वाः पृतना इति हिरण्यगर्भः समवर्तताग्र इत्यन्यतरेणास्य प्रथमा ब्रह्मा यजमानो ऽध्वर्युश्च प्राञ्चो गच्छन्ति । यदक्रन्दः प्रथमं जायमान इति दक्षिणमंसमभ्यवक्रामन्तमभिमन्त्रयत[2] । उत्तरवेदिं प्राप्य प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद्ध्रुवा सीदेत्यन्तर्विधमभिमृशति । मयि गृह्णामि यो नो अग्निरिति द्वाभ्यां हृदयस्थमग्निं स्वात्मनि गृह्णीते । यास्ते अग्न इति स्वयंचितिं जपत्यभिमृशति[3] वेष्टकाभिश्चतुरस्राभिरग्निं चिनुत इति

---

१ See TS. V. 2. 5. 5.

२ ०ज्योतिःसार्यं MLTV (AHB are missing); cp. Āp. XVI. 21.

2, 3. Perhaps some words here are missing.

३ ०क्रमन्तमभि० H; ०क्रमन्नभि० MLTV; cp. Baudh. X. 28

विज्ञायते ऽध्वर्युर्यजमानो ब्रह्मा वा । यदि यजमानः स्वयं चिनोति नात्मन्यग्निं गृह्णाति न स्वयंचितिं जपत्यभिमृशति[1] वा । दक्षिणावृतो दक्षिणत उपदधात्युत्तरतः सव्यावृत ऋजुलेखा पश्चात्पुरस्ताच्च भवति । व्यालिखिता मध्ये प्राचीरुपदधाति । प्रतीचीरुपदधातीति गणेषु रीतिवादः । प्राचीमुपदधाति प्रतीचीमुपदधातीति कर्तृमुखवादः । पुरस्तादन्याः प्रतीचीरुपदधाति पश्चादन्याः प्राचीरित्यपवर्गवादः । सर्वान्वर्णानिष्टकानां कुर्यादिति लेखाधिकार उक्तो । वचनात्पक्षपुच्छेषु श्रोण्योरंसयोरित्युपदधात्यर्येत स्थाध्वगतो ऽग्नेर्वस्तेजिष्ठेन तेजसा देवताभिर्गृह्णामीति कुम्भं कुम्भीं चाद्भिः पूरयित्वा शर्म च स्थ वर्म च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामीति पुरस्तादनुसीतमुपधाय ज्योतिषे वामिति हिरण्यशल्कौ प्रत्यस्यति । शुक्रा स्थ वीर्यवतीरिन्द्रस्य व इन्द्रियावतो देवताभिर्गृह्णामीति पुनः कुम्भं कुम्भीं चाद्भिः पूरयित्वा ऋतं च स्थ सत्यं च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामीति दक्षिणतो ऽनुसीतमुपधाय चक्षुषे वामिति हिरण्यशल्कौ प्रत्यस्यति मन्द्रा स्थाभिभुवो विश्वेषां वो देवानां देवताभिर्गृह्णामीति कुम्भं कुम्भीं चाद्भिः पूरयित्वा सपत्नघ्नीश्च स्थाभिमातिघ्नीश्च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामीति पश्चादनुसीतमुपधाय रेतसे वामिति हिरण्यशल्कौ प्रत्यस्यत्यधिपत्नी स्थौजस्विनीरादि-

1 The passage beginning वेष्टकाभि० and ending: ०भिमृशति is found only in M and AB. It must belong to the text, cp. Āp. XVI. 21. 7, 8. The omission obviously is due to the fact that two sentences end: ०मृशति वा, of which the first could easily be overlooked.

त्यानां वो देवताभिर्गृह्णामीति कुम्भं कुम्भीं चाद्भिः पूरयित्वा रक्षोघ्नीश्च स्थारातिघ्नीश्च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामीत्युत्तरतोऽनुसीतमुपदधाति प्रजाभ्यो वामिति हिरण्यशल्कौ प्रत्यस्यति । क्षत्रभृत स्थौजस्विनीर्मित्रावरुणयोर्वो ब्रह्मणा देवताभिर्गृह्णामीति कुम्भं कुम्भीं चाद्भिः पूरयित्वा वसु च स्थ वामं च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामीति मध्ये तेजसे वामिति हिरण्यशल्कौ प्रत्यस्यति । व्रजक्षित स्थोर्ध्वश्रितो बृहस्पतेर्वो ब्रह्मणा देवताभिर्गृह्णामीति कुम्भं कुम्भीं चाद्भिः पूरयित्वा भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवे मधुमतीः सादयामीति च मध्येऽनुसीतमुपधाय[1] वर्चसे वामिति हिरण्यशल्कौ प्रत्यस्यति । तूष्णीं ग्रहणसादनप्रत्यसना इत्येके । हिरण्यवर्णाः शुचयः पावका इति प्रतिमन्त्रं कुम्भं कुम्भीं चाभिमन्त्रयत । एतैर्वा प्रतिमन्त्रं दिक्ष्वनुसीतमुपदधाति चतस्रो मध्ये । दिवि श्रयस्वान्तरिक्षे यतस्वेति बार्हस्पत्यं नैवारं चरुं पयसि शृतं मध्ये । [2]करणानीष्टकानां पुरुषस्य पञ्चमेन कारयेत्सर्वतः प्रादेशस्तद्द्वितीयं । पञ्चदशभागीयस्तृतीयमूर्ध्वप्रमाणं जनोः पञ्चमेन कारयेदर्धेन नाकसदां पञ्चचोडानां च । यत्पच्यमानानां प्रतिह्रसेत पुरीषेण तत्संपूरयेदनियतपरिमाणत्वात्पुरीषस्य[2] । चतुरश्राभिरग्निं चिनुत इति नित्यः कल्प इष्टका उपधास्यंश्छ्वेतमश्वमभिमृशेदित्युक्तमष्टावष्टौ[3] पादेष्टका-

---

१ ऽनुसीतमुपधाय om. AHB.

२ For this passage cp. Āp. Śulbasūtra IX. 6–8, in Journ. of the German Or. Soc., Vol. LV, page 584.

३ इत्युक्तम्, see TS. V. 7. 1. 3.

श्चतुर्भागीयानां पक्षाग्रयोर्निदध्यात्तथात्मसन्धौ दक्षिणत उत्तरतश्चात्मानं षडङ्गुलावेतौ श्रोण्यंसेषु चाष्टौ प्राचीः प्रतीचीश्च सन्ध्यन्तराले पञ्चमभागीयाः सपादाः । पुच्छे प्रादेशमुपधाय सर्वमग्निं चतुर्भागीयाभिः प्रच्छादयेत् । पादेष्टकाभिः संख्यां पूरयेदपरस्मिन्प्रस्तारे पुच्छाप्यये पञ्चमभागीयास्ता आत्मनि चतुर्दशभिः पादैर्यथायोगमुपदध्यात्[1] । सर्वमग्निं पञ्चमभागीयाभिः प्रच्छादयेत्पादेष्टकाभिः संख्यां पूरयेद्व्यत्यासं चिनुयाद्यावतः प्रस्तारांश्चिकीर्षेत् । तिष्ठन्तं दक्षिणतः श्वेतमश्वमालभ्यैन्द्रं विश्वा अवीवृधन्नित्यैन्द्रियर्चाक्रमणं प्रतीष्टकामुपदध्यात् । ॥ १६ ॥

उत्तरवेदेराहृतोत्तरवेदिमलंकृत्य तस्यामपां पृष्ठमसीति पुष्करपर्णमधस्ताद्दण्डमुत्तानमुपदधाति । सर्वत्रोपधाने तयादेवतं कृत्वा सूददोहसेनभिमृशतीत्युत्तरतः पश्चाद्वोपचारो[2] ऽग्निर्वाङ्म[2] आसन्नसोः प्राण इति निर्गमनमभिक्रम्य[3] सर्वत्र प्राणायतनानि संमृशति । तत्त्वा यामि ब्रह्मणा वन्दमान इति वारुण्यर्चा शालामुखीये जुहोति । तस्मिन्पुष्करपर्णे ऽधस्तान्निर्बाधमुत्तरनिर्बाधं वा ब्रह्म जज्ञानमिति रुक्ममुपदधाति । रुक्मस्य दक्षिणतः प्राञ्चं हिरण्मयं पुरुषं हिरण्यगर्भः समवर्ततताग्र इत्युत्तानमादधाति । द्रप्सश्चस्कन्देत्यभिमृशति । पुरुषसाम गायेति सं-

---

१ पादैर्, given by LAHB, is omitted by M (TV are incomplete here).

२ उत्तरतः पश्चादुपचारो वाग्नि॰ (as Hir.) AHB; उत्तरतः पश्चाद्वोपचारो ग्नि॰ MLTV (as Āp. XVI. 21. 13).

३ ? ॰नसोरितिप्राणनिर्गमनमभिक्रम्य MLTV (the end अभिज्ञाय at the end); ॰नसोः प्राणनिर्गममभि॰ A; ॰प्राणानिर्गमभि॰ H; ॰नसोः प्राणाग्निक्रमभि॰ B.

प्रेष्यति । तूष्णीं स्रुचावुपदधाती यमसीति कार्ष्मर्यमयीमसारसीत्यौदुम्बरीमित्येके । मनसा तयादेवतमाज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरमित्युक्तं[1] । कृणुष्व पाज इति पञ्चभिः पञ्चगृहीतेनाज्येन पुरुषमुत्तरवेदिवद्व्याघारयति । मूर्धन्वतीभ्यामुपतिष्ठते । नमो अस्तु सर्पेभ्य इति तिसृभिरनुच्छन्दसमभिमन्त्र्य दक्षिणे प्रललाटे सर्पशिर उपदधात्यपि वा यतउच्चारं जनपदस्य जन्यं भयं मन्यते । तयादेवतं कृत्वा सूददोहसेनाभिमृशति । ध्रुवासीति स्वयमातृण्णामभिमृश्य तूष्णीमश्वेनावघ्राप्याविदुषा ब्रह्मणा सह प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठ इति मध्ये ऽग्नेरुपदधाति भूरिति चैतया व्याहृत्या यथैतस्य पुरुषस्य प्राणैः प्राणाः संनिधीयेरन्नापिधीयेरन् । चित्तिं जुहोमीति स्वयमातृण्णामभिजुहोत्यनुप्राणित्यविद्वान्ब्राह्मणो वरं ददात्येकं द्वौ त्रीन्वासीनः प्रथमां स्वयमातृण्णामुपदधात्यूर्ध्वज्ञुर्द्वितीयां तिष्ठंस्तृतीयामुपधायोपधाय साम गायेति संप्रेष्यति । यदि पूर्वो भ्रातृव्यो मातिक्रान्त इति मन्येत प्रथो ऽसीत्युपहितां प्राचीमुदूहेद्यदि वापरः पृथिव्यसीति प्रतीचीं यदि सदृङ् भूरसि भुवनमसीति विचालयेत्तेजो ऽसि तेजो मे यच्छेत्यपरे बिले हिरण्येष्टकामुपदधाति । पृथिव्युदपुरमन्नेनेति तज्जघनेन मण्डलेष्टकां । भूरसि भुवनस्य रेत इष्टका स्वर्गो लोका वाचा त्वान्वारोहाम्यग्निर्ज्योतिर्ज्योतिरग्निस्तयेत्येकामन्वारोहां सूरसि सुवनस्य रेत इष्टका स्वर्गो लोको मनसा त्वान्वारोहामि सूर्यो ज्योतिर्ज्योतिः सूर्यस्तयेति द्वितीयां । काण्डात्काण्डात्प्ररोहन्ति

[1] See TS. V. 2. 7. 3.

या प्रतेन प्रतनोषीति द्वाभ्यां सलोष्टं हरितं दूर्वास्तम्बमप्रच्छिन्नाग्रं यथास्योपहितस्य स्वयमातृण्णामग्रं प्राप्नुयात्तथा निमिते[1] तस्मिन्प्रवाङ्ग्घिरण्यशकलावध्यूह्य यास्ते अग्ने या वो देवा इति द्वाभ्यां वामभृतं हिरण्यमूर्ध्नौ। विराड् ज्योतिरधारयदिति तिस्रो रेतः सिचस्तासां द्वे यूनः प्रथमचितौ विवयसः सर्वा मध्यमायामेकां प्रथमायामेकामुत्तमायां स्थविरस्य। द्वयस्यान्यतरां। यजुषेमां चामूं चोपदधाति मनसा मध्यमां। बृहस्पतिस्त्वा सादयत्विति विश्वज्योतिषमिन्द्राग्निभ्यां त्वेति सयुजमथ मण्डलेष्टकामथ विश्वज्योतिषमित्येकेषामषाढासि सहमानेत्यषाढामुत्तरलक्ष्माणं त्र्यालिखितामग्नेर्योन्यसीति द्वे संयान्यौ। मधुश्च माधवश्चेति द्वे ऋतव्ये अग्नेरन्तःश्लेषो ऽसीत्यनुद्रुत्य वासन्तिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतमिति समानतयादेवते युगपदुपदधाति। सर्वास्वृतव्यास्ववकामनूपदधात्यवकासु वा सादयत्युदस्य शुष्माद्भानुरिति घर्मेष्टकां। यास्ते अग्न आर्द्रा योनयो याः कुलायिनीरिति कुलायिनीं। मधु वाता ऋतायत इति तिसृभिरनुच्छन्दसं कूर्मं दध्ना मधुमिश्रेणाभ्यनक्ति। तमवकाभारेण परिवेष्ट्य पुरस्तात्स्वयमातृण्णायाः प्रत्यञ्चं प्राङ्मुखो मही द्यौः पृथिवी च न इति जीवन्तं कूर्ममुपदधाति चतस्र आशाः प्रचरन्त्वग्नय इति वा। द्वाभ्यामित्येके। तं जालेन परिवेष्ट्य शङ्कुभिः परिनिहन्ति। यदि तं न विन्देयुर्मण्डूकं

१ ? निम्मित्ते MLT; निर्मीते AH; निर्मीवे B.

तथोपदध्यादपां गम्भीरं गच्छ मा त्वा सूर्यः परिताप्सीन्मो अग्निर्वैश्वानरः । ॥ १७ ॥

अघोर[1] प्रजा अभिविपश्यानु त्वा दिव्या वृष्टिः सचताम् ॥ सꣳसर्प त्रीन्समुद्रान्स्वर्गांल्लोकानपां पतिर्वृषभ इष्टकानाम् । तत्र गच्छ यत्र पूर्वे परेताः पुरीषं वसानः स्वां योनिं यथायथमित्युपहितमभिमन्त्रयते । प्रादेशमौदुम्बरमुलूखलं[2] यच्चिद्धि त्वा गृहे गृहे उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिरिति चतुःस्रक्त्युत्तरे ऽꣳसे प्रयुनक्त्यरत्निमात्रं मुसलं । तस्मिन्सर्वौषधस्य पूरयित्वोर्जो भागो ऽस्यूर्जः पवित्रमूर्गन्नमन्नाद्यायेत्यवहन्त्युत[3] ते वनस्पते वातो विवात्यग्रमिदथो इन्द्राय पातवे सुनु सोममुलूखलेति वा । तद्विष्णोः परमं पदमिति मध्ये ऽग्नेरुपदधात्युत्तरतो वा । लोकंपृणामुत्तरतो मुसलं । दिवो वा विष्ण उत वा पृथिव्या इति शूर्पमुखायां मुख्यायामग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमानिति द्वे स्रुवाहुती बिलयोर्जुहोति । ध्रुवासि पृथिवीति घृतेन मधुना वा सिकताभिर्वा सर्वैर्वा संसृज्योखां पूरयति । न रिक्तामवेक्षेत । शुग्विद्धा भवति । तस्यां पय आनयति । यं कामयेत क्षोधुकः स्यादित्यूनां तस्योपदध्यादित्युक्तं[4] । पृथिवि पृथिव्याꣳ सीद माता मातरि स्योना स्योनायाम् ॥ १८ ॥

---

१ अघोर (not ०रः) all the Mss.

२ प्रादेश is a curious abbreviation for प्रादेशमात्र.

३ स्म is not given by the Mss. (cp. Āp. XVI. 26. 3).

४ See TS. V. 2. 9. 1.

उखां स्वसारमधि वेदिमस्थात्। सत्यं पूर्वैर्ऋषिभिश्चाकुपानो[1] ऽग्निः प्रविद्वानिह तद्दधात्विति प्रक्रम उत्तरत उपदधाति लोकंपृणामुत्तरतो। ऽत्र स्रुवाकृती इत्येके। लोकंपृणामुत्तरतः पुरुषशिरःप्राणेषु हिरण्यशल्कान्प्रत्यस्यति द्रप्सश्चस्कन्देत्यास्ये ऽभूदिदमिति दक्षिणस्यां नासिकायामग्नेर्वैश्वानरस्य चेत्युत्तरस्यामग्निर्ज्योतिषेति दक्षिणे ऽक्ष्णि रुक्मो वर्चसेत्युत्तरस्मिन्नृचे त्वेति दक्षिणे कर्णे रुचे त्वेत्युत्तरस्मिन्। चित्रं देवानामित्यक्ष्णोश्चतुर्गृहीते जुहोति। समित्स्रवन्तीत्यान्तादनुवाकस्य दध्ना मधुमिश्रेण तत्पूरयत्यादित्यं गर्भं पयसा समङ्ग्धीत्यनुद्रुत्येमं मा हिंसीर्द्विपदमित्युखायां पुरस्ताच्चुबुकमुत्तानं प्राचीनमुखमुपदधाति। विश्वकर्मा दिशां पतिरिति ललाटे हिरण्येष्टकामुपदधाति पश्चात्पुरस्ताद्वातस्य भ्राजिमित्यन्तरात्मनि पुरस्तात्प्रतीचीनमश्वस्य शिर उपदधाति। प्रजापतिर्दिशां पतिरिति ललाटे हिरण्येष्टकामुपदधाति। पश्चात्प्राङ्मुख उपविश्यान्तरात्मनि पश्चात्प्राचीनमृषभस्याजस्रमिन्दुमरुषमित्युपदधाति। तस्य ललाटे रुद्रो दिशां पतिरिति हिरण्येष्टकां। दक्षिणत उदङ्मुख उपविश्यान्तरात्मनि वरूत्रीं त्वष्टुरिति दक्षिणत उदीचीनं वृष्णेस्तस्य शिरसि वरुणो दिशां पतिरिति हिरण्येष्टकामुत्तरतो दक्षिणामुख उपविश्य यो अग्निरग्नेरित्युत्तरतो दक्षिणा बस्तस्याग्निर्दिशां पतिरिति हिरण्येष्टकां। यं कामयेत भूयो ऽस्यान्न

---

1 The original reading of this word must have been चाक्लृपानो.

स्यादित्यन्तेषु तस्य व्युदूह्योपदध्यादित्युक्तं[१] तान्यव्यवायेनेमं[२] मा हिꣳसीर्द्विपदमिमं मा हिꣳसीरेकशफमिमꣳ समुद्रꣳ शतधारमुत्समिमामूर्णायुमजा ह्यग्नेरिति सर्वेषामुत्सर्गैः क्रमेणोपतिष्ठते। यदि वायव्यस्य स्यान्मुख्यस्य स्थाने सर्वेषामुपधानैरुपधाय सर्वेषामुत्सर्गैरुपतिष्ठते। तत्तत्स्थान उपधायोत्सर्गेणोपतिष्ठत इत्येके। ऽत्र सर्पशिरः प्राङ्मुख उपदध्यादित्येके। यजुरेव वदेन्नित्ये वायव्यशिरसा[३] वोपदध्यात्तन्नाशे मृदा हिरण्येन वा कृत्वोपदध्याद्यदि सर्पशिरो न विन्देत्तज्जातीयं स्यात्तदभावे[४] गोधाया। यजुरेव वा वदेत्। ॥ १९ ॥

अपस्या उपदधात्यपां त्वेमन्त्सादयामीति पञ्चभिः पञ्च पुरस्तात्प्रतीचीरुपदधात्यर्णवे सदने सीदेति पञ्चभिर्दक्षिणे पक्षे ऽपां त्वा सदने सादयामीति पञ्चभिः पुच्छे गायत्री छन्द इति पञ्चभिरुत्तरे पक्षे दक्षिणा। ये यज्ञꣳ समगृभ्णन्देवा देवेभ्यस्परि। तान् गायत्री नयतु प्रजानती स्वर्गे लोके अमृतं दुहाना॥ ये ज्योतीꣳषि संदधति स्वरारोहन्तो अमृतस्य लोकं। ते यन्तु प्रजानन्तो यज्ञं विदानाः सुकृतस्य लोके॥ ये पशवो मेध्यासो यज्ञस्य योनिमभि संबभूवुः। तान्ददन्ते कवयो विपश्चितो यज्ञं विदानाः सुकृतस्य लोके॥ यः पन्था विततो

---

१ See TS. V. 7. 10. 3.

२ तन्यव्यपायेने० H; तन्नद्दवाये० A; तन्नद्यावाये० TV; त नद्यावाये० L; तं निद्यावाये० M; cp. Āp. XVI. 27. 13.

३ यजुरेव वदेन्नित्येवायव्यशि० MLVT (the last ०वदेद् नि०); यजुरेवपदेग्नित्येवायव्यशि० H; पिजुरेव A; विजुरेवपदेर्नित्य० B.

४ विन्देतज्जातीयस्यात्तदभावे ML; विंदेत्तज्ञातियस्यत्तद० VT; वंदेत्तज्जातीय स्यात्तदभावे HA; विन्देत्तज्जातीयस्य तदभावे B.

देवयानश्छन्दोभिर्विगृहीत एति । तेनातिष्ठद्दिवमन्तरिक्षं यज्ञं गृहीत्वा सुकृतस्य लोकम् ॥ यो यज्ञः सहस्रधारो द्यावापृथिव्योरधि निर्मितः । तेनैतु यजमानः स्वस्त्या दिवो ऽधि पृष्ठमस्थादिति पञ्च हिरण्येष्टका दिक्ष्वेकैकामेकां मध्ये । मा छन्दस्तत्पृथिव्यग्निर्देवता तेनर्षिणा तेन ब्रह्मणा तया देवतया प्रमा छन्दस्तदन्तरिक्षं वातो देवता प्रतिमा छन्दस्तद्द्यौः सूर्यो देवतास्त्रीविश्छन्दस्तद्दिशः सोमो देवता विराट् छन्दस्तद्वाग्वरुणो देवता गायत्री छन्दस्तदजा बृहस्पतिर्देवता त्रिष्टुप् छन्दस्तद्धिरण्यमिन्द्रो देवता जगती छन्दस्तद्गौः प्रजापतिर्देवतानुष्टुप् छन्दस्तदायुर्मित्रो[1] देवतोष्णिहा छन्दस्तच्चक्षुः पूषा देवता पङ्क्तिश्छन्दस्तत्कृषिः पर्जन्यो देवता बृहती छन्दस्तदश्वः परमेष्ठी देवता तेनर्षिणेत्यनुद्रुत्यैताभिः द्वादशभिस्त्रिरभ्यासं पुरस्तात्प्रतीचीं पुरुषाकृतिं चिनोति । पुरुषशिरो ऽस्याः शिरो भवती।दं वेद पुरुषस्य ब्रह्मणो नारायणाख्यस्य रूपं तस्मादुपहितां सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेनोपतिष्ठते । यजमानो ऽध्वर्यवश्चैतमनुवाकं पुरुषं नारायणमित्याचक्षत । आयवे स्वाहायोष्कृते स्वाहायोष्पलने स्वाहा विष्णवे स्वाहा बृहस्पतये स्वाहेति पञ्चोपधायाद्भ्यः संभूतः पृथिव्यै रसाच्चेति चोपधायर्तसदसि सत्यसदसि तेजःसदसि यशःसदसि वर्चसदसि गृणानासि धामासि धाम्ने त्वा धामभ्यस्त्वा धामसु सीद सनिरसि सन्यै त्वा सनेयं वित्तिरसि वित्त्यै त्वा विदेयं शक्तिरसि शक्त्यै त्वा शकेयं भूरसि भूत्यै त्वा भूयासं कर्मासि कर्मणे त्वा

---

१ आयुः (not वायुः as Āp.) the Mss. with Kāṭh. and Hir.

क्रियासं गूर्दो ऽसि गूर्दाय गूर्देभ्यस्त्वा गूर्दे सीद क्षत्रं पाहि क्षत्रं पिन्व क्षत्रं जिन्व क्षत्रं यच्छ क्षत्रं दृꣳह क्षत्रमसि क्षत्राय त्वा क्षत्रेभ्यस्त्वा क्षत्रे सीद विश्वेषु त्वा पार्थिवेषु सादयामि विश्वेषु त्वान्तरिक्षेषु सादयामि विश्वेषु त्वा दिव्येषु सादयामि विश्वेषु त्वा देवेषु सादयामि विश्वासु त्वाप्सु सादयामि विश्वासु त्वौषधीषु सादयामि विश्वेषु त्वा वनस्पतिषु सादयामि विश्वासु त्वा दिक्षु सादयामि विश्वासु त्वा प्रदिक्षु[1] सादयामि दिवि सीद स्वर्जिदसि पृतनाजिदसि भूरिजिदस्यभिजिदसि विश्वजिदसि सर्वजिदसि सत्राजिदसि धनजिदसि भ्राडसि विभ्राडसि प्रभ्राडसि सपत्नहनं त्वा वज्रꣳ सादयाम्यभिमातिहनं त्वा वज्रꣳ सादयाम्यरातिहनं त्वा वज्रꣳ सादयामि यातुहनं त्वा पिशाचहनं त्वा रक्षोहणं त्वा वज्रं शत्रुहणममित्रहणं भ्रातृव्यहणमसुरहणं त्वेन्द्रवज्रꣳ सादयाम्युद्दस्युदितिरस्युद्यत्यस्याक्रममाणास्याक्रामन्त्यस्याक्रान्तिरसि संक्रममाणासि संक्रामन्त्यसि संक्रान्तिरसि स्वर्ग्यसि इषि सीदोर्जि सीद भगे सीद द्रविणे सीद सुभूते सीद पृथिव्या यज्ञिये सीद विष्णोः पृष्ठे सीदेडायाः पदे सीद घृतवति सीद पिन्वमाने सीद संवत्सरे सीद परिवत्सरे सीदेदावत्सरे सीदेदुवत्सरे सीदेद्वत्सरे सीद वत्सरे सीदैकस्याꣳ सीद दशसु सीद शते सीद सहस्रे सीदायुते सीद नियुते सीद प्रयुते सीदार्बुदे सीद न्यर्बुदे सीद समुद्रे सीद मध्ये सीद पद्मे सीदाब्जे[2] सीद परार्धे सीद पिन्वमानासि

---

१ प्रदिक्षु HA ; प्रतिदिक्षु MLTBV.
२ अब्जे (not अब्ने) MLAV ; सीदाभे T ; सीदाब्जे HB.

पिन्वमानाय त्वा पिन्वमानेभ्यस्त्वा पिन्वमाने सीदर्तमस्यृताय त्वर्तेभ्यस्त्वर्ते सीद सत्यमसि सत्याय त्वा सत्येभ्यस्त्वा सत्ये सीद सन्धिरसि सन्धये त्वा सन्धिभ्यस्त्वा सन्धिषु सीद सꣳश्लिडसि सꣳश्लिषे त्वा सꣳश्लिड्भ्यस्त्वा सꣳश्लिट्सु सीद संपदसि संपदे त्वा संपद्भ्यस्त्वा संपत्सु सीदेत्येताभ्यामनुवाकाभ्यां प्रतिमन्त्रमृषीष्टकाः सादनप्रवादैश्च पर्यायैरयं पुरो भुव इति प्राणभृतः पञ्चाशत उपदधात्याग्नेय्यां दशायं दक्षिणेति नैर्ऋत्यां दशायं पश्चादिति वायव्यां दशायमुत्तरादित्यपरदिशायां[1] दश । प्राचीः प्रतीचीश्च बाह्यां बाह्यामुपधायान्तरामन्तरामुपदधाती । यमुपरि मतिरिति दशभिरुपरिष्टात्प्रदक्षिणं परिचिनोत्यक्ष्णयोपदधातीत्युक्तं[2] । प्राची दिशां वसन्त ऋतूनामित्यपानभृतः पञ्चाशतं[3] यथा प्राणभृतो । ऽन्तरामन्तरामुपधाय बाह्यां बाह्यामुपदधाति पितरः पितामहा इत्यनुषक्तां । प्राणभृतश्चापानभृतश्च विषूचीरुपदधाति[4] । विषूचीर्विपर्यस्ता इत्यर्थः । ॥ २० ॥

आयुषः प्राणꣳ संतन्वित्यनुवाकेन दिक्षु त्रिभिस्त्रिभिस्तिस्रो द्वादश संयत उपदधाति । पृथिव्यसि जन्मना वशा साग्निं गर्भमधत्थाः सा मया संभवान्तरिक्षमसि जन्मना सा वायुं गर्भमधत्थाः सा मया संभव द्यौरसि जन्मना वशा सादित्यं गर्भमधत्थाः सा मया संभवर्गसि जन्मना वशा सा यज्ञं गर्भमधत्थाः सा मया संभव विडसि जन्मना वशा सा राजन्यं गर्भमधात्थाः सा

---

१ दशायमुत्तरात् The Mss. not दशसु० as TS. IV. 3. 2. . .

२ See TS. V. 2. 10. 4–5.

३ पञ्चाश MLT ; पञ्चाशत्र AHB ; पञ्चाशा V.

४ See TS. V. 2. 10. 6.

मया संभवेत्येतेनानुवाकेन[1] पञ्च वशेष्टका[2] उपदधाति । पृथिवी वशामावास्या गर्भो वनस्पतयो जराय्वग्निर्वत्सो ऽग्निहोत्रं पीयूषो ऽन्तरिक्षं वशा धाता गर्भो रुद्रो जरायु वायुर्वत्सो घर्मः पीयूषो द्यौर्वशा स्तनयित्नुर्गर्भो नक्षत्राणि जरायु सूर्यो वत्सो वृष्टिः पीयूष ऋग्वशा बृहद्रथन्तरे गर्भः प्रैषनिविदो जरायु यज्ञो वत्सो दक्षिणाः पीयूषो विड्वशा राजन्यो गर्भः पशवो जरायु राजा वत्सो बलिः पीयूष इत्यनुवाकेन वा च कुम्भीपूरणसादन-प्रत्यसनाभिमन्त्रणान्येके समामनन्ति । या देव्यसीष्टक आयुर्दा उपशीवरी सा मामुपशेष्व जायेव पतिमित्सदा या देव्यसीष्टके प्राणदा अपानदा व्यानदाश्चक्षुर्दा श्रोत्रदा वाग्दा आत्मदाः पृथिविदा अन्तरिक्षदा द्यौर्दा स्वर्दा कुमारीदाः प्रफर्विदा युवतिदा प्रथमौपश्शदा[3] उपशीवरी सा मामुपशेष्व जायेव पतिमित्सदेत्येतेनानुवाकेनोपशीवरीः षोडशोपदधाति चतुर्दश वा च वा कुम्भेष्टका उपदधाति । त्रिवृत्ते अग्ने शिरस्तन्मे अग्ने शिरः पञ्चदशौ ते अग्ने बाहू तौ मे अग्ने बाहू सप्तदशस्ते अग्न आत्मा स मे अग्न आत्मैकविंशौ ते अग्ने ऊरू तौ मे अग्ने

---

१ These mantras are handed down in the Mss. in a very corrupt state full of dittography and blunders. I reconstructed them with the help of Maitr. Saṃh. II. 13. 15. Although only five are required (cp. the next foll. note), there are too many of them. One of these runs: ओषधयो ऽसि जन्मना वशा सा सोमं राजानं गर्भमभत्याः सा मया संभव ॥

२ Thus corrected (cp. Āp. XVI. 32. 4), पञ्चदशेष्टका MAB TA; पञ्चेष्टका LV.

३ प्रथमौपश्वदा M; प्रथमौपच्छदा TV; प्रथमौपश्वद L; प्रथमौपचद्दा A; प्रथमौपश्वंदा H; प्रथमौप्रच्छदा B.

ऊरू त्रिणवौ ते अग्ने अष्ठीवन्तौ तौ मे अग्ने अष्ठीवन्तौ त्रयस्त्रिंशस्ते अग्ने प्रतिष्ठानं तन्मे अग्ने प्रतिष्ठानमित्येतास्त्रिवृद्दिष्टकाः शिरसि पक्षयोरात्मनि पुच्छे चोपदधाति । त्रिवृत्ते अग्ने शिरस्तेन माभिपाहीति संनमयन्यजमानस्तां तामुपहितामुपतिष्ठते । त्वामग्ने वृषभं चेकितानमित्यृषभं प्राञ्चमुपदधाति लोकं पृण ता अस्य सूददोहस इति द्वाभ्यामवशिष्टमग्निं प्रच्छाद्य हिरण्यं निधाय चित्तिमचित्तिमिति चितिक्लृप्याभिमृशति । यत्ते ऽचितं यदु चितं ते अग्ने यास्ते अग्ने समिधश्चित्तिमचित्तिमिति तिस्रो वयमग्ने धनवन्तः स्यामालं यज्ञायोत दक्षिणायै । ग्रावा वदेदभि सोमस्याꣳशुनेन्द्रꣳ शिक्षेमेन्द्रना सुतेन ॥ रायस्पोषं नो धेहि जातवेद ऊर्जो भागं मधुमत्सूनृतावत् । दुहाम[1] यज्ञꣳ सुनवाम सोमं यज्ञेन त्वामुपशिक्षेम शक्र ॥ ईशानं त्वा शुश्रुमो वयं धनानां धनपते गोमदग्ने । अश्वावद्भूरि पुष्टं हिरण्यवदन्नमद्धेहि मह्यम् ॥ दुहां ते द्यौः पृथिवी पयो ऽजगरस्त्वा सोदको विसर्पतु । प्रजापतिनात्मानमाप्रीणे ऽरिक्तो म आत्मा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाविवेश । तस्मै रुद्राय नमो अस्तु देवा इत्येताभिः सप्तभिः[2] स्वयंचितिभिरभिमृशति । पुरीषमुपधास्यन् कृष्णमश्वमालभ्य पृष्टो दिवीति वैश्वानर्यर्चा चात्वालात्पुरीषमुपदधाति । सा चितिर्भवति भवति । ॥ २१ ॥

इत्यष्टादशः प्रश्नः ॥

---

१ So (not दधाम) also Hir.

२ So also Hir. although both cite *eight* verses.

यो ऽग्निं चिन्वन्नधिक्रामति वाङ् म आसन्नसोः प्राण इति यथारूपं प्राणायतनानि संमृशते । यो अप्स्वन्तरग्निर्यो वृत्रे यः पुरुषे यो अश्मनि । य आविवेश भुवनानि विश्वा तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ यः सोमे अन्तर्यो गोष्वन्तर्वयांꣳसि य आविवेश यो मृगेषु । य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ पृष्टो दिव्युत्तान्नायेति द्वे येनेन्द्रस्य रथꣳ संबभूवुर्यो वैश्वानर उत वैश्वदेव्यः । धीरो यः शक्रः परिभूरदाभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ यं हुतादमग्निं यमु काममाहुर्यं दातारं प्रतिग्रहीतारमाहुः । यो देवानां देवतमस्तपोजास्तेभ्यो अग्निभ्यो हुतमस्त्वेतदित्येताभिश्चितिं चितिमभिजुहोत्यग्ने भूरीणीत्याग्नेय्या धामच्छदा चितिमभिमृशत्युपतिष्ठते वाग्ने देवाꣳ इहावह जज्ञान इत्याग्नेय्या गायत्र्या प्रथमां चितिमभिमृशेदुत्तरया त्रिष्टुभा द्वितीयामुत्तरया जगत्या तृतीयामुत्तरयानुष्टुभा चतुर्थीमुत्तरया पङ्क्त्या पञ्चमीं । सर्वत्राग्ने भूरीणीति धामच्छद्द्वितीयां । षडुपसदो । द्व्यहं द्व्यहमेवैकेनोपसदन्मन्त्रेण जुहोत्यनूपसदमग्निं चिनोत्यन्वहमेकैकां चितिं द्व्यहमुत्तमां च । त्रीणि चतुस्तनानि व्रतानि भवन्ति त्रीणि त्रिस्तनानि त्रीणि द्विस्तनान्येकमेकस्तनं । चतुरो ऽग्रे स्तनान्व्रतमुपैतीत्युक्तं[1] परोवरीयस्यवान्तरदीक्षा[1] तथा चतुर्भागव्रतं व्रताभावश्चापराह्णिकीभ्यां[2] प्रचर्य यदक्रन्दः प्रथमं जायमान इति श्वेतमश्वं प्रदक्षिणं परिणीयैतावदेवैतदहः क्रियते । वसन्त्येतां रात्रिम् । ॥ १ ॥

१ See TS. VI. 2. 3. 5.

२ व्रताभाव० MLAHBV; व्रताभव० T.

अथोदित आदित्ये पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिं चिनोति । कार्ष्णी उपानहावुपमुञ्चते[1] यजमानो ऽध्वर्युश्च । तथात्मन्यग्निं गृहीत्वा ध्रुवक्षितिरिति पञ्चाश्विनी-रुपदधाति द्विश्वैकैकामेकां मध्ये । सजूर्ऋतुभिः सजूर्विधाभि-रिति समानप्रभृतयः पञ्चर्तव्या आश्विन्य इष्टका भवन्ति । सजूर्देवैर्वयोनाधैरिति समानोदर्कास्ता अनूपदधाति । प्राणं मे पाहीति पञ्च प्राणभृत ऋतव्या अनूपदधात्येष वै वायुर्यत्प्राण इत्युक्तमपस्पिन्वेति[2] पञ्चापस्या अनुपरिहारं सादयति । वायो-र्याऽन्यसीति द्वे संयान्यौ । शुक्रश्च शुचिश्च द्वे ऋतव्ये समान-तथादेवते व्याख्याते । ग्रैष्मावृतू अभि कल्पमाना इत्यृतु-विशेषस्त्र्यविर्वय इति वयस्यास्तासां पञ्च दक्षिणस्यां श्रोण्या-मुपदधाति पञ्चोत्तरस्यां । बस्तो वय इति दक्षिणें ऽस उपदधा-त्येकां वृष्णिर्वय इत्युत्तरें ऽस एव[3] प्रतिदधाति । व्याघ्रो वय इति दक्षिणे[4] पक्ष[4] उपदधाति सिंहो वय इत्युत्तरे पुरुषो वय इति मध्ये[4] । विष्टम्भो वय इति पुरस्ताद्वयस्याः प्रतीची-रुपदधाति । तस्माच्चत्वारि चक्षुषो रूपाणीत्युक्तं[5] । यथाब्राह्मणं वोपदध्यादेतदहः । शेषः साधारण उक्तो । वसन्त्येतां रात्रिम् ॥२॥

---

१ Read ०मुञ्चेते.

२ इत्युक्तम् see TS. V. 3. 1. 2.

३ ? उत्तरेंसावेव MLTV ; उत्तरंसौभ्यामंसावेव H ; उत्तरेंसेताभ्यामंसावेव A ; उत्तरेंसताभ्यांसा० B.

४ Thus H only (cp. Baudh. X. 38 ; 36. 13–14), all the other Mss. are confused.

५ See TS. V. 1. 3. 4.

उदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचर्य कार्ष्णौ उपानहौ कृत्वा तृतीयां चितिं चिनोतीन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामभिमृश्य पूर्ववद्विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठ इत्यविदुषा सह मध्ये ऽग्नेरुपदधाति भुव इति चैतया व्याहृत्या। चित्तिं जुहोमीति स्वयमातृण्णायां कृत्वा व्यनिति। ज्योतिरसि ज्योतिर्मे यच्छेति हिरण्येष्टकामधिद्यौरन्तरिक्षमिति मण्डलेष्टकामत्र रेतःसिचो विवयसो। विश्वकर्मा त्वा सादयत्विति विश्वज्योतिषमन्तरिक्षस्य यान्यसीति द्वे संयान्यौ। नभश्च नभस्यश्चेति चतस्र ऋतव्या द्वे द्वे समानतयादेवते व्याख्याते। राज्ञ्यसि प्राची दिगिति दिश्या दिक्ष्वेकैकामेकां मध्य। आयुर्मे पाहीति दश[1] प्राणभृतः पुरस्तादुपदधाति ज्योतिष्मतीमुत्तमां। मा छन्द इति प्रभृति षट्त्रिंशतमुपदधाति द्वादश दक्षिणतः पृथिवी छन्द इति पश्चादग्निर्देवतेत्युत्तरतो। मूर्धासि राडिति सप्त वालखिल्याः पुरस्तादुपदधाति यन्त्री राडिति पश्चात्प्राचीः सप्त वैखानसाः[2]। पृथिव्यै स्वाहान्तरिक्षाय स्वाहेति भूतावेष्टिमन्त्रैर्द्वादश[3] भूतेष्टका उपदधाति। शेषः साधारण उक्तः। एतावदहः कृत्वा वसन्त्येतां रात्रिम्। ॥ ३ ॥

उदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचर्य कृष्णाजिनी कृत्वा चतुर्थीं चितिं चिनोत्याशुस्त्रिवृदग्नेर्भागो ऽसीति द्वाभ्यामनुवाकाभ्यामक्ष्णयास्तोमीया यथाब्राह्मणमुपदधात्यन्तरिक्षमस्यन्त-

---

१ नव ML.

२ The addition of वैखानसाः is curious and striking. Nowhere are these bricks designated by this name!

३ On the designation भूतावेष्टि cp. e.g. Āp. XVIII. 15. 9.

रिचाय त्वेति द्वे संयान्यौ । सहश्च सहस्यश्चेति द्वे ऋतव्ये समानतयादेवते व्याख्याते । एकयास्तुवतेति सप्तदश सृष्टी । रियमेव सा या प्रथमा व्यौच्छदिति षोडश व्युष्टी । रीयुष्ट इति षोडशी[1] । शेषः साधारण उक्तः । एतत्कृत्वोपवसत्येतां[2] रात्रि । मुदित आदित्ये प्रवर्ग्योपसद्भ्यां प्रचर्य कृष्णाजिनी कृत्वा पञ्चमीं चितिं चिनोत्यग्ने जातान्प्रणुदा नः सपत्नानित्यपसपत्ना[3] यथाब्राह्मणमुपदधाती । ष्टकायां पुरीषमध्यूह्य पृथिव्याः पुरीषमसीति पुरीषवतीं मध्ये ऽग्नेरुपदधात्येवश्छन्दो वरिवश्छन्द इति चत्वारिंशतं विराजो दश दश प्रतिदिशमक्ष्णया । रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति स्तोमभागाः सप्त सप्त प्रतिदिशमवशिष्टा मध्ये । राज्यसि प्राची दिग्वसवस्त इति पञ्च नाकसदो दिक्ष्वेकैकामेकां मध्ये । तासु पुरीषमध्यूह्यायं पुरो हरिकेश इति पञ्चचोडा अप्सरसो दिक्ष्वेकैकामेकां मध्ये । पश्चात्प्राचीमुत्तमामुपदधात्या । योस्त्वा सदने सादयामीति स्वयमातृण्णा व्याख्याता । सुवरिति चैतया व्याहृत्या । ऊत्वापान्य प्रोथदश्वो न यवस इति विकर्णी[4] । स्वयमातृण्णां च विकर्णीं चोत्तमे उपदधातीत्युक्तं[5] । देवानां यान्यसि देवानां देवयान्यसीति द्वे संयान्यौ । तपश्च तपस्यश्चेत्यृतव्ये समानतयादेवते व्याख्याते । प्रजापतिस्त्वा सादयतु दिवः पृष्ठ इति विश्वज्योतिषम । त्रैकां रेतःसिचं स्थविरस्य ।

---

१ This, rather strangely, seems to refer to TS. I. 4. 33. a. Nothing of this kind is found in any other source.

२ वसति, not वसन्ति, here the Mss.

३ Baudh. designates them as असपत्नाः.

४ Read विकर्णीं ?

५ See TS. V. 3. 7. 3.

सुवरसि सुवर्मे यच्छेति हिरण्येष्टकां द्यौरपराजितेति मण्डलेष्टकां प्रागेव[1] स्वयमातृण्णाविकर्णीभ्यामुपदध्यादेतावत्कृत्वापराह्णिकीभ्यां प्रचर्य वसन्त्येतां रात्रिम् । ॥ ४ ॥

उदित आदित्ये पौर्वाह्णिकीभ्यां प्रचर्य[2] पञ्चम्याश्चितेः प्रेषमग्निर्मूर्धेति याज्ञसेन्या चित्या छन्दांस्युपदधात्यग्निर्मूर्धेति तिस्रो गायत्रीः पुरस्तादुपदधाति भुवो यज्ञस्येत्युत्तरास्त्रिष्टुभो दक्षिणतो जनस्य गोपा अजनिष्टेति जगतीः पश्चात्त्वां चित्रश्रवस्तमेत्यनुष्टुभ उत्तरत । एना वो अग्निमिति द्वादश विषुरूपाणि छन्दांस्युपदधात्येना वो अग्निमिति बृहतीर्मध्ये ऽग्ने वाजस्येति तिस्र उष्णिहः पुरस्तादा ते अग्न इधीमहीति तिस्रः पङ्क्तीर्दक्षिणतो ऽग्ने तमद्येति तिस्रो ऽक्षरपङ्क्तीः पश्चादेभिर्नो अर्कैरिति विकल्पार्थो ऽग्निꣳ होतारं मन्ये दास्वन्तमित्यतिच्छन्दसं मध्ये ऽग्ने त्वं नो अन्तम इति द्विपदा उत्तरत । [3]एतद्वा विपरीतमन्यत्र साहस्रात्पशुकामस्य गोचितिं चिनोति । सहस्रं पादमात्रीरिष्टकास्ता अग्ने गोभिर्न आगहीत्यनुवाकेन प्रतिमन्त्रं पुनः पुनरभ्यासं प्रथमायां चित्यां मध्यमायामुत्तमायां वोपदध्यादिन्द्राग्निभ्यां त्वा सयुजा युजा युनज्मीति युज उपदधात्यम्बा नामासीति सप्त कृत्तिका गुल्मकृताः । पृथिव्युदपुरमन्नेनेत्यत्र वा तिस्रस्तिस्रो मण्डलेष्टका विश्वज्योतिषश्च प्रथममध्यमोत्तमासु चितिष्वेकैकामित्येके ।

---

१ Why, then, has the Sūtrakāra not described these two at their proper place? Influence of Āp. (XVII. 4. 7) is probable.

२ पञ्च ins. MLTV.

३ एक ins. MLTBV.

रोहितेषु त्वा जीमूतेषु सादयाम्यरुणेषु त्वा कृष्णेषु त्वा नीलेषु त्वासितेषु त्वा जीमूतेषु सादयामीति पञ्च जीमूताः । पुरोवातसनिरसीति पञ्च वृष्टिसनीर्दिक्ष्वेकैकामेकां मध्ये । ऽनुपरिहारं सादयति । सलिलाय त्वा सर्णीकाय त्वेत्यष्टादित्येष्टका दिक्षु द्वे द्वे । ऋचे त्वा रुचे त्वेति पञ्च घृतेष्टका आदित्येष्टकाभिर्व्यतिषक्ता[1] । यशोदां त्वा यशसीति पञ्च यशोदा दिक्ष्वेकैकामेकां मध्ये । भूयस्कृदसीति पञ्च भूयस्कृतो । ऽप्सुषदसीत्यग्निरूपाणि पञ्च । पृथिव्यास्त्वा सादने[2] सादयामीति द्रविणोदाः पञ्च । प्राणं मे पाहीत्यायुष्याः षडेकैकां दिक्षु द्वे द्वे मध्ये । ऽत्रैकेषामुपशीवर्युपधानमग्निना विश्वाषाडिति द्वाविंशतिमिन्द्रतनूः पञ्च पञ्च दिक्षु द्वे मध्ये । प्रजापतिर्मनसान्धो ऽच्छेत इति त्रयस्त्रिंशतं यज्ञतनूरष्टावष्टौ दिक्ष्वेकां मध्ये । ज्योतिष्मतीं त्वा सादयामीति द्वादश ज्योतिष्मतीर्दिक्षु तिस्रस्तिस्रो । राष्ट्रभृतो दिक्षु । पूर्णा पश्चादिति दक्षिणें ऽसे पौर्णमासीमुपधाय कृत्तिका नक्षत्रमिति नक्षत्रेष्टकाः पुरस्तात्प्रतीचीरसंस्पृष्टाः । पूर्वां पूर्वामुपधायापरामपरामा विशाखाभ्यां दक्षिणादंसाद्दक्षिणेन स्वयमातृण्णां दक्षिणश्रोण्यारभ्योत्तरेण[3] स्वयमातृण्णामुत्तरमंसमभ्यायातयति । पौर्णमासीमन्ततो । हिरण्यगर्भः समवर्तताग्र इत्यष्टौ सरितो । विश्वकर्मा दिशां पतिरिति पञ्च हिरण्येष्टका दिक्ष्वेकैकामेकां मध्ये । प्राणाय त्वा चक्षुषे त्वेति चतस्रः स्वयमातृण्णा दिक्षूप-

---

१ व्यतिषिक्ता TV; व्यतिरिक्ता ML; AHB corrupt.

२ सादने TABV; सदने MLA. Different from TS. IV. 4. 7. c.

३ दक्षिणश्रोण्यारभ्योत्तरेण MTV; दक्षिणश्रोण्याभ्यो० L; दक्षिणां श्रोणुत्तरेण AHB.

दधा|त्वग्न आयाहि वीतये ऽग्निं दूतं वृणीमहे ऽग्निनाग्निः समिध्यते ऽग्निर्वृत्राणि जङ्घनदग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः । देवस्य द्रविणस्यव इति पञ्चाह्नां रूपाणि | व्रतमुपदधाति प्राच्या त्वा दिशा सादयामीति पञ्चात्मेष्टका दिक्ष्वेकां मध्ये | संयच्च प्रचेतश्चेति पञ्च वैश्वदेवीरात्मनि द्वेष्यं मनसा ध्यायन् | कया नश्चित्र आभुवदिति तिसृभिर्वामदेव्यं[1] दक्षिणत आत्मनो|न्द्रो दधीचो अस्थभिरित्यनुवाकेनाथर्वशिरो दशातिषक्ता[2] | अभि त्वा शूर नोनुम इत्येषा ईशानमिन्द्र तस्थुषो ॥ न त्वावाꣳ अन्यो दिव्यो न पार्थिवः । न जातो न जनिष्यते ऽश्वायन्तो मघवन्निन्द्र वाजिनः । गव्यन्तस्त्वा हवामह इति रथंतरं दक्षिणे पक्षे | ऽभ्यात्मन्नपवर्गः[3] | प्रथमामुपधाय द्वितीयामथ विशयामर्धमात्मन्यर्धं पक्षे | त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः काष्ठास्वर्वतः ॥ स त्वं नश्चित्र वज्रहस्त धृष्णुया । मह स्तवानो अद्रिवो मह स्तवानो अद्रिवः । गामश्वं रथ्यमन्द्रि[4] संकिर । सत्रा वाजं न जिग्युष इति बृहदुत्तरे पक्षे | तस्य रथंतरवत्कल्पः | ॥ ५ ॥

यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे । प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम् । प्रियं मित्रं

---

१ तिसृभि॰ MLV; तसृभि॰ T; चतसृभि॰ AHB.

२ दशातिरिक्ता MLA; दशाषिक्ता TV; दशातिपिक्ता H; दधातिषक्ता B.

३ अभि (not अधि) the Mss.

४ रथ्य॰ the Mss.

न ग्रꣳसिषम् ॥ ऊर्जो नपातꣳ स हिनायमस्मयुः। दाशेम हव्यदातये। दाशेम हव्यदातये। भुवद्वाजेष्वविता भुवद्वृधः। उत त्राता तनूनामिति यज्ञायज्ञीयं पुच्छे । तस्य रथंतरवत्कल्पस्त्वामग्ने वृषभमित्यृषभमुपधाय संवत्सरस्य प्रतिमामिति प्राजापत्यामन्वाज्यानीरेक । इन्द्रस्य वज्रो ऽसीति चतस्रो वज्रिणीर्दिक्ष्वश्मन इषुहस्त उपदधातीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः। यो न उपरिष्टादघायुरभिदासत्येतꣳ सो ऽश्मानमृच्छत्विति मध्ये पञ्चमीमेके । पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति तिस्रो लोकेष्टका । अग्नये त्वा पवमानायाग्नये त्वा पावकायाग्नये त्वा शुचय इति तिस्रः पावमानीर्ऋचा त्वा छन्दसा सादयामि वषट्कारेण त्वा छन्दसा सादयामि हिंकारेण त्वा छन्दसा सादयामि प्रस्तावेन त्वा छन्दसा सादयामि प्रतिहारेण त्वा छन्दसा सादयाम्युद्गीथेन त्वा छन्दसा सादयामि निधनेन त्वा छन्दसा सादयामीति सप्त छन्दस्या । अग्ने यशस्विन्निति चतस्रो राष्ट्रभृतः पुरस्तादुपधाय हिरण्येष्टकाभिर्लोकंपृणाभिर्वा सर्वतोमुखं चिनुते ऽग्निर्मूर्धेति गायत्रीं पुरस्ताद्भुवो यज्ञस्येति त्रिष्टुभं दक्षिणतो जनस्य गोपा इति जगतीं पश्चात्त्वां चित्रश्रवस्तमेत्यनुष्टुभमुत्तरतो ऽग्ने तमद्येति[1] विकर्णीं चोत्तमामुपदध्याच्छेषः साधारण उक्तो । ऽग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमानिति द्वाभ्यां संचितमग्निमभिमृश्य वसवस्त्वा रुद्रैः पुरस्तात्पान्त्वित्येतैः प्रतिदिशं संचितमग्निमाज्येन प्रोक्षति मध्य उत्तमेन प्राङ्मुखः । सहस्रं हिरण्य-

१ The text here seems to be incomplete.

शल्कानूर्ध्वं त्रिभ्यो ऽपरिमितान्वा[१] । यदि सहस्रं भवति द्वे द्वे शते पञ्चनाडीश्चोते भवतः । सहस्रस्य प्रमा असीत्यूर्ध्वस्तिष्ठन्प्रतिदिशमग्निं द्वाभ्यां शताभ्यां प्रोक्षति मध्यमाभ्यां प्राङ्मुख । इमा मे अग्न इष्टका धेनवः सन्त्वितीष्टका धेनूर्यजमानः कुरुते । ऽग्निरसि वैश्वानरो ऽसीत्यैडिक्या चित्याध्वर्युरग्निमभिमृश्य दीर्घवंशे स्रुवं प्रग्रथ्याग्न[२] उदधे या त इषुर्युवा नामेति पञ्च संचिताहुतीर्जुहोति तत्त्वायामि ब्रह्मणा वन्दमान इति वारुण्यर्चा च जुहुयादुत्तरस्य पक्षस्य चरमायामिष्टकायामुपरि विकर्णीं स्वयमातृण्णायां वा वेणुदण्डाग्रतो ऽर्कपर्णं बद्ध्वा यथा धारा निपतति तथा जर्तिलयवाग्वा गवीधुकयवाग्वा वा गवीधुकसक्तुभिः कुसयसर्पिषाजाक्षीरेण मृगीक्षीरेण वोदङ् तिष्ठन्मुखदघ्ने नमस्ते रुद्र मन्यव इति प्रतिपद्य शतरुद्रीयस्य चतुर्थानुवाके यत्राभिजानाति नमः क्षत्तृभ्य इति तत्स्वाहाकरोति । संततधारया ततः संग्रहीतृभ्य इति प्रतिपद्य प्राङावृत्याथ नाभिदघ्ने धारयन्सप्तमानुवाके यत्राभिजानाति नमो वर्ष्याय चेति तत्स्वाहाकरोति । ततो दक्षिणावृत्य जानुदघ्ने धारयन्नवर्ष्याय चेति प्रतिपद्यैकादशानुवाके यत्राभिजानाति य एतावन्तश्च भूयांसश्चेति तत्स्वाहाकरोति । ततः प्रत्यङ्ङावृत्य गुल्फदघ्ने धारयन्नमो रुद्रेभ्यो ये पृथिव्यामित्येवमेव यजमानं वाचयति । नाभिदघ्ने धारयन्नमो रुद्रेभ्यो ये ऽन्तरिक्ष इत्येनं च यजमानं वाचयति । मुखदघ्ने धारयन्नमो रुद्रेभ्यो ये

१ The accusative is not dependent on any verb. The sentence has been taken from Baudh. X. 47, beg.

२ प्रगृह्या० MATB ; प्रबध्या० TLV, cp. Baudh. X. 47, end.

दिवीत्येनमेव वाचयन् तदर्कपत्त्रं यं द्विष्यात्तस्य संचरे पशूनां न्यस्येद्यद्यु वै न द्वेष्यात्स्वसंचर एव न्यस्येद्रौद्रं गावीधुकं चरुं यो रुद्रो अग्नाविति तस्यामेव चरमायामिष्टकायां निदध्यात् । तिसृधन्वमयाचितं ब्राह्मणाय दद्याद्यत्ते रुद्र पुरो धनुरित्येतैर्यथालिङ्गमुपतिष्ठते ऽनुपरिक्राममुदकुम्भमादायोत्तरे श्रोण्यन्ते ऽध्वर्युरश्मन्नूर्जमिति त्रिः प्रदक्षिणमग्निं संततधारया परिषिञ्चन्पर्येति । निधाय कुम्भमश्मꣳस्ते क्षुदमु ते शुगृच्छतु यं द्विष्म इति त्रिरपरिषिञ्चन्प्रतिपर्येत्यवका[1] वेतसशाखां मण्डूकं दर्भस्तम्बं च दीर्घवंशे प्रग्रथ्नाति । समुद्रस्य त्वावाकयाग्ने परिव्ययामसीति यत्प्राक् स्वयमातृण्णायै भवति तत्प्रथमाभ्यां विकर्षति यद्दक्षिणतस्तदुत्तराभ्यां यत्पश्चात्तत्पञ्चमाष्टमाभ्यां[2] यदुत्तरतस्तदुत्तराभ्यामष्टाभिर्विकर्षतीत्युक्तं[3] । विकर्षन्नेवानुगमयित्वा[4] मण्डूकस्य प्राणान्सर्वान्संलोभ्योत्कर उदस्यति । कार्ष्णाजिन्युपानहौ दीर्घवंशं च संक्षिप्यान्यत्र चात्वाले वोदस्यत्यथ[5] शान्तमग्निं पृष्ठैरुपतिष्ठते गायत्रेण पुरस्ताद्बृहद्रथंतराभ्यां पक्षावृतुस्थायज्ञायज्ञियेन पुच्छं वारवन्तीयेन दक्षिणां श्रोणिं वामदेव्येनोत्तरां प्रजापतेर्हृदयेनापि पक्षमनूचं गायति । पिता मातरिश्वेति संचितोक्थेन होतानुशंसति । यदि होता न शंसेदध्वर्युर्यजमानो वा शंसेत्स्तुत-

१ त्रिः परि० all the Mss.

२ This passage is rather confused in the Mss.; I have restored it with the help of Baudh. X. 48-49; अष्टमाभ्यां seems suspect.

३ See TS. V. 4. 4. 3.

४ Thus MLVT; विकर्षन्नेवाग्निमनुगमयित्वा AHB; this hardly can be right.

५ वोदस्याथ TLV; वोस्याद M; वेदस्यथ AB; देवस्यत्यथ H.

शस्त्रयोश्च स्तुतस्य स्तुतमसि शस्त्रस्य शस्त्रमसीति स्तुतशस्त्रयोर्वैशेषिकं च दोहं यजमानं वाचयतीष्टो यज्ञो भृगुभिराशीर्दा इति पुरो वा पश्चाद्वाच प्रवर्ग्यमुद्वासयति । कार्ष्णी उपानहौ कृत्वा चिते स्थेति दक्षिणपादावुपमुञ्चतो ऽध्वर्युर्यजमानश्चापामिदं नमस्ते हरसे शोचिष इति द्वाभ्यामध्वर्युरग्निमधिरोहति । पृथिवीमाक्रमिषमित्येतैर्यजमानो । नृषदे वडिति पञ्चगृहीतेनाज्येन पञ्चभिरुत्तरवेदिवदग्निं स्वयमातृण्णां वा व्याघार्य ये देवा देवानामिति द्वाभ्यामनुपरिहारं दध्ना मधुमिश्रेण दर्भाग्रमुष्टिना प्रतिदिशमवोक्षति । कूर्मपृष्ठन्तं कृत्वा प्राणदा अपानदा इति प्रत्यवरुह्याग्निस्तिग्मेन शोचिषेति द्वाभ्यामग्नये ऽनीकवत एकामाहुतिं जुहोति । जुह्वां षोडशगृहीतं गृहीत्वा[1] य इमा विश्वा भुवनानि जुह्वच्चक्षुषः पिता मनसा हि धीर इति नानासूक्ताभ्यां द्वे आहुती । यं कामयेत चिरं पाप्मनो निर्मुच्येतेत्येकैकं तस्येत्युक्तं[2] । यद्येनमुदके भीर्विन्देदुदकाञ्जलिमादाय समुद्राय वयुनायेत्यप्सु जुहुयादेतत्सर्वत्र भवत्युदेनमुत्तरां नयेत्येकरात्रघृतोषिताः समिधस्तिस्र औदुम्बरीराधाय पशुबन्धवदग्निं प्रणयत्युदु त्वा विश्वे देवा इत्यृचाग्निमुद्यम्य पञ्च दिशो देवीरिति पञ्चभिराग्नीध्राद्धरति । षड्भिर्हरति वा । तासां द्वे परिगृह्यवती भवतो । विमान एष उत्ता समुद्र इति द्वाभ्यामाग्नीध्रे प्रथममश्मानं[3] निदधातीन्द्रं विश्वा अवीवृधन्निति चतसृभिरा पुच्छादेत्याशुः शिशानो वृषभ इति दशर्चेनाप्रतिरथेन ब्रह्मा दक्षिणतो ऽन्वेति मैत्रावरुणः प्रतिप्रस्थाता

१ गृहीत्वा AHV; कृत्वा MLTB.

२ See TS. V. 4. 5. 4-5.

३ प्रथमम् is probably corrupt, cp. Baudh. X. 51 : 54. 2.

वा । धारयत्येनमग्निमंत्र संचितस्याज्यप्रोक्षणमित्येके । प्राचीमनु प्रदिशमिति सहाग्निनाग्निमधिरोहति । नक्तोषसेति दध्नः पूर्णामौदुम्बरीं स्वयमातृण्णायां जुहोति । नक्तोषसेति पुरोऽनुवाक्यामनूच्याग्ने सहस्राक्षेति याज्यया जुहोत्यूर्णावन्तं प्रथमः सीद योनिमित्युच्यमाने पांशुकान्संभारान् न्युप्य सुपर्णोऽसि गरुत्मान्पृथिव्यामिति तिसृभिरग्निं प्रतिष्ठापयति । प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं समिधमादधाति । विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीं । ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीं । चित्तिं जुहोम्यग्ने तमद्यास्वमित्याहुती हुत्वाष्टगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्न इति सप्तवत्या पूर्णाहुतिं जुहोति । जुक्कदिह सोऽस्त्विति दिग्भ्योऽग्निं मनसा ध्यायति । यत्प्राग्वेदिप्रोक्षात्कृत्वा वैश्वानरं द्वादशकपालं निर्वपति मारुतांश्च सप्त[1] सप्तकपालान् । वेदं कृत्वाग्नीन्परिस्तीर्य पाणी प्रक्षाल्य पात्राणि प्रयुज्य हविर्निरुप्य मारुतांस्तूष्णीमुपचरिता भवन्ति । संप्रैषकाले पत्नीवर्जं संप्रेष्य ध्रुवायामेवाज्यं गृह्णाति । प्रोक्षणीरभिमन्त्र्यापरेणाग्निं बर्हिः स्तीर्त्वा ध्रुवां स्रुवं च सादयत्येषासददिति मन्त्रं संनमति । वेदं निधाय सामिधेनीभ्यः प्रतिपद्य न संप्रेष्यति न संमार्ष्टि न प्रयाजान्यजत्याज्यभागाभ्यां प्रचर्य जुह्वामुपस्तीर्य कृत्स्नं वैश्वानरमवदाय द्विरभिघारयति । त्रिः पञ्चावत्तिन । उच्चैर्वैश्वानरस्याश्रावयत्युपांशु मारुतान्[2] । मध्ये सुवर्ण[3] घर्म स्वाहा सुवर्णार्क[3] स्वाहेति पञ्चभिः स्रुवाहुतीरुपजुहोति । मारुतैश्चरतीदृङ्

---

१ सप्त only in TBV.

२ मारुतान् MLTV; मारुतं AHB.

३ With ण, not न, both times the Mss., सुवर्न B only.

चेति गणं गणमनुद्रुत्य शुक्रज्योतिश्चेति गणेन गणेन मरुतान्सर्वहुतान्[1] पुरोडाशाञ्जुहोति । धुनिश्चेति मध्ये ऽरण्येऽनुवाक्येन[2] जुहोति । स्वतवांश्च प्रघासी च सांतपनश्च गृहमेधी च क्रीडी च साकी चोर्जिषी चेति षष्ठो ग्राम्यो गण आम्नातो । मितासश्च संमितासश्च न ऊतय इति सर्वत्रानुषजत्युक्तमनुद्रुत्य पूर्वेण सप्तमं पुरोडाशं जुहोत्यौदुम्बरीं स्रुचं व्यायाममात्रीं मध्ये बिलान्ततो ऽग्रतः प्रसेचनां[3] दक्षिणत उदञ्चं पश्चाद्वा प्राञ्चं प्रसेचनमन्वायातयति । तस्य बिले घृतस्य संततां धारां करोत्यग्नाविष्णू सजोषसेति संततां वसोर्धारां जुहोत्या मन्त्रसमापनाद्वसोर्मे धारासदिति वा एषा हूयत इत्युक्तं[4] । यदाज्यमुच्छिष्यते तस्मिन्ब्रीह्योदनं पक्त्वा चतुरो ब्राह्मणान्प्राशयेत्तेभ्यस्तत्स्रो धेनूर्दद्यात् । सप्त ग्राम्या ओषधयः सप्तारण्याः पृथग्द्रवीकृता औदुम्बरेण स्रुवेण वाजस्येमं प्रसवः सुषुवे अग्रे वाजो नः सप्त प्रदिशश्चतस्र इति चतुर्दश वाजप्रसवनीयानि तत्र ग्राम्या यवागूराज्यसंयुता हुत्वारण्या जुहोति । हुत्वा हुत्वा पात्र्यां प्ररेकं परिशिनष्टि । दक्षिणं प्रत्यपिपक्षमौदुम्बरीमासन्दीं प्रतिष्ठाप्य तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । तस्मिन्यजमानं प्राञ्चमुपवेश्याग्निमन्वारब्धं सुवर्णरजताभ्यां रुक्माभ्यामुपर्यधश्च कृत्वा सर्वौषधेन पुरस्तात्प्रत्यङ् तिष्ठन्प्ररेकैरभिषिञ्चति । शीर्षतो ऽभिषिञ्चत्या मुखादन्ववस्रावयति । व्याघ्रचर्मणि राजन्यं

---

१ So my correction; सर्वतां MTV; सर्वतान् LA; सयतान् H; B corrupt.

२ Thus V; ०नुवाकेन the other Mss.

३ To this accusative a verb is missing!

४ See TS. V. 4. 8. 1.

वस्ताजिने वैश्यं । देवस्य त्वेत्यनुद्रुत्य सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभिषिञ्चामीति ब्राह्मणमभिषिञ्चतीन्द्रस्येति राजन्यं बृहस्पतेरिति वैश्यं । न हि सुषुवाणः कंचन प्रत्यवरोहति । समुत्क्रोशन्त्यभ्यषेच्ययमसावामुष्यायणो ऽमुष्य पुत्रो ऽमुष्य पौत्रो ऽमुष्य नप्तेति । नक्तोषसेति कृष्णायै श्वेतवत्सायै पयसा हुत्वा षड्भिः पर्यायैर्ऋताषाडिति षड्राजभृतो जुहोति । भुवनस्य पत इति रथमुखे पञ्चापि[१] । समीची नामासि प्राची दिगिति दध्ना मधुमिश्रेण षट् सर्पाहुतीरनुपरिचारं जुहोति । हेतयो नाम स्थेति षडन्यर्वाहुतीर्जुहोत्यत्र सुवर्णं घर्मं स्वाहेत्यर्काहुतीरेके । यास्ते अग्ने सूर्ये रुच इति तिस्रो रुचो । वेद्यास्तरणादि सौमिकं कर्म । यत्राग्धिष्णियनिवपनात्तत्कृत्वा ममाग्ने वर्च इत्यनुवाकेन प्रतिमन्त्रमिष्टकाभिर्धिष्णियांश्चिनोत्यश्मनवमा[२] आग्नीध्रीय उपदधाति । द्वादश होतुर्धिष्णिय एकादश ब्राह्मणाच्छंसिनो ऽष्टावष्टावन्येषु धिष्णियेषूपदधाति षण्मार्जालीये । चतुरश्राः परिमण्डला वा धिष्णियास्तेषां यावत्य इष्टकास्तावतीः शर्कराः परिश्रिताः । सर्वत्रैकैकया च लोकंपृणयेत्येके । ऽष्टौ शामित्रे । ऽव ते हेड उदुत्तमं तत्त्वा यामीति तिस्रो ऽवभृथे । तासु प्रचरन्ति । खण्डाः कृष्णाश्चोत्करे न्यस्या यूपसंमानात्कृत्वैकयूपमेकादश वा यूपान्संमिनोत्यैकयूपे वैकादशिनानुपाकरोत्यग्नीषोमीयस्य पशुपुरोडाशमन्वष्टौ देवसुवां हवींषि निर्वपति । समानं तु स्विष्टकृदिडं । वसतीवरीः परिहृत्येडान्तः पुरोडाशः पत्नीसंयाजान्तः पशुः । संप्रैष्यैतावत्कृत्वा रात्रिं वसन्ति । ॥ ६ ॥

१ Thus MLTV; HAB are hopelessly corrupt.

२ Emended; ०नोत्यनवमा TV; ०नोत्यनश्मा ML; B incomplete.

महारात्रे पुरस्तात्प्रातरनुवाकादग्निं युनज्मीति तिसृभिरग्नियोगं कुर्वन्संचितमग्निमभिमृशति । पशुकाल आग्नेयं सवनीयं पशुमुपाकृत्यैकादशिनान्वा कुर्यात् । दक्षिणाकाले हिरण्यपात्रं मधोः पूर्णं शतमानस्य कृतं चित्रं देवानामित्यवेक्ष्याश्विनावघ्राप्य ब्रह्मणे ददाति । यज्ञायज्ञीयस्य स्तोत्र एकयाप्रस्तुतं भवत्यथ नमस्ते अस्तु मा मा हिꣳसीर्विश्वस्येति द्वाभ्यामग्निमभिमृशति । धाता रातिरिति नव समिष्टयजूंषि कृत्वेष्टो यज्ञो भृगुभिरिति द्वे समिष्टयजुषी जुहोत्यनूबन्ध्यावपान्तं कृत्वेमꣳ स्तनमूर्जस्वन्तं धयापामित्याज्यस्य पूर्णां स्रुचं जुहोत्येष वा अग्नेर्विमोको । कृते सक्तुहोमे यदाकूतात्समसुस्रोद्धृदो वा मनसो वा संभृतं चक्षुषो वेति दशाकूतीर्जुहोति । प्रत्यवरुह्य पुनर्मनः पुनरायुर्म आगादित्युपतिष्ठते । ये ऽग्नयः पुरीष्या इति प्रयास्यन्नाग्निभिरग्निं यजमान उपतिष्ठते । ॥ ७ ॥

अन्येषामग्निं दृष्ट्वोप त्वाग्ने दिवे दिव इति तिसृभिरुपतिष्ठते । ऽग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वामिक्षयाग्निं चित्वैतस्मिन्संवत्सरे न पक्षिणो ऽश्नीयान्न कंचन प्रत्यवरोहेद्यावज्जीवं च मस्तिष्कस्य नाश्नीयान्न च वर्षति धावेद्यदि धावेदुपावर्तेत । नाग्निं चित्वा रामामुपेयान्न द्वितीयं चित्वान्यस्य स्त्रियमुपेयान्न तृतीयं चित्वा कांचन । भार्यां वोपेयादग्निं चित्वैतस्मिन्संवत्सरे यो नर्ध्नुयात्स पुनश्चितिं चिनुते । स्रवणार्थे समृद्ध्यर्थे संतानार्थे[1] च[1] पुनश्चितिं चिनुते चिनुते । ॥ ८ ॥

## इत्येकोनविंशः प्रश्नः ॥

१ These two words only in AH.

नित्यकर्मभिः श्रेयः स्यात् श्रौतैः स्मार्तैश्च[१] । येषामनाहार इहोपादलम्भो[२] ऽमुत्र च प्रत्यवायस्तानि नित्यान्यध्ययनमग्न्याधेयं[३] तयोर्गुणिनिरग्निहोत्रं दर्शपूर्णमासावग्निष्टोमः प्रजन[४] इति । श्रुतद्रव्यावेदने प्रतिनिधिर्मात्रावेदने तदेव द्रव्यं होतव्यं । देवताग्निशब्दक्रियाणां देशकालयोर्न प्रतिनिधिर्विध्यपराधे प्रायश्चित्तं दोषनिघातार्थं[५] विधीयते । ऽनाज्ञाते विशेषे[६] ध्यानं[६] नारायणस्य तज्जपेज्याहोमाश्च हननार्था इत्येकस्मिन्दोषे श्रुतानि प्रायश्चित्तानि समुच्चीयन्ते । ॥ १ ॥

गार्हपत्य उद्वाते ऽवक्षाणेभ्यो मन्थेदलाभे भस्मनारणी संस्पृश्य मथित्वा पूर्ववत्पूर्णां स्रुवाहुतिं जुहोति । सर्वत्र व्रतोपायनीयं जपेदाहिताग्नेः प्रयाणे तुभ्यं ता अङ्गिरस्तमेति हुत्वा पृथगरणी प्रत्यग्न्ययं ते योनिरिति प्रतितपेद्यद्यात्मनि या ते अग्ने यज्ञिया तनूरिति पाणी प्रतप्यापान्यादुचिते[७] स्थले ऽवसाय लौकिके ऽग्नौ प्राण्यादपि वारण्योः प्राप्य मन्थेत्तत्रेष्टिं समाप्यैतावाङ्क्म्याप्रासादपत्तायन्तमाहवनीयं[८] परिव्राजपति-

---

१ Thus B; श्रौतै स्मार्तैश्च ATV; श्रौते स्मार्ते च H; श्रौतस्मार्तैश्च ML.

२ येषामनाहरणं ज़होपादलम्भो TV; येषामाहरणसहोपादलंभो M; येषामाहरणनहेपाद॰ L; एषामकहरण इहोपादालंभो H; एषामनाहरण इहोपादलंभो A.

३ ? नित्यान्यध्ययमग्न्या॰ MLT; नित्याध्यायमग्न्या॰ AB; नित्याध्ययमग्न्या॰ V; ॰नित्यध्ययनमग्न्या॰ H.

४ प्रजन MBAH; प्रजनन TLV.

५ Thus: ॰निघात॰ (not ॰निर्घात॰) the Mss.

६ विशेषध्यानं AHL; विशेषे ध्या॰ TVB; विशेषं ध्या॰ M.

७ प्रतप्या॰ TLV; प्रतितप्या॰ MAHB.

८ Thus H; समाप्यैतावाकृक्म्याप्र(or प्रासा॰) MLTV (in H there is a great lacuna); समाप्यैतावाकृत्वाद्यप्रसा॰ B. The text as handed down is difficult to understand. Cp. Āp. IX. 1. 17.

रिति प्रदक्षिणं कृत्वेदं त एकं पर उ त इत्याहवनीये[१] संभरेद्यद्यनवकाशः प्रदक्षिणस्येदं त एकमित्येव संभरेद्यदि परस्तरामपचायेद्वेद्युत्करपुरीषादिभिः[२] सहानुप्रयायावस्येत्तत्रेष्टिं समाप्याग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेदग्ने नया देवानामिति याज्यानुवाक्ये । यद्वाहिष्ठमग्ने त्वं पारयेति स्विष्टकृतो । ऽनड्वान्दक्षिणापरेद्युर्गृहे पुनरवस्येद्यद्याहिताग्नेरन्यो ऽग्निषु यजेतोभयोर्यजमानयोराग्नावैष्णवी पाथिकृतौ[३] वा दर्शं पूर्णमासं वाश्नीयादन्यो[४] ऽग्निर्वाग्नीन्व्यवेयात्सैवेष्टिर्यस्य[५] हविषे वत्सा अपाकृता धयीरन्धीतान्यां[६] दुह्यात् । ॥ २ ॥

यदि कतिपये[७] धयेयुर्धीतां[८] न[८] दुह्यादितरा दुग्ध्वेष्टिं संस्थाप्य धीतानां वत्सानपाकृत्य श्वो भूते सान्नाय्येन यजेत । यस्य सायं दुग्धं हविरार्तिमार्छतीन्द्राय व्रीहीन्निरुप्योपवसेदिति ब्राह्मणव्याख्यातं[९] । पुरोडाशं प्रातर्दोहेन समवदाय प्रचरेद्देव- मार्तस्य प्रातर्दोहस्यापि वा प्रातर्दोहं द्वैधं कृत्वान्यतरद्रातव्य सायं दोहीकृत्य प्रातर्दोहेन समवदाय प्रचरेदुभयोरार्तयोरैन्द्र

---

१ ०नीये MLTBV; ०नीयस्; A read probably ०नीयं

२ ०पुरुषादिभिः MLTV; ०पुरुषैः A; B corrupt.

३ पाथिकृति TV; पथिकृति ML; पथिकृतौ AB.

४ ? वाग्नियोदन्यो L; वादग्नियोदन्यो TV; वाश्नियोदन्यो M; वादन्नियादन्यो AB.

५ न्निर्वा० all instead of ग्निर्वा, only B निर्वा०.

६ धितान्यां TV; तितान्वां ML; दितान्वां A.

७ ०पये M; ०पया AB; ०पयो TLV.

८ धीतान्न or धितान्न the Mss.

९ See TBr. III. 7. 1. 6.

आग्नेयो वा[१] पञ्चशरावः स्यादुत्तरस्मै हविषि वत्सानपाकृत्योपवसेदेवमन्यच्चातो[२] ऽन्यानि हवींषि चेदार्तान्याज्ये[३] हविर्देवताः प्रतिसंख्यायेष्टेतामिष्टिमनुनिर्वपेद्यस्य व्रत्ये ऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेतापरेण वेदिमुदगग्रं योक्त्रं निदधाति । तन्मन्त्रं यजमानस्तत्पुत्रो वा व्यवेते[४] । व्यहे ऽमो ऽहमस्मीत्येनामुपह्वयते । पूर्णो यज्ञो भवत्येवमप्रक्रान्ते हविषि यज्ञेष्टिप्रारम्भे प्रथमेनास्य पत्न्यनालम्भुका स्यात्तामपरुध्य यजेतेति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेककपालं सौर्यं चरुमित्युक्तं[५] । स प्रत्नवन्निकाव्येन्द्रं वो विश्वतस्परीन्द्रं नरस्त्वं नः सोम या ते धामानीति याज्यानुवाक्या । दुष्टहविषिष्ट्वा[६] चैषा विभ्रष्टेष्टिः । ॥ ३ ॥

अग्न्याधेये यद्यनालम्भुका प्राग्दक्षिणायास्तदा[७] धीतकालान्तरे[८] पश्चादपरुध्य यजेत प्रारब्धायामारम्भणीयायां सा पौर्णमास्यन्ता आहुते[९] ऽग्निहोत्रे प्रारब्धे ऽप्यवरुध्य होतव्यः[१०]

---

१ Thus A; ०रैन्द्राग्नयोर्वा TMLV; ०ह्रादाग्नयो वा B.

२ ०न्यच्चातो MLTV, ०न्यतरातो A; ०न्यतरच्चातो B.

३ Thus the Mss., read आज्येन, cp. Āp. IX. 15. 14, Baudh. Śrs. XXVII. 13: 340. 7 and Kāty. Śrs. XXV. 4. 14.

४ Thus the Mss.

५ इत्युक्तम्, where?

६ Thus my conjecture, दुष्टहविषेष्वा the Mss.

७ तदा TAV; तथा ML; तद्द B.

८ कालान्तरे om. AB.

९ Thus MLTV; ०मास्यान्ताहुत्यग्नि० A; ०मास्यनात्यग्नि० B.

१० होतव्यः A; होतव्य MLTBV.

सोमाधाने सोमकल्पे[1] कृते चानालम्भुका हविर्निर्वेशेतातीते त्र्यहे तां पूर्ववदुपक्रयते । दुग्धे व्रते तदहः समाप्यैतान्यतीते[2] त्र्यहे व्याख्यातं । तथा प्रवर्ग्ये तथोपवसथे यावत्सौत्यमहः समाप्यते तस्मिन्नहनि मार्जालीये परिश्रिते वसेद्बहिर्विष्यव्रता स्याद्यदि सूतिका दशाहे ऽतीते तदुपक्रयते । ऽनालम्भुकयाग्नयः स्पृष्टा[3] नश्येयुः । पुनरादधीत । यद्येकं स्पृशेत्तं मथित्वायतने निधाय पवमानहवींषि निर्वपेत् । ॥ ४ ॥

सान्नाय्ये घर्मे वा यदि दोग्धारं प्रतिबध्नीयादुपार्दोह्यिलैतदन्यैः[4] प्रभाव्य प्रचरेद्विष्यन्दमानं सान्नाय्यमग्निहोत्रं वोदङ् परेत्य प्रजापते न त्वदिति प्राजापत्ययर्चा पलाशपर्णेन वल्मीके ऽवनयेद्भूरित्युपतिष्ठेत । यत्कीटावपन्नं मही द्यौः पृथिवी च न इति द्यावापृथिव्ययर्चान्तःपरिधि निनीय भूरित्युपतिष्ठेत । सान्नाय्ये पुनरिज्याग्निहोत्रे[5] पुनर्होमो । यद्यभिवृष्टमग्निहोत्रं मित्रो जनान् कल्पयतीति मैत्र्यर्चा तद्धुत्वान्यां दुग्ध्वा पुनर्होतव्यं । यत्पूर्वस्यामाहुत्यां हुतायामुत्तराहुतिः स्कन्देद्यदा पूर्वामुत्तरयाभिजुहुयाद्यत्र वेत्थ वनस्पत इति वानस्पत्ययर्चा समिधमाधाय तूष्णीमेव पुनर्जुहुयाद्यद्युत्तराहुतावहुतायामाहवनीय उद्वायेदनन्तरे शकले हिरण्यं निधायाग्निर्दारौ दारावग्निः स्वाहेति हिरण्यमभिजुहुयात् । ॥ ५ ॥

---

१ सोमक० L; सोमक० MAHTBV.

२ ०न्यदतीते AMLTV; ०न्यतीत्रे H; missing in B.

३ Thus V; स्पृष्ट्वा all the other Mss.

४ उपार्द्दो० all the Mss.; उपार्देदाह्वि of B seems to point to the same Read उपादो० ?

५ Thus emended; पुनरितज्याग्नि० MLTV; पुनरित्येतंत्यागि० A; पुनरित्येतज्याग्नि० H; पुनरित्येताज्याग्नि० B.

यदि पुरा प्रयाजेभ्यो बर्हिः परिधिदेशे प्रागाहवनीयादङ्गारः[1] स्कन्देत्तदाध्वर्यवे च यजमानाय चाकꣳ स्यादित्युक्तं[2] । मा तमो मा यज्ञस्तमदित्यनुद्रुत्याध्वर्युं मा हिꣳसीर्यजमानं मा हिꣳसीरिति स्रुवबुध्नेन तमङ्गारमभिनिदध्यात्तथानुद्रुत्य दक्षिणतो ब्रह्माणं मा हिꣳसीर्यजमानं मा हिꣳसीरिति । पश्चाद्धोतारं मा हिꣳसीः पत्नीं मा हिꣳसीर्यजमानं मा हिꣳसीरित्याग्नीध्रं मा हिꣳसीर्यजमानस्य पशून्मा हिꣳसीरित्युत्तरतः । सहस्रशृङ्गो वृषभो जातवेदा इत्याहवनीये ऽङ्गारमनुप्रहरेत् । ॥ ६ ॥

इमं जीवेभ्यः परिधिं दधामीति प्रहृतं स्रुवेणाभिजुहुयाद्यस्य समारूढो ऽग्निरनुगतो वा मथ्यमानो न जायेत संनिकृष्टे होमकाले ऽग्निं नरो दीधितिभिररण्योरित्यरणी अभिमन्त्र्य लौकिकमग्निमायतने निधाय होतव्यं । यद्यन्यमग्निं न विन्देताजायां होतव्यमित्यादिब्राह्मणोक्तानि[3] सांवत्सरिकाणि तत्तद्धोमव्रतानि चाग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत्त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनामेति याज्यानुवाक्ये । समाप्यैवमिष्टिं तत्तद्व्रतानि विसृजेद्यस्याहिताग्नेः संग्रामे संयत्ते गृहदाहे वा येषां पूर्वापरा अन्वञ्चः प्रमीयेरन्नग्नये क्षामवते

शमष्टाकपालं निर्वपेदक्रन्ददग्निस्त्वे वसूनीति याज्यानु-

। ॥ ७ ॥

यस्याग्नयो ऽग्निभिरन्यैः संसृज्यन्ते मिथो वाग्नये विविचये ऽष्टाकपालं । वि ते विष्वग्वातजूतासस्त्वामग्ने मानुषीरीडत इति याज्यानुवाक्ये । मिथश्चेद्विपृचये[1] ऽग्नय इत्येकेषामग्निना विपृचा वयं गीर्भिः स्तोमं मनामहे । स नो रास्व सहस्विनः ॥ कविरग्निः समिध्यते विप्रो यज्ञस्य साधनः । विपृञ्चन् रास्व नो वस्विति याज्यानुवाक्ये । यदि गार्हपत्य आहवनीयेन दक्षिणाग्निना वा संसृष्टो[2] ऽग्नये वीतय इत्येकेषामग्न आयाहि यो अग्निमिति याज्यानुवाक्ये[3] । यदि प्रदाव्येन गृहदाहवह्निना वा श्मशानवह्निना वा गार्हपत्यः संसृष्टो[4] ऽग्नये शुचये । यदि सर्वैः सर्वे विविचये निरुप्य शुचये निर्वपति । ॥ ८ ॥

ततो व्रातभृतीं तृतीयामप्सुमतीं चतुर्थीमन्ततः क्षामवतीमिष्टिं निर्वपेत् । संसृष्टानग्नीन्पृथगरणीषु समारोप्य मथित्वायतनेषु निधायैता इष्टय आहार्याः पूर्णाहुतयः स्रुवाहुतयो वा । पूर्वाः पूर्वा वरीयस्यः । पुनराधेय इत्येके । गर्भं स्रवन्तमगदमकरिति स्रवन्तीमग्निहोत्रस्थालीमभिमन्त्र्य विधुं दद्राणमिति संधानैः संदध्यादसमर्था चेदप्सु क्षिपेदन्यामाहृत्य दुह्यादग्निहोत्री यद्युपसृष्टा निषीदेद्यस्माद्भीषा निषीदसीति तामभिमन्त्र्योदस्थाद्देव्यदितिरित्युपस्थाप्य दुग्ध्वा सह दुग्धेन दर्भस्तम्बमालुप्य ग्रासयेद्यदि लोहितं दुहीत तदा व्युत्क्रामतेति संप्रेष्य दक्षिणे ऽग्नौ

---

१ Thus (not विष्टचे) the Mss.

२ सं॑सृष्टे अ॰ MLTV; सहष्टे अ॰ AB.

३ The verses are confused in the Mss.; see Ait. Br. VII. 5. 2.

४ Thus HB; ॰सृष्टाग्न॰ MLA; only TV संसृष्टोग्न॰.

परिश्रित्यात्र[1] श्रपयित्वा तस्मिन्न्याहृतीभिर्जुहुयाद्यमनभ्यागमिष्यन्मन्येत तस्मै ब्राह्मणाय तां दद्याद्यदद्य दुग्धं पृथिवीमसक्रीति दुह्यमानं स्कन्नमभिमन्त्र्य समुद्रं वः प्रहिणोमीत्यद्भिरुपसृज्य[2] तदेव दुग्धं यादृक् कीदृक् च होतव्यमन्यया वाभिदुह्य होतव्यमन्यां वा दुग्ध्वा पुनर्जुहुयादपि वाग्निहोत्रीमेव दुग्ध्वा होतव्यम् । ॥ ९ ॥

आ होतोर्यजमानः सायं प्रातर्नाश्नीयाद्देवं रौद्रं गवीत्यनुवाकोक्तावस्थहविस्कन्ने[3] सर्वास्वग्निहोत्रे[4] हविरार्तिषु तमतन्वाग्निं[5] जुहुयादित्यपरं । यदि दुह्यमाना स्थाली भिद्येतान्यां स्थालीमाहृत्य दुह्याद्यदि सकृदुन्नीतं स्कन्देदस्कान्द्यौः पृथिवीमिति स्कन्नमभिमन्त्र्योन्नभय पृथिवीमित्यद्भिरुपनिनीयानाज्ञातं जपित्वा भूर्भुवः सुवः स्वाहेति तथा सर्वप्रायश्चित्तं हुत्वानशनं[6] च तदेव यादृक् कीदृक् च होतव्यमन्यां दुग्ध्वा पुनर्होतव्यमन्यया वाभिदोह्यं । द्विस्त्रिर्वा स्कन्दने न तदाद्रियेत । यद्यु वै चतुर्थमुन्नीतं स्कन्देत्स्थाल्यां शेषमवनीय चतुरभ्युन्नीय होतव्यमन्यया वाभिदोह्यम्[7] । ॥ १० ॥

---

१ परिवीत्यत्र ML; परिवित्यचि TV; H and A om. परिश्रित्य and read तच्छ्रपयित्वा; B useless.

२ उपस्पृश्य the Mss.

३ ? Thus TAHB; ०वास्थहविरन्यैः ML.

४ सर्वास्व० HB; सर्वेष्व० MLTAV

५ ? तमतन्वाग्नि ML; तमतस्वग्नि TABV; ०तमतत्यस्वग्निं H.

६ हुत्वा om. LTV; हुत्वाशनं B.

७ Thus AH; मन्यया वा स्थाल्याम् ML; वाभिदुह्यात् T; वाभिदुह्यं V.

यद्युद्धृतस्य स्कन्देद्यत्ततो हुत्वा पुनरेयात्स्रुचं[1] तन्निषद्य पुनर्गृह्णीयात्तदेव यादृक् कीदृक् चेति व्याख्यातमव ते हेड इत्यनूच्योदुत्तमं वरुण पाशमस्मदिति वारुण्यर्चाज्येन जुहुयाद्यदि प्राचीनं ह्रियमाणं स्कन्देत्प्रजापतेर्विश्वभृति तन्वं हुतमसि स्वाहेत्यभिमन्त्र्य ·पूर्ववदनूच्य जुहुयाद्यथाहुतिमात्रादन्यत्स्कन्नं विप्रुडेव[2] सा । न स्कन्नं । न प्रायश्चित्तमोत्तरस्माद्धोमकालान्नाश्नीयात्पुनर्होमं च कुर्याद्यस्याग्निहोत्रमधिश्रियमाणं शिरिशिरा[3] भवति समोषामुमिति द्वेष्टारमुदाहरेद्यस्याग्निहोत्रेऽधिश्रिते श्वादयोऽन्तराग्नी धावेयुर्गार्हपत्याद्भस्मादायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीयाद्ध्वंसयन्नुद्द्रवेत्तया भस्मना शुनः पदमपि वपति । गोमयीरपोऽन्वतिषिच्य गोभिराक्रमयेदित्येके । यद्यनभिश्रिते मनो ज्योतिरिति मनस्वतीं जुहुयात् । ॥ ११ ॥

दक्षिणाग्निमनाहृतं सूर्योऽभिनिम्रोचेद्यथायोन्याहृत्यैतं प्रविश्यानीत्यायतने प्रतिष्ठापयेदेष आधीयत इत्यनुगतस्याधानकल्पो । यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचति दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेद्ब्राह्मणो बहुविदार्षेयो । ऽथाग्निं समिधमुपगृह्याग्निहोत्रं[4] । सूर्याग्न्योर्हिरण्यं प्रतिनिधिरिति विज्ञाय हिरण्ये ऽग्निं प्रतिष्ठापयेत्पयसैवाग्निहोत्रं जुहोत्यग्निहोत्रमुपसाद्या

---

१ Thus emended in acc. with TBr. I. 4. 3. 5. All the Mss. are corrupt here.

२ Thus emended in acc. with Āp. IX. 6. 8; the Mss. are corrupt here

३ शिरिश्शिरान् A; शिसुशिरा MLTV; शरिश्शिराद् H; शरिश्शरान् B.

४ उपगृह्य THAV; उपसंगृह्य ML.

तमितोरप्राणन्नासीत[1] । भूर्भुवः सुवरित्युपतिष्ठते । वरं दत्त्वा पुनः समन्य हुत्वा नक्तमाहवनीयं धारयन्वारुणं चरुं सूर्यो अभ्युदेति[2] दर्भेण हिरण्यं प्रबध्य पुरस्ताद्धरेत् । ॥ १२ ॥

अथ चतुर्गृहीतमाज्यं । पूर्ववदग्निमादायाग्निहोत्रमुद्धरेदुषाः केतुना जुषतां यज्ञमिति प्रत्यङ्ङिषद्याज्येन जुहुयादग्निहोत्रमुपसाद्या तमितोरासीत । पुनः समन्य जुहोतीति व्याख्यात[3]मग्निहोत्रमग्निमनुगमयित्वान्वग्निरुषामग्रमख्यदित्यन्यं[4] प्रणीयेहैव क्षेम्य एधि मा प्रहासीर्मामनुमामुष्यायणमित्युपस्थाय वारुणस्थाने मैत्रं चरुं निर्वपेद्भौमं[5] महिना दिवं प्र स मित्र मर्तो अस्त्विति याज्यानुवाक्ये । ददाति वरमत्र । हुत्वाहवनीयमेवैतदहरिन्धानावनश्नन्तौ यजमानः पत्नी च वाग्यतावासाते । द्वयोः पयसा सायमग्निहोत्रं जुहुयात्पूर्वमधिश्रित्योत्तरं पय आनयति । वरो दक्षिणापत्कल्पे न च तदेव प्रायश्चित्तमित्येके । ऽस्मिन्द्वये निमित्ते मनो ज्योतिर्जुषतां त्रयस्त्रिंशत्तन्तव इति द्वे चतुर्गृहीते जुहुयादित्यपरम् ॥ १३ ॥

यस्य[6] होष्यामीति प्रवृत्ते हुतमग्निहोत्रं[7] सूर्यो ऽभिनिम्रोचे-

---

१ आसीत् or आसीद् the Mss.

२ ? वारुणं चरु सूर्योभ्युदेति TV; वारुणं च द्रुतं सूर्योभ्युदेति A; वारुण च दूतं सूर्योभ्युदेति H; वारुणं च यवदेति M; the same, but at the end ०वदिति, L; B incomplete.

३ व्याख्याग्निहो० the Mss.

४ In TLV this passage is left out; अन्वगमयित्वा AB; अन्वग्गमयित्वा M; अन्वद्गमधित्वा H.

५ ० ौमं (not ०मां) the Mss.

६ ? यस्यतु MLTV; यस्यत्तु A; यस्यतु H; यस्यनु B.

७ हुत० or ऽहुत० ?

दभ्युदियाद्वा तदुत्साद्य पुनराधेय इत्येके । यद्यन्ते स्यादुन्नीय प्राङुदाद्रवेत्सं उपसाद्यातमितोरासीत । स यदा ताम्येदथ भूः स्वाहेति जुहुयादित्युक्तो[1] । यस्योभावग्नी अनुगतावभिनिम्रोचेदभ्युदियाद्वा यदि वारण्योः समारूढो नश्येत्पुनराधेयमग्न्याधेयं वा प्रायश्चित्तं मनस्वत्या वा चतुर्गृहीतं जुहुयादित्यपरमग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे चतुरहे वाग्नये तन्तुमते ऽष्टाकपालं निर्वपेत् । ॥ १४ ॥

स्वयं कृण्वानः सुगमप्रयावं त्वं नस्तन्तुरुत सेतुरग्न इति याज्यानुवाक्ये । तन्तुं तन्वन्नुद्बुध्यस्वाग्ने त्रयस्त्रिंशत्तन्तवो ऽव ते हेड उदुत्तममुदयं तमसस्पर्युदु त्यं चित्रमित्युपहोमा । हव्यवाहं स्विष्टमिति संयाज्ये । संस्थितायामिष्टावतीतहोमान्[2] जुहोति । यदि द्व्यहं न जुहोति त्र्यहं वात ऊर्ध्वं[3] सप्तहोतारं मनसानुद्रुत्य सग्रहं जुहोति । मनो ज्योतिरित्येके । सर्वप्रायश्चित्तमित्यपरे । चतूरात्रमहूयमानो[4] ऽग्निर्लौकिको भवतीति ब्राह्मणं[5] । द्वादशरात्रमहूयमानो ऽग्निर्लौकिको भवतीत्येके । ऽन्यत्रापद्गतस्य मासादिषण्मासपर्यन्तमग्निहोत्रलोपे तन्तुमान्पथिकृद्वैश्वानर्यौ वैश्वानरो वा पथिकृतेष्टा[6] सर्वा[6] वेष्टयः कार्या नाधानम् । ॥ १५ ॥

---

१ Thus the Mss.; read इत्युक्तं ?

२ ०होमान् MLTBV; ०होमं AH.

३ वोर्ध्वं M; चोर्ध्वं L; वा ऊर्ध्वं TV; वात ऊर्ध्वं AHB.

४ ०क्रियमाणो MLTAV; ०कुयमानो H; क्रीयमानो B.

५ I am unable to point out this brāhmaṇa.

६ पथिकृतो वा सर्वा HA; पथिकृतेन सर्वा B.

नैमित्तिकाय होमायोद्धृते यस्याहवनीये ऽनुद्वाते गार्हपत्य उद्वायेत्तदाहवनीयमुद्वाप्येतः प्रथममिति पूर्ववद्गार्हपत्यं मन्थेत्तत आहवनीयं प्रणयेदग्ने सम्राडिति । तमाहवनीयमुपसमिध्याग्नये तपस्वते जनद्वते पावकवते ऽष्टाकपालं निर्वपेदायाहि तपसा नो याहि तपसेति याज्यानुवाक्ये । होमकाले त्वहुते ऽग्निहोत्रे ऽनुगत आहवनीये ज्योतिष्मते तपस्वते वाष्टाकपालं निर्वपेदुदग्ने शुचयस्तव वि ज्योतिषेति याज्यानुवाक्ये । अधिश्रित्य येत्सन्नाग्निरनुगच्छेन्मथित्वा[1] तपस्वते निर्वपेदधिश्रित्येष्यन्ते ऽनुगतेनन्निरूहेत्तदा[2] गार्हपत्ये ऽनुगते व्यन्तादाहृत्य समिन्द्धे[3] । प्रागघविरासादनात्[4] तत्तद्योनितः प्रणीय समिन्धनमित्येके । संधानमात्रे सर्वप्रायश्चित्तमेव । यस्यानाहिताग्नेः सायंप्रातराहुते ऽग्निहोत्रे होमकाल आहवनीयो ऽनुगच्छेदधिश्रित्याग्निहोत्रमुन्नीय बह्वविदाहवनीयमुद्धृत्याग्निहोत्रेण सह प्राङ् द्रवेत् । ॥ १६ ॥

यदस्य दयितं धनं तत्तस्मै[5] दद्यादनुगतेष्टीनां स्थाने मित्राय स्वाहा वरुणाय स्वाहा सोमाय स्वाहा सूर्याय स्वाहाग्नये तपस्वते जनद्वते पाकवते स्वाहाग्नये शुचये स्वाहाग्नये

१ ? येत्सन्नाग्निरग(ग्नसं)च्छेन्मथि० MLTV; येत्वांनाग्निरनुगतेमथि० H; येत्यन्नानिरनुगच्छेन्मथि० A; येत्यग्निरनुगच्छे० B. How is to be restored ?

२ ? ०गतेनन्निरूहे तदा M and the same L but ०रूपे तदा, and A ०रूपेत्तदा; ०गतेनंनिरूहे तदा HB; ०गतेनं निरूभे तदा TV.

३ व्यन्तधाहृत्यस्मिन्धे M; व्यतधाहृत्यस्मिन्धे T; व्यंतादाहृत्यस्मिद्धे A; व्यांतादाहृतस्विध्रे H; व्यन्तदाहृत्यतधाहृत्यन्मन्धे L; व्यतोदाहृत्यस्मिद्धे B; व्यंतदाहृत्यस्मिन् धे० V.

४ Thus emended by me: प्राग्वपिरासा० the Mss.

५ Thus B; तं तस्मै the other Mss.

ज्योतिष्मते स्वाहाग्नये व्रतपतये स्वाहेति व्याहृतीभिरेकैकशः समस्ताभिश्च जुहोतीत्येकेषां। यदि होमकाल आहवनीयो ऽनुगच्छेत्प्राण उदानमप्यगादिति गार्हपत्ये जुहुयादपचाराणि संनिधाय मन्थेत्सर्वप्रायश्चित्तमन्यद्यदि गार्हपत्य उदानः प्राणमप्यगादित्याहवनीये। यदि दक्षिणाग्निर्व्यान उदानमप्यगादिति गार्हपत्ये। यदि सर्वे ऽनुगच्छेयुर्यां दिशं प्रति वायुरावाति मथित्वा गार्हपत्यं निधाय तां दिशं प्रत्याहवनीयमुद्धृत्य वायवे स्वाहेत्याहुतिं जुहोत्येतत् पूर्वामाहुतिं जुहोत्येतत्पूर्वाहुतिस्थानीयमित्येके। ॥ १७ ॥

यदि निवाते ऽनुगच्छेयुर्मथित्वा विहृत्यापरेणाहवनीयमुपविश्य स्वयमग्निहोत्रं पिबेद्धविः प्रोक्षन्नाग्निमभिप्रोक्षेद्यदि प्रोक्षेत्पुनस्त्वादित्या रुद्रा वसवः समिन्धतामिति समिधमादध्याज्जुहुयादुपतिष्ठेत वा। द्वादशमालादिशूद्रादिसंस्पर्शजाग्न्युपघाते[1] पुनरादधीत। यस्याग्नावग्निमभ्युद्धरेयुस्तत्र प्रारब्धं हुत्वाग्नये ऽग्निवते पुरोडाशमष्टाकपालं निर्वपेदग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निनेति याज्यानुवाक्ये। भवतं नः समनसाविति चोपतिष्ठते। ॥ १८ ॥

प्रातरहुते[2] ऽग्निहोत्र उद्वाते ऽपर आदीप्यानूद्धृत्यो। मन्थेदित्येके। ऽग्नये ज्योतिष्मते ऽष्टाकपालं निर्वपति त्वयस्त्विङ्ग्शत्तन्तव इति च जुहोति। मित्रादयस्त्र। यदि कृष्णशकुनि-

१ ०मालादि० MLH; ०मलादि० ATV (meaning ?).

२ Thus V; ०राहुते the other Mss., but cp. TS. II. 2. 4. 7.

ध्वंसयन्नुपर्युपर्यग्निहोत्रमधिपतेद्यदि[1] सान्नाय्ये ऽधिश्रिते हविषि वा निरुप्ते रथपुरुषादयो ऽन्तराग्नी वीयात्प्राक् प्रधानयागाद्धोमयोरपो ऽन्वतिषिच्य तेनैव मार्गेण गामन्वत्यावर्तयेद्धर्तां[2] भूतिरिति हुत्वोपस्थाय वा देवाञ्जनमगन्यज्ञ इति षड्भिर्हुत्वा गार्हपत्याद्भस्मादायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाहवनीयं ध्वंसयन्नुद्द्रवेदेतयैव भस्मना पदमपि वपति । ॥ १९ ॥

यस्यानो वा रथो वान्तराग्नी याति न कालमवधारयत्याहवनीयमुद्वाप्य यदग्ने पूर्वं प्रभृतं पदꣳ हि ते त्वमग्ने सप्रथा असीति द्वाभ्यां गार्हपत्यादुद्धरेदथ वा पथिकृतीं निर्वपेदेतामेव स्तोत्रे शस्त्रे वा मूढ । एतां जने प्रमीतस्य निर्वपेत्तत्रेहार्थ आग्निषो न विद्यन्ते याजमानानि चाध्वर्युर्वा कुर्यादभिवाज्य[3] दक्षिणत[3] उद्वास्य सकृदेव । सर्वं तूष्णीमुन्नीयाधस्तात्समिधं धारयत्युपरि हि देवेभ्यो धारयन्ति । ॥ २० ॥

विहारस्य[4] दक्षिणतः[4] पयसाग्निहोत्रं जुहुयाद्वा शरीरस्याग्निभिः संस्पर्शनात् । सर्वं तूष्णीं क्रियेत । प्राचीनावीती दोहयति । ये पुरोदञ्चो दर्भास्तान्दक्षिणाग्रान्कृत्वा दक्षिणार्धे

---

१ जति प० or इति प० the Mss.

२ गामावर्तये० TLV; गामनुवर्तये० M; गामन्वयान्यावर्त० AH; गामयत्यधान्यावर्तये० B.

३ अभिवाज्य दक्षिणत H; अभिवाद्य दक्षिणत MAB; अभिवान्यवत्सायाद्वास्य TLV.

४ विहारस्य पयसा the Mss., but in the list of pratikas दक्षिणतः is given. After all, perhaps, no दक्षिणतः is required, but the original reading could have been: अभिवान्यायाः पयसा etc., see preceding note; B विहारस्य दक्षिणतस्तूष्णीं, thus omitting three lines.

गार्हपत्यस्य शीते भस्मन्यधिश्रित्य[1] दक्षिणतस्तूष्णीं प्राङ् द्रवति । स उपसाद्य[2] समिधमाधाय सर्वं तूष्णीं जुहुयादपि वा सोमाय पितृमते स्वाहेति पूर्वामाहुतिं जुहुयादग्नये कव्यवाहनाय स्विष्टकृते स्वाहेत्युत्तरां । प्राशनोत्सेचनपरिषेचनानि न विद्यन्ते । ब्राह्मणेभ्यः सर्वाणि यज्ञायुधानि ददात्ययस्मयानीत्यपरं । मृन्मयान्यप्सु प्रहरेदश्मैव पुत्रस्य दृषत्स्यात्पय एवाजस्रेष्वग्निषु जुहुयादप्रमीतं प्रमीतमिति[3] शृणुयादग्नये सुरभिमते ऽष्टाकपालं निर्वपेदग्निर्होता निषसादा याजीयान्साध्वीमकर्देववीतिं नो अद्येति याज्यानुवाक्ये । यदि पूर्वस्यामाहुत्यां हुतायां यजमानो म्रियेत दक्षिणतो भस्मन्युत्तरामाहुतिं निनयेत् । ॥ २१ ॥

परेयुवाꣳसमिति प्रथमामाहुतिं जुहुयाद्यद्यपरपक्षे शेषाण्यहानि यावत्पूर्वपक्षं संख्याय तावन्ति पयसाग्निहोत्रं जुहुयुरमावास्यायामप्याक्रम्य[4] पूर्णाहुत्या याजयेयुर्यदि पूर्वपक्षे नक्तं प्रतिक्रम्य प्रातरग्निहोत्रं जुहुयुः । परिस्तरणानि प्रहरेयुर्यद्युपवसथे पौर्णमास्यां पैतृमेधिकमेवापराह्णे ऽधिवृक्षसूर्ये । यद्युपवसथे ऽमावास्यायां पूर्णाहुत्यैव याजयेयुर्यदीष्टिमध्ये सर्वेभ्यो । यदि विसंस्थितायामिष्ट्यां यजमानो म्रियेत सर्वेभ्यो हविर्भ्यः

१ After अधिश्रित्य MLTV (in AHB this passage has been omitted) insert the incomprehensible words: दक्षिणो मेदते पुंसां रर्प (or पुंसां रर्भ or पुंसां रर्च).

२ स उपसाद्य A; उसाद्य MHLTBV.

३ प्रमीत इति AHB; प्रमीतमिति MLTV.

४ ॰मास्यामप्याक्रम्य TV; ॰मावास्यायामप्याक्रम्य MLA; ॰मावास्यारयक्रम्य H; ॰मावास्यायामप्यक्रम्य B.

समवदाय सर्वा देवता अनुद्रुत्य स्वाहाकारेणेष्ट्वाग्नये विष्णवे ऽग्नीषोमाभ्यां स्वाहेति जुहुयात्तथा चातुर्मास्यपशुबन्धसौत्रामणीषु । यद्याहिताग्निर्म्रियेत[1] ज्ञायेत यां दिशमभिप्रस्थितः स्यात्तां दिशं गत्वाग्निभिस्तूष्णीं कक्षं दहेयुरपि वाकृतिदहनं कुर्युस्तद्व्याख्यातम् । ॥ २२ ॥

देशान्तरगतस्य मरणात्प्रत्यासन्नस्य वा पाथिकृतीष्टिः कार्या । देशान्तरे मृतस्य शरीरं तैलद्रोण्यामवधाय शकटेनाहरेन्निर्मन्थ्येन दग्ध्वा वा कृष्णाजिने ऽस्थीन्युपनह्याहतेन वाससा संवेष्ट्य दीर्घवंशे प्रबध्यानधो निदधानाः प्रयता मृन्मयपात्रभोजिनस्तमाहरेयुर्ग्राममर्यादायां[2] निधायाग्नीनाहृत्य पात्राणि तैः सह श्मशानं नीत्वा दहेयुरप्रमीतं प्रमीतमिति स्वजनाच्छ्रुत्वाकृतिदहनादि परिधानीयं कर्म कुर्युर्यद्यागतस्ततो जातकर्मोपनयनादिस्नानान्तं कर्म कृत्वा पूर्वामेवोपयच्छेत्तथाग्नीनाधाय पुनः सोमेन यजेत व्रात्येन पशुनेति[3] विज्ञायते । ॥ २३ ॥

आहवनीय आधीयमाने सूर्यस्कन्नः स्यादुपरक्तो वा शमनहोमान्त उद्वयं तमसस्पर्युदु त्यं चित्रमिति तिसृभिरुपतिष्ठेतैवं सर्वत्र वितते । यद्युच्छ्रियमाणे यूपे चषाले शकुनिः पतेत भूमौ वा पतेद्ब्रह्म प्रतिष्ठेत्याहुतिं जुहुयाद्यद्यन्यत्र पतेत्सर्वप्रायश्चित्तमेवानुद्रास्य हविःशेषाननूयाजार्थमाश्रावयेद्यद्वो देवा इत्याहुतिं जुहुयाद्यदि प्रणीताः स्कन्देयुरुपदस्येयुर्वापो

१ म्रियेत ज्ञायेत MLTAV; मृतज्ञायो H; ०हिताग्निमम्रियेत B.

२ ०पात्रभाजिनास्तमा० A; पात्राभाजिनस्तमा० H; ०पात्रे भोजनस्तमा० M पात्रे भोजिनस्तमा० TV; पात्रे भोजनास्तमा० L.

३ इति om. ML.

हि ष्ठा मयोभुव इति तिसृभिः पुनर्गृहीत्वा ततं म आप इत्याहुतिं जुहुयाद्यदि हुतो ऽधस्तात्पर्यावर्तेत[1] ब्रह्म प्रतिष्ठा मनस इत्येतया प्रतिष्ठाप्य स्रुवाहुतिं जुहुयाद्धुत्वा वा प्रतिष्ठापयेदाश्राव्यं[2] विनात्याश्रावितं च वषट्कृतानामुक्तहीनेष्वाश्रावितमत्याश्रावितमिति[2] स्रुवेण जुहुयात् ॥ २४ ॥

भागिनीदेवतानामनावाहितानां[3] मनसावाहयेद्यद्वो[3] देवा इत्याहुतिं जुहुयात्तथैव[4] पूर्णाहुतिं हुत्वा भागिनीं चावाह्य यजेद्यजमानस्यर्त्विजां वा स्वप्ने रेतःस्रावः स्याद्यदि गोमायवो ऽवादिषुरेकसृको ऽवादीदभिमृषाः स्मः परिधिं नः कुर्विति पालाशमिध्ममुपसमाधायेमं मे वरुणेति पञ्चभिराहवनीये जुहुयात्प्रजापते न त्वदिति षष्ठीमिमं जीवेभ्यः परिधिमिति दक्षिणतो ऽश्मानं परिधिं निदधाति नैयग्रोधमिध्मं राजन्यस्य राष्ट्रमर्यादायामाश्वत्थं वैश्यस्य क्षेत्रमर्यादायां यज्ञभ्रेष आगच्छेद्दार्शिकेषु[5] सर्वप्रायश्चित्तेष्विष्टेभ्यः स्वाहेत्यष्टावाहुतीर्जुहुयाद्यदि[6]

---

१ हुत्वोधस्तात्पर्यावर्ते or ०र्तौ MLTV; स्वप्नमन्नं हुतोधस्तात्पर्यावर्तेत H and nearly equally AB.

२ ? श्राश्राव्यं विनाव्याश्रावितं च वषट्कृतानामुक्तिहीरेष्वा० TV; ०श्राव्यं विनावाश्राव्यवतुं च वषट्कृतानामुक्तिरारेष्वा० M, ०श्राव्यं विना वाश्रावितुं च वषट्कृतानामुक्तिर्हेविष्वा० L; ०श्राव्यविनात्याश्रावितवषट्कृतानाम इत्युक्तानुक्तहीने श्रा० H; श्राव्यविनात्याश्रावित वषट्कृतानामित्युक्तानुक्तहीनेष्वा० A; श्रावितमत्याश्रावितं वषट्कृतानामित्युक्तानाक्तं हीने० B.

३ भागिनीं देवतानामनावाभ्यांनां यद्यावह्वयेद्यद्वो HB and similarly A; but for मनसा cp. Hir. and Āp. IX. 15. 23.

४ तस्यैव the Mss.

५ Thus TV; धार्मिकेषु MT; दार्शिकेषु LB; यर्शिकेषु A; H is deficient.

६ अष्टादशाहु० ML; अष्टावींहुतीं T; अष्टावींहुतिर्जु० V; अष्टावा० AHB.

दुःस्वप्नमन्यद्वा भयं पश्येदिहारान्तर्बहिर्वा यत इन्द्र भयामहे स्वस्तिदा विशस्पतिरिति द्वाभ्यां जुहुयाज्जपेद्वा । ॥ २५ ॥

यदि प्रवर्ग्यवत्यार्त्विज्यं कुर्यात्प्रवर्ग्यं वा सर्पेद्यदि वोपांश्वादिवाक्स्थानानां स्वराक्षरपदवृत्तभ्रेष आगच्छेदाभिर्गीर्भिरिति जुहुयादुपतिष्ठेत वानाज्ञाते प्रायश्चित्ते ऽनाज्ञातं पुरुषसंमित इत्येताभ्यां जुहुयादनाज्ञातदोषेषु कर्मसु यत्पाकत्रा मनसेति जुहुयाद्यदि[1] होमायोपसमिद्धेष्वग्निष्वहुतेषु यजमानो नाश्नीयाद्यद्यश्नीयाद्यत्ते वयं यथा ह तद्वसव इत्येताभ्यामाहुती जुहुयादुपतिष्ठेत वा । तदश्नीयाद्व्रातपतीभ्यां जुहुयात्[2] । स्कन्ने भिन्ने क्षामे विपर्यास ऊनातिरिक्ते ऽभिनिम्रुक्तो ऽभ्युदितः पर्याहितः परीष्टः परिवित्तः परिविन्नः परिविविदानो[3] वा सोमवामी सोमातिपवितो भक्षान्तरितो भक्षान्तरहितो वा द्वे मिन्दाहुती जुहोति मनो ज्योतिरिति वायाश्चाग्ने ऽस्यनभिशस्तिरिति मनस्वतीं वा जुहुयात् । ॥ २६ ॥

यद्याज्यमनुत्पूतं स्कन्देदजां दद्याज्जातवेदस इति दुर्गां वा जुहुयाद्यद्युत्पूयमानं छिन्दत्प्राणि दद्याद्यद्युत्पूतं चित्रं देयं । यदि स्रुग्गतं भूपतये स्वाहेति प्राञ्चं प्रादेशं निदध्याद्भुवनपतये स्वाहेति दक्षिणा भूतानां पतये स्वाहेति पश्चाद्भूतये स्वाहेत्युत्तरतो भूर्भुवः सुवरित्यूर्ध्वं । सं त्व सिञ्चामीति तत्संसिञ्चत्यभि-

---

१ यदि should be cancelled! Thoughtless repetition!

२ The purport of these two sentences is not clear!

३ After परिविविदानोवा HA ins.: परिददानः; ML: परिविविदासोदा; TV: परिविविद्नः; cp. Baudh. XXVII. 5 : 329. 5 with the critical note 2.

मन्त्रयते वा । यज्ञस्य त्वा प्रथमयाभिमया प्रतिमयोन्मया परिगृह्णामीति तत्परिगृह्णाति । देवाञ्जनमगन्यज्ञ इत्येके । सर्वत्र भूपतये स्वाहेत्येतेन स्कन्नमभिमन्त्रयते । यज्ञस्यैव तदार्त्या यजमानो वसीयान्भवति भूयसीर्हि देवताः प्रीणातीति विज्ञायते[1] । ॥ २७ ॥

यदि कपालं भिद्येत गायत्र्या त्वेति संधायोपरि गार्हपत्ये धार्यमाणे मनो ज्योतिरित्यभिजुहुयाद्भूमिर्भूमिमगादिति ब्रह्माभिमन्त्रयते । ऽभिन्नो धर्मो जीरदानुरिति भिन्नमपो ऽभ्यवहरेत् । त्रयस्त्रिꣳशत्तन्तव इत्यन्यत्संस्कृत्य कपालेष्वपिसृजति । यद्यसोमयाज्यार्त्विज्यं[2] कुर्वन् हुत्वापां[3] पुष्पमस्योषधीनामित्येतैराहवनीये[4] तिस्र आज्याहुतीर्हुत्वा वयꣳ सोम व्रते तवेति शिष्टमाज्यं भक्षयित्वा देवेभ्यः पितृभ्यः स्वाहेति दक्षिणाग्नौ प्रतिमन्त्रं जुहोति । तं जघनेन दक्षिणाप्रागग्रान्दर्भान्संस्तीर्य दधि ददाति[5] देवास इह मादयध्वमित्येतैः प्रतिमन्त्रमन्तरिताः पितरः सोम्याः सोमपीथादित्युपतिष्ठते[6] । कपालं चिकीर्षन्नथचक्राकृतिं सर्वतः षडङ्गुलं स्थानं कल्पयित्वा

---

१ See TS. II. 6. 6. 4.

२ ? यद्यसोमया० AHB; यदि सोमया० MVT, यसोमायाज्या० L.

३ ? हुत्वा all the Mss.

४ After एतैर् AHMB ins.: उपतिष्ठते ऽन्तरिताः पशव इति; LTV om. these words.

५ दधाति TV, निदधाति ML; missing in HAB.

६ Thus restored in acc. with Āp. XIV. 32. 3-4; the Mss. are wholly confused.

कपालवृद्धिह्रासौ कुर्वन् द्व्यङ्गुलोत्सेधं कारयेत्तेषामभिप्रथने[1] व्याहृतीभिर्जुहुयाद्यदि प्रयुक्तानां प्रागर्थकर्मणः कपालं नश्येदाश्विनं द्विकपालं निर्वपेद् द्यावापृथिव्यमेककपालं । भार्गवो होतैकहायनो दक्षिणा । मही द्यौः पृथिवी च न इति द्यावापृथिव्ययर्चा जुहुयादित्येके । ॥ २८ ॥

अधिश्रयणादूर्ध्वं व्याहृतीभिर्जुहुयाद्यदशृतं रुद्राय स्वाहेति । द्रवे वायवे स्वाहेति । निदग्धे निर्ऋत्यै स्वाहेति । यत्किंचिच्छृतं तेन प्रचरेद्यदि सर्वं दग्धमपो ऽभ्यवहृत्य मिन्दाहुती हुत्वान्यं निर्वपेदाज्येन वा प्रचरेद्यदि हविषा दिशमभ्युत्सिच्येत तत्तद्दिक्पतिभ्यो जुहुयात्सर्वतः सर्वाभ्यो जुहुयाद्धविरुद्वासयन्यतनखण्डादीन्परिहरेदपरिहरन्व्याहृतीभिर्जुहुयाद्यद्येककपालं परिवर्तेत स्कन्देद्वा प्रजापतेर्वर्तनिमनुवर्तस्वेति यथास्थानं रचयति । प्रति क्षत्रे प्रतितिष्ठामि राष्ट्र इति तं यजमान उपतिष्ठते । ऽस्कान्द्यौः पृथिवीमस्कानजनि प्राजनीति द्यावापृथिवीभ्यां जुहुयाद्यदि पत्नीः संयाजयन्कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत् । ॥ २९ ॥

यस्य पुत्रौ यमौ गावौ वा जायेयातां मारुतं त्रयोदशकपालं निर्वपेन्मरुतो यद्ध वो दिवो या वः शर्मेति याज्यानुवाक्ये । पूर्वं स्रुगापादनादन्तर्वेद्यासीनः पश्चाद्धविर्भ्यश्च जुष्टो वाचो भूयासमित्येषा । इमामेवाश्विना यज्ञस्य यद्वाचो यद्दुरिष्टम् । तदश्विनौ भेषजेन संधातारौ स्वाहा ॥ त्रातारमिन्द्रमित्येषा । यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः । देवास्त-

१ ॰भिप्रभने TV; ॰प्रथने ML; ॰प्रथमने AH; B incomplete.

च्छमयन्तु सर्वꣳ सोमो बृहस्पतिश्च स्वाहा ॥ यद्विद्वाꣳसो यद्विद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताꣳ स्वाहा ॥ यदन्तरिक्षं पृथिवीमुत द्यामित्येषा । ब्रह्मत्वे हौत्र आध्वर्यव आग्नीध्र[1] एक[1] एव यज्ञे पर्याणि तं मे देवा रक्षन्तां प्राणान् मे मा मा हिꣳसिषुः स्वाहा ॥ अहं ब्रह्माहꣳ होताहमध्वर्युरहमाग्नीध्रो ऽहं यजमानः पत्नी च एक[2] एव यज्ञे पर्याणि तं मे देवा रक्षन्तां प्राणान्मे मा मा हिꣳसिषुः स्वाहेत्याज्यस्थाल्याः स्रुवेणादायैकाध्वर्यव-प्रायश्चित्तानि[3] हुत्वा जुहूपभृतावादाय समिदाद्याः सर्वदेवता यजेत । ॥ ३० ॥

समारोपितेष्वग्निषु[4] षण्मासविच्छेदे ऽग्नये शुचये पवमानाय तन्तुमते पथिकृते ऽष्टाकपालान्पुरोडाशान्निर्वपेद्वैश्वानरं द्वादश-कपालं । नित्यहोमदर्शकाग्रयणनिरूढपशुबन्धचातुर्मास्यसौत्रा-मणिसोमेषु बहुशो विच्छिन्नेष्वेतेषु तदेवान्वारम्भणीयं च कृत्वाग्नीन्संदधीत । पुनराधेयमग्न्याधेयं वा कुर्यादित्येके । जन्तुभिर्मन्थनेन वारणी अनुपयोग्यौ[5] भवतस्तावन्यौ नवारणी[6] आहृत्य पौर्णमास्याममावास्यां वेष्ट्वा पुराणे अरणी गार्हपत्ये

---

१ ०ग्नीध्रायैक MLTV; ०ग्नीधाय एक A; ०ग्नीध्रीय एव H; ०ग्नीध्रयमाक एव B.

२ With hiatus in all the Mss.

३ ०काध्वरप्राय० the Mss.

४ समारोपितेग्निषु the Mss.

५ ०योग्यौ AH; ०योगौ MLTV; ०योग्यो B.

६ Thus the Mss. (only TV तावन्यानवा०).

अञ्जाल्य दक्षिणेनोत्तरामरणीमादाय[1] सव्येनाधरामरणीमुपर्युपर्यग्नौ[1] धारयन्नाजुह्वान उद्बुध्यस्वाग्न इति द्वे विश्व स्वां योनिमिति[2] संनम्य जपेत् । ॥ ३१ ॥

अयं ते योनिर्ऋत्विय इति वा समारोप्यानुगमयित्वा गार्हपत्यं मथित्वाग्निं निधायाहवनीयं विहृत्य तत्र संतनिं[3] जुहुयादग्नये तन्तुमते ऽष्टाकपालं निर्वपेदन्त्यजात्यमेध्यवायसादिस्पर्शने ऽरण्योर्नाशस्तावुत्सृज्य भवतं नः संमनसावित्यप्सु निमज्जयेदन्यौ नवावाहृत्याग्न्याधेयं कार्यं । तन्तुमानित्येके । यस्य पशुर्हीयेत[4] रौद्रं वास्तुमयं चरुं निर्वपेत्कृष्णाजिनं दक्षिणा । यो ब्रह्मचार्यवकिरन्स नैर्ऋतं प्राजापत्यं वा गर्दभं पशुमालभेत । भूमौ पुरोडाशं अर्पयेन्नास्य कपालमप्स्ववदानैश्चरन्ति । पाकयज्ञेन वा निर्ऋतिं यजेत । यो ऽदक्षिणेन यज्ञेन यजेत मृतस्तस्य यज्ञो ऽनायुर्यजमानः स्याद्वरां दद्यात् । ॥ ३२ ॥

यदृक्तो यज्ञ आर्तिमियाद्भूरिति गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव इत्यन्वाहार्यपचने । यदि सामतः सुवरित्याहवनीये । यदि सर्वतः सर्वास्तदिदं सर्वप्रायश्चित्तं सर्वत्र समभ्युच्चीयते । स्तेनो ऽभिशस्तो ऽभिशस्यमानो मृगारेष्ट्या यजेत पुरा प्रणीताभ्यो येन देवाः पवित्रेणेति चतुर्गृहीतं जुहोति प्राजापत्यं पवित्रमिति चेन्द्रः सुनीती सह मा पुनात्विति चाग्नये ऽंहोमुचे

---

१ The Mss. sometimes अरणि, sometimes अरणी.

२ ? विश्वयोमेतानी (or नि)मिति MLTV; विश्व स्वा योनिमित H; विश्वस्ययोनिमिति AB.

३ संतनिं LTV; संतति AB; संतनं M; संततति H; संततिर्जु० B.

४ पशुर्हीयेत MLV; ०शुर्भियेत AB; ०शुर्ह्रियेत T; पशूर्ह्रीयेत H.

ऽष्टाकपालमिति दशहविषमिष्टिं निर्वपति ˈ तां मृगारेष्टिमाचक्षते ˈ सप्तदश सामिधेन्यो ऽपामिदं न्ययनं नमस्ते हरसे शोचिष इति पावकवत्यौ धाय्ये ˈ अग्नी रक्षांꣳसि सेधति यत्ते पवित्रमर्चिषीति प्रथमस्याज्यभागस्य ˈ यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्विय ज्या कलशेषु धावति पवित्रे परिषिच्यते । उक्थैर्यज्ञेषु वर्धत इत्युत्तरस्याग्निर्मन्वे प्रचेतस इति हविषां याज्यानुवाक्या भवन्ति ˈ ॥ ३३ ॥

पुरस्तात्स्विष्टकृतः पवमानः सुवर्जन इत्याज्याहुतीरुपजुहोति ˈ यत्ते वयं यथा ह तद्वसव इति संयाज्ये ˈ दक्षिणाकाले हिरण्यं ददाति ˈ पत्नीसंयाजेषु पुरस्ताद्गृहपतेर्यद्देवा देवहेडनमित्याज्याहुतीरुपजुहोति ˈ मृगारेष्टिः संतिष्ठत ˈ उक्तः पशुर्यदि न लभ्येताग्नेयीं वैष्णवीमैन्द्रीं[1] वायव्यां प्राजापत्यामैन्द्रावैष्णवीमिति कृत्वा तमेवोपकल्पयेदुपाकृतो वाश्येत यदस्य पारे रजसो यस्माद्भीषावाशिष्ठा इति द्वे आहुती जुहुयाद्यदि वेपेत यस्माद्भीषावेपिष्ठा इति द्वितीयां ˈ यदि पलायेत यस्माद्भीषा पलायिष्ठा इति ˈ यदि संज्ञपनं न कामयीत[2] यस्माद्भीषा समज्ञास्था इति ˈ यदि शकृत्कुर्वीत यस्माद्भीषा शकृदकृथा इति ˈ यदि मूत्रं कुर्वीत यस्माद्भीषा मूत्रमकृथा इति ˈ य इदमकस्तस्मै नमस्तस्मै स्वाहेति सर्वत्र तृतीयां ˈ यदि निषीदेदग्निहोत्रवत्कार्यं ˈ मैत्रावरुणदण्डेनोदुस्र तिष्ठेत्युस्रमुत्थापयेत् ॥ ३४ ॥

---

१ After वैष्णवीं H ins. आग्नावैष्णवीं.

२ Thus BHA; यदिसंज्ञपनान्मनच्छ्रियत ML.

अन्येन वौदुम्बरेणोन्मेष तिष्ठेति मेषमुदंश्व तिष्ठेत्यश्वमुच्छाग तिष्ठेति छागमुदश इति वशां । यदि पूर्वं पर्यग्निकरणान्म्रियेत याश्वमेधे प्रायश्चित्तिस्तां कृत्वाथान्यं तादृशं पशुमालभेत । तस्योपाकरणादि समानं निर्मन्थ्य सामिधेनीतच्छेषाघारसंप्रैषसंमार्गप्रवरप्रयाजवर्जं । यदि तादृशं न लभेताजावयो गोश्वा इत्यन्योन्यस्य प्रतिनिधयो भवन्ति । यदि प्रतिनिधिं न लभेताज्येन संस्थापयेच्चतस्र आशाः प्रचरन्त्वग्नयो न वा उवेतन्म्रियस आशानां त्वा विश्वा आशा इति मृतं शरीरमप्सु प्रवेशयति । यदि वपा हृता[1] नष्टा वा स्यादुद्यन्त्सुपर्णो न विभाति सर्वमिति चतुर्गृहीतं जुहोति । ॥ ३५ ॥

तत्स्थाने यदवशिष्टं स्यात्तेन मेदसा प्रचरेत्ततो यदि तां लभेत न तदाद्रियेत । यदि वपा हविरवदानं वा स्कन्देदा त्वा ददे यशसे वीर्याय चेत्यादाय यस्ते द्रप्सो यस्त उदर्ष इति जुहोति । यद्यसंस्थिते शकुनिश्चषालमुपविशेच्चषालं[2] प्रक्षाल्य यूपं प्रोच्छ्यापवस्व[3] सोमपीतये गातुमस्मै यजमानाय विन्द[4] स्वाहेति चतुर्गृहीतं जुहोति । स्कन्ने पृषदाज्ये पात्रं निर्णिज्य पृषदाज्यमन्यमभिगृह्य[5] मनो ज्योतिरित्याज्यं जुहुया-

---

१ कुनिहृता H, which points to शकुनि०; कूनिभूत० B, with lacuna of one aksara before कू०.

२ ०लमुपवि० the Mss. ? ०ल उप० ? see Baudh.

३ प्रोच्छ्योपवस्व H; प्रोच्छ्यवपस्व A; प्रोच्छ्यवपध्वव: ML; प्रोच्छ्यपध्वव: TV; प्रोच्छ्यापस्ववस: B.

४ विंद् LTV; विंदन् MAHB.

५ अन्यम् all the Mss.

